हरिश्चन्द्रनिस्तन्द्रमहाभागाः ... विद्यज्योतिषः
...मवर्षादारभ्य अद्य यावत् सततं पत्राय वार्षिक शुल्कन्तु प्रेष्यंत
... परन्तु काले २ शुभावसरेष्वपि विशिष्टार्थिकसहयोगः
...यते । सेवानिवृत्ता अपि एते संस्कृतशिक्षकाः सततं
...व्रत धारयन्ति । सहैव काले २ लेखकाव्यादिभिरपि
...त्रमिदं वर्धयन्ति । स्व चक्षुश्शल्यचिकित्सासाफल्यावसरेऽधुनापि
...तैः अर्थराशिः प्रहितस्तत्कृते कार्यालयोऽनुगृहीतोऽस्ति ।

—★—

# दिव्यज्योतिः

संस्कृतस्य सचित्रमासिकम्
शिमला, अक्तूबर, १९८६,
वर्षम् ३१ - अङ्कः १



संस्कृतशोधसंस्थानशिमलायाः वार्षिकोत्सवकाले समारोहोद्घाटकाः हिमाचलस्य पूर्वराज्यपाला श्रीहोकिशे सेमामहाभागाः संस्कृतस्य महत्वं प्रतिपादयन्तः ।

# विषयानुक्रमः



---

## परिचयः


संस्थापका: तथा आद्यसम्पादका: आचार्यश्रीदिवाकरदत्त शर्माण: दूरभाष 3859

प्रधानसम्पादक:— प्रा० केशव शर्मा एम. ए., एम. फिल. साहित्यरत्नम्, 8-200

दिव्यज्योति: कार्यालय भारती विहार:, मशोबरा, शिमला-७ (हि.प्र.)

मुद्रक: प्रकाशक:—

भारतीमुद्रणालय भारती विहार, मशोबरा-१७१००७ शिमला (हि.प्र.)

स्वामी :—श्रीमती आचार्य रत्नकुमारी शर्मा

अक्तूबर, १९८६ कार्तिक २०४३ — वर्षम्-३१ अङ्क: १

वार्षिक मूल्यम् २० रु०

# श्रीरामवन्दनम्

श्रीमती उमा पाण्डेय

अयोध्या लीला - स्थली यस्य
कौशल्यानन्द–वर्धनम्
नमामि रामं नित्यम्
शुभ - जीवन - साधकम् ।१।

श्रीयुतं तं दाशरथिम् -
गुरू सेवा - परायणम्
नमामि रामं नित्यं वै
संत - रक्षण - तत्परम् ।२।

मानवेषु नहि भेदः
येन एतत् प्रमाणितम्
नमामि रामं नित्यम्
सर्वेषां सुहिते रतम् ।३।

धनुर्वेदे सर्व - श्रेष्ठम्
वनवासेऽपि - हर्षितम् -
नमामि रामं नित्यम्
दुष्ट - जन - संहारकम् ।४।

उपाध्यक्ष, सार्वदेशिकसंस्कृतसमन्वयसमिति, समन्वयकुटीरम्
ई० १०५२ राजाजीपुरम्
लखनऊ २२६०१७

# संस्कृतसाहित्ये दूतकाव्यानि

श्रीमती शकुन्तला अवस्थी
एम. ए. बी. टी.

दूतकाव्यं, सन्देशकाव्यं वा गीतिकाव्यम् अथवा विरहकाव्यमपि कथ्यते। अस्मिन् विरहः प्रधानः भवति संगीतस्य तरंगम् उत्पादयितुं च मन्दाक्रान्तामालिनी-प्रभृतीनां छन्दसां प्रयोगः क्रियते। परदेशे निवसतः नायकस्य नायिकायाः वा दूतद्वारा निजप्रियतमं प्रति सन्देशप्रेषणम् एषां काव्यानां प्रमुख विषयः भवति।

"सन्देशस्तु प्रेषितस्य स्ववार्ता– प्रेरणं भवेत्।"

उत्तरभारतात् बंगालपर्यन्तस्य संस्कृतसाहित्यस्य यस्याः काव्यधारायाः सृजनं दूतकाव्यस्य रूपे अभवत्, तस्या एव रचना दक्षिणभारते लंकायां च सन्देशकाव्यरूपे क्रियते स्म। कुत्रचित् तस्यां 'मेघदूतम्', 'पवनदूतम्', पिकदूतम् रचितानि। कुत्रचित् च 'हंससन्देशः', 'पिकसन्देशः', शुकसन्देश प्रभृतयः लिखिताः। दूतकाव्येषु कविभिः न केवलं पशुपक्षिणाम् एव अपितु जड़पदार्थानामपि प्रयोगः स्वतन्त्रतया कृतः। कालिदासेन मेघदूते स्पष्टं कथितम् अस्ति "कामार्ता हि प्रकृति कृपणाश्चेतनाचेतनेषु।"

प्रथमतः ऋग्वेदे सरमासंज्ञकशुन्या दूतकार्यंकरणस्य वर्णनं मिलति तत्पश्चात् वाल्मीकिरामायणे रामेण पवनपुत्रः दूतम् कृत्वा सीतां प्रति प्रेषितः। महाभारते अपि श्रीकृष्णः पाण्डवानां दूतरूपेण दुर्योधनस्य सभायां गच्छति। नलोपाख्याने च हंसः नलात् दमयतीं प्रति सन्देशप्रापणस्य कार्यं करोति भागवतेऽपि सन्देशकाव्यस्य रूपं मिलति। विरहे मातुरनन्दयशोदा आकुलगोपीश्च सान्त्वनाय कृष्णेन स्वसखा उद्धवः सन्देशवाहकरूपे मथुरायाः गोकुलं प्रेषतः।

संस्कृतसाहित्ये कालिदासस्य 'मेघदूतम्', घटखर्परस्य 'घटखर्परम्' च दूतकाव्यस्य सन्देशकाव्यस्य वा प्रथमकृती स्तः। अनयोः द्वयोः परवर्तिदूतकाव्यसाहित्ये बहुः प्रभावः दृश्यते। कृष्णमाचार्यस्य 'मेघसन्देशविमर्शः' कृष्णमूर्ते 'यज्ञोल्लासः' रामशास्त्रिणः 'मेघं प्रतिसन्देशः' रामचन्द्रस्य 'घनवृतम्' मैथिलकविमहोपाध्यायपरमेश्व-रस्य 'यक्षसमागमम्' इत्यादयः अस्य प्रभावस्य परिचायकाः विद्यन्ते।

बौद्धानां जातकसाहित्येऽपि पक्षिभिः सन्देशप्रेषणस्य वर्णनं मिलति। अत्र जैन-कवी [illegible] परम्परायाँ विशेषः योगः अभवत्। कवेः जिनसेनस्य 'पार्श्वाभ्युदयः' विक्रमकवेः 'नेमीदूतम्' सुन्दरराज्याः 'शीलदतम्' कस्यचित् अज्ञातनाम्नः कवेः 'चेतोदूतम्' कविविमलकीर्तेः च 'चन्द्रदूतम्' अस्यां परम्परायां उदाहरणीयानि सन्ति।

सन्देशकवीनां प्रौढ़परम्परायाः प्रारम्भ त्रयोदशशताब्द्यां अभवत । कविधोयि 'पवनदूतम्' अस्याः शताब्द्याः प्रथमं प्रभावशालिश्च सन्देशकाव्यम् अस्ति । तत्पश्चात् अवधूतरामेण 'सिद्धदूतम्' कविविष्णुदासेन 'मनोदूतम्' माधवकवीन्द्रभट्टाचार्येण 'उद्धवदूतम्', रूपगोस्वामिना उद्धवसन्देशः' अस्य एव नाम्न. अपरेण विदुषा रूपगोस्वामिना हंसदूतम्' रुद्रन्यायवाचस्पतिना 'पिकदूतम्' श्रीवादीराजेन पवनदूतम्' श्रीकृष्णसार्वभौमेन च 'पादाङ्कदूतम्' लिखित्वा इयं परम्परा उज्ज्वलिता ।

अस्याः व्यापकविस्तारः परवर्तिभिः अनेकैः कविभिः कृतः, यथा लंबोरखेदेन 'गोपीदूतम्' त्रिलोचनेन 'तुलसीदूतम्' बैदनाथद्विजेन अपरं तुलसीदूतम्' हरिदासेन 'कोकिलदूतम्' सिद्धनाथविद्यावागीशेन पवनदूतम्' कृष्णनाथन्यायपञ्चाननेन 'वातदूतम्' भोलानाथेन 'पांथदूतम्' रामदयालतर्करत्नेन 'अनिलदूतम्' अम्बिकाचरणदेवशर्मणा 'पिकदूतम्' गोपालशर्मणा 'काकदूतम्' गोपेन्द्रनाथगोस्वामिना 'पादपदूतम्' अयलोकमोहनेन 'मेघदूतम्' कालिप्रसादेन 'भक्तिदूतम्' रामगोपालेन काकदूतम्' अजितनाथन्यायरत्नेन 'बकदूतम्' रघुनाथदासेन 'हंसदूतम्' इत्यादिसन्देशकाव्यानां रचनाः कृता ।

रामकथायाः प्रसंगेऽपि पर्याप्तमात्रायां दूतकाव्यानि लिखितानि, येषु वेदान्तदेशिकस्य 'हंससन्देश' न्यायिकरुद्रवाचस्पतेः 'भ्रमरदूतम्' वासुदेवस्य 'भ्रमरसन्देशः' तर्कालंकारस्य चन्द्रदूतम्' नित्यानन्द शास्त्रिणः 'हनुमद्दूतम्' च प्रसिद्धानि सन्ति ।

तथैव कानिचित् अप्रसिद्धानि सन्देशकाव्यानि अपि मिलन्ति, येषां साहित्यस्य इतिहासकाराः नाममात्रेणैव उल्लेखं कुर्वन्ति । शुकसन्देशस्य स्थान ईदृशेषु काव्येषु आगच्छति अस्य नाम्नः सन्देशकाव्यानि विविधकविभिः लिखितानि आसन्, यथा महादेवकविना रंगनाथकविना, लक्ष्मीदासेन, कवयित्र्या त्रिवेण्या च ।

पञ्चदशविक्रमशताब्द्यां मालावारस्य एकेन भावुकेन कविना श्रीलक्ष्मीदासेन (यः मालाबारस्य प्रथमकोटेः काव्यकार मन्यते) शुकसन्देशस्य रचना कृता । 'मेघदूतम्' इव 'शुकसन्देशः' अपि द्वयोः भागयोः विभक्तः अस्ति । प्रथमभागे केवलं मार्गवर्णनं मिलति द्वितीये च नायिकायाः विरहावस्थासन्देशकथनयोः विधानम अस्ति ।

एवं संस्कृते रचितानां दूतकाव्यानां इमां दीर्घपरम्परां दृष्ट्वा अस्य लोकप्रियता स्पष्टम् अनुमीयते । यद्यपि विभिन्नविद्वद्भिः अस्मिन् विषये पर्याप्तप्रकाशः पातितः तथापि अस्याः विस्तृतसर्वेक्षणस्य आवश्यकता अद्यापि वर्तते ।

— राजकीयम प्राच्यनव्य भाषा संस्थानम्
पटियाला (पञ्जाबः)

# श्रीरामनवमी दशावतारश्च

श्री जगत्रवि शास्त्री, जम्मू कश्मीर

सदानन्दाम्बोधेरुदयति परा सत्यलहरी,
प्रसूते भावोघं धरति हरते सत्यवपुषा ।
प्रयाता कौशल्यां निजरतजनं पातुमनिशं,
महाशक्तिः सैषा जगति जयताद्रामवपुषा ।१।

हे जानकी प्रियपते नरदेववर्य,
हे लक्ष्मणाग्रज वने कृतवासजिष्णोः ।
हे राम दैत्यकुलनाशनदीनबन्धो,
पादौ नमामि तव रामभवाब्धिपोतौ ।२।

हे राघवेन्द्ररघुनन्दनवारिजाक्ष,
हे ताटकावधकर त्रिपुरारिपूज्य ।
हे त्यक्तराज्य भरतार्पितराज्यभाव
पादौ नमामि तव राम भवाब्धिपोतौ ।३।

हे चित्रकूटकृतवास जटायुबन्धो,
हे बालिनाशन खरदूषणनाशकारिन् ।
हे पद्मकान्त मुनिपत्निसमर्चिताङ्घ्रे,
पादौ नमामि तवराम भवाब्धिपोतौ ।४।

हे रावणान्तक विभीषणदत्तराज्य,
हे वायुपुत्र हृदये धृतपादपद्म ।
पादौ नतोऽस्मि तव राम जटायुबन्धो,
हे पुष्पके प्रतिनिर्वर्तितपितृराज्य
पादौ नमामि तव राम भवाब्धिपोतौ ५।

हे भार्गवद्विजकुलोद्भवपूतपाद,
हे नारदादिमुनिसेवितपादपद्म ।
पादौ नमामि तव रामभवाब्धिपोतौ ।६।

हे वामनप्रणनकल्पतरो दयाब्धे.
हे मत्स्यकूर्मनरसिंहवराहमूर्ते ।
हे राम राम जिनकृष्ण सुकल्किमूर्ते,
पादौ नमामि दशमूर्तिधर त्रिमूर्ते ।७।

हे राजहंस पुरुषोत्तमजातवेदः
हे सोम सूर्य शुकनारदयज्ञमूर्ते ।
हे व्यासदत्तकपिलादिकृतावतार,
पादौ नमामि तव रामभवाब्धिपोतौ ।८।

मग्नं भवाब्धौ भवतापतप्तं
कामादिभिर्मत्स्यभषैश्च दष्टम् ।
ममत्वशैवालगृहीतपादं
मां पातु नौका तवपादपूता ।९।

मोहान्धकारात्स्वकटाक्षरज्ज्वा,
भवाब्धिकूपात्कृपया मुरारे
समुद्धर मां पशुवन्निमग्नं
परोपकारो महतां स्वभावः ।१०।

व्याप्नोषि सर्वं जगदात्मशक्त्या
घृतं यथा क्षीरगतमव्यक्तम्
भवेत्त्वदन्यो भवतारको कः
परोपकारो महतां स्वभावः ।११।

शमनतापहरः प्रथितो भवान्
वसति कालभयं हृदये मम ।
सकलतापहरोऽभयदो भवान् ,
शमय कालभयं मरणप्रदम् ।१२।

---

जन्म कुण्डली, वर्षफल व विवाह लग्नपत्रिका के रंगीन बेलदार फार्म ५० रु० प्रतिशत मूल्य में प्राप्य । डाकव्यय पृथक् । वी. पी. पी. द्वारा भेजे जाते हैं ।

— प्रबन्धक
संस्कृत शोध संस्थान
भारती विहार, मशोबरा
शिमला - ७ (हि. प्र.)

## निवेदनम्

कृपया वा० शुल्कं शीघ्रतया प्रेषयित्वा अस्माकं साहाय्यं विधेयम् ।
सम्पादकः

डा० सुरेन्द्र अज्ञातः

१. एकः क्रीडारंग — व्यवस्थापकः (सरकस-मैनेजर) स्वीयमनुचरमेकमवदत्— "अस्माकं वानरनिर्भरं द्रव्यवाहनमागमिष्यत्यधुनैव, वाहनचालको न जानाति मार्गं पूर्णतया तेन त्वं मुख्यराजमार्गे अवतिष्ठ, यदा वाहनमायाति तमत्रानय" अनुचरस्तत्रातिष्ठच्चिराय; परं न तत्रागतं वाहनम् , काले महति गते स एकं जनमपृच्छत् — "अपि भवता दृष्टमेकं वानरनिर्भरं द्रव्यवाहनम् ?" स जनो वदति "किमर्थं पृच्छसि ? किं त्वं ततो भ्रष्टो जातः ?"

२. अध्यापकः अस्त्रशस्त्रयोरर्थभेदं स्पष्टीकरोति— यद् अस्यते क्षिप्यते, तद् अस्त्रं, यथा शरम्, यद् हस्तेन गृहीत्वा प्रयुज्यते तद् शस्त्रम् , यथा असिः। 'भवतां व्याख्यानुसारं उपानद् अस्त्रमुत वा शस्त्रम् " इत्येकः शिष्य पृच्छति ।

३. ग्राहकः (वस्त्रविक्रेतारं प्रति) एतादृक् वस्त्र दर्शय यद् अल्पमूल्यं दीर्घकालस्थायि च, यस्य विषये पितामहः क्रीणाति, पौत्रश्च धारयतीति कथनं चरितार्थं भवेत्, वस्त्रविक्रेता (भृत्यं प्रति) राम, शाण (टाट) दर्शयास्मै ।

४. गुरुः (स्वं नवं शिष्यं प्रति) दुष्टैः कर्मजनो नरकं प्राप्नोति पुण्यैश्च स्वर्गं गच्छति, अतः त्वया पुण्यैः स्वर्गं गमनीयम् ।

शिष्यः (गुरुं प्रति) गुरुवर्य, पुण्यैरहं स्वर्गं गमिष्यामीति नास्ति संदेहलेशः, परं सवर्णैः हीनस्य मे तत्र स्थानमप्युचितं भवेत् ?

५. अध्यापक — अपि यूयं 'जीवेषु दया कार्या' इत्यस्य नियमस्य पालनं कुरुथ ?
एकश्छात्रः—बाढम् , ह्यो मया कुक्कुरताडनव्यासक्तः स्वीयोऽनुजस्ताडितः

६. बसयानमारूढां महिलामेकां संवाहक एक आह- आसनं उपविशतु भवती ।
क्षन्तव्योऽयं जनः, श्रीमन् नाहमत्रोपवेष्टुमागता, यत गृहे कार्यवशान्मया तत्र शीघ्रं गंतव्यमस्ति' इति प्रत्युत्तरति महिला ।

७. राजेशः - मित्र, त्वं सदैव विवदसि मया ।
रमेश – कच्चित्त्वया विस्मृतं यदस्माकं प्रथमं मिलन वादविवादप्रतियोगितायामभूत् ।

एका लघुकथा

# त्वमसि मम स्वसा

(डा. रूपनारायण पाण्डेयः, रा: इ. का.
सितारगञ्जः, नैनीतालम् उ. प्र.)

●

विवाहोत्सवः तस्य दुहितुरभूत् । सर्वे सम्बन्धिनः सुहृदः सखायश्च समाजग्मुः । विष्णुदत्तस्य सदनं राजसदनमिव समलङ्कृतमासीत् । तस्य नाम पृच्छन्त्येका तरुणी सौम्यवदना गाम्भीर्योपेता तत्रागमत् । 'ममेयं भगिनी' इति तेनोक्तायाः तस्याः विशिष्टः सत्कारस्तस्य (विष्णुदत्तस्य) जायया प्रश्रयपूर्वकं विहितः । विष्णुदत्तस्येयं भगिनी पूर्वं केनचिदपि न दृष्टाभूदिति हेतुना सर्वे तत्रोपस्थिता जना चकिता अभूवन्, किन्तु तस्मिन्नवसरे कोऽपि रहस्यमिदं ज्ञातुं न शशाक ।

एकदा पट्टिकाशकटेन विष्णुदत्तो गोरक्षपुरं गच्छन् आसीत् । शयनकक्षे तस्यासनमारक्षितमभूत् । सुखासीनं तमवलोक्य युवत्येका भ्रातः, किमहमत्रोपविशेयम् ? अतिश्रान्तास्मि । देहि मह्यमपि स्थानं किञ्चित् ।' इति तस्मै सविनयं न्यवेदयत् । तत्प्रार्थनामङ्गीकृत्य तां च परिश्रान्तां नारीमवगम्य तः स्थानमुपवेशनार्थमदात् । किञ्चिद् विश्रम्य तया पृष्टम्—

'भ्रातः, अत्र भवान् कुत्र गच्छति ?'

'स्वसः, अहं गोरक्षपुरं गच्छामि ।'

'तत्र तव किं कार्यमस्ति ? मयापि तत्रैव गम्यते ।'

'तत्राहमेकस्मिन् प्रशिक्षणे यामि । त्वं किमर्थं यासि ?'

'तत्राहमेकस्मिन् पूर्वमाध्यमिकविद्यालयेऽध्यापिकास्मि । दीपमहोत्सवे स्वगृहं लक्ष्मणपुरं गतवती अभूवम् ।'

'गोरक्षपुरेऽहं कुत्र वसेयम् ? अहं तु तत्र प्रथमं मु यामि ।'

'भ्रातः, निवासाय कापि चिन्ता नैव कार्या । यत्राहं वसामि, तत्रैकः, प्रकोष्ठोऽस्ति । भवता तस्मिन् प्रशिक्षणकालं यावत् सानन्दं स्थातुं शक्यते ।'

'भगिनि! तव परिचयाद् धन्यधन्योऽस्मि। पुनः कात्रभवती मयावगन्तव्या।'

'जनाः मां विनीतेति वदन्ति। अत्रभवान् कोऽवगन्तव्यः?'

'विष्णुदत्त इति जनैरुच्यतेऽयम्।

गोरक्षपुरमञ्चं प्राप्य स तया सार्धं तस्या वासप्रकोष्ठं जगाम। प्रकोष्ठान्तरे तस्यावासव्यवस्था विहिता। विनीता तेषु दिवसेषु सायङ्काले तस्य प्रकोष्ठं प्रविश्य तेन साकं विविधा वार्ताश्चकार। एकस्मिन् दिने विष्णुदत्तस्यैवोपस्थितौ तामपृच्छत्—'भगिनि! मम मनस्येका जिज्ञासा बलवती वर्तते। यदि नातिखेदकरं स्यात्, तर्हि ब्रूहि। अत्र त्वं कथमेकाकिनी वससि? कुत्रवर्तते तव पतिः? किं च करोति सः?'

मुहूर्तं तूष्णीं स्थित्वा विषण्णवदना सा वस्त्राञ्चलेनाश्रूणि परिमार्जयन्ती मन्दं मन्दमुवाच—'भ्रातः, किं कथयामि? दैवहतास्मि। दुःखपूर्णजीवितमस्ति। मम पतिरेकश्चिकित्सकोऽभूत्। विवाहाद् वर्षत्रयानन्तरं स मां कृष्णा कुशीला चेत्युक्त्वा परितत्याज। स एकां धनोपेतां रूपवतीं रमणीं परिणीतवान्। ततः प्रभृत्यहमेकाकिनी खल्वध्यापनेन नीरसं क्षुद्रं जीवितं कथमपि सर्वाणि दुःखान्यनुभवन्ती यापयामि। जीवितं शून्यजीर्णारण्यमिव वर्तते। किं करोमि? कुत्र गच्छामि? किं च वदामीति निर्णेतुं न शक्नोमि। मम मन्दभागाया अन्तर्गूढां पीडां कथमयं लोकोऽवगच्छतु? इदानीं त्वया सह संलापेन कथञ्चन मनो विनोदयामि। मम दुःखमये संसारे त्वमेको नवजीवनस्य नव उत्स इवागतोऽसि 'प्रसीद मयि' इत्यभिधाय तच्चरणयोः तया शिरो निहितम्। सः 'भगिनि! मा मैवं विलप उत्तिष्ठ' इत्युक्त्वा तां कराभ्यां परिगृह्योत्थापयामास, समाश्वासयन् च तां शोकाभिभूतां शनैश्शनैरुवाद—'मा शोचीः इदं जगद् दुःखमयमेवास्ति। कदाचिदेव सुखस्य कणिका लभ्यते। अयमेव जनो सर्वं सहते संसारे निशाया अवसाने प्रभाते भुवनभास्करः उदयति, नश्यति च तमोऽखिलम्। त्वमेका बुद्धिमती नारी असि। प्रभोः कृपया तव वर्तते जीविकायाः साधनमेकम् पश्य संसारम्—वस्तुतोऽत्र कोऽस्ति सर्वथा सुखी? कस्यचित् सुतो नास्ति, कस्याश्चन पिता, नास्ति, कोऽपि विधुरोऽस्ति, कापि च विधवास्ति। मा विचिन्तय 'परमेश्वरः सर्वं शुभं विधास्यति।'

कथञ्चन समाश्वस्ता सा तच्छयनीये निपत्य चिन्तयामास—'कीदृशं मम जीवितमस्ति—सर्वतोऽन्धकारपूर्णम्। पत्या परित्यक्तास्मि' स गौरीं कामयते धिक् मम शरीरं कृष्णवर्णम्। किं लोके शारीरिकं सौन्दर्यं किल सर्वमस्ति? जनाः सौन्दर्यमभिलषन्ति, न हृदयं विशुद्धम्। मया शरीरेण साकं तस्मै विमल

हृदयं समर्पितम् । मम पूतं प्रेम तस्मै नारोचत । सा रमणी धनवैभवोपेता-लङ्कारप्रिया गौरवर्णा चास्ति । यावत्तस्यां धनं यौवनं सौन्दर्यं च वर्तते, तावत् स तस्यां रमेत तेन तया च मम जीवितं नष्टं कृतम् । नारी नार्याः वेदनां न ज्ञातवती । उद्वाहात् प्राक् मया कः स्वप्नो दृष्टोऽभूत् । मम पतिश्चिकित्साशास्त्रमधीते । शीघ्रं वत्सरेणैव स चिकित्सको भविता । धनस्य सुखस्य सम्पत्तेः स्नेहस्य चापि कोऽप्यभावो न भविष्यति । सौभाग्यनिशायां तेन कुटिलेन कथं मयि निर्भरं स्नेहः प्रदर्शितः तस्याहं किं नाभूवम् ? मया चिन्तितम् —तेन सार्धं ममाशेषं जीवितं सर्वतः सुखमयं स्यात्, किन्तु तस्मिन् चिकित्साधिकारिपदे नियुक्ते सति तस्य जीविते नवो वसन्त आगतः । रूपवती यौवनमदोन्मत्ताः परिचारिका आत्मानं परितोऽवलोक्य तस्य मय्यनुरागः क्षीणतां गतः पुरुषः कथं सर्वार्थपरो भवति ? तेन मम सम्पूर्णं समर्पणं विस्मृतम् । अहं नारी अस्मि । ईश्वरेणापि नार्याः कृते सर्वे नीतिनियमा निर्मिताः. किन्तु पुरुषः स्वाधीनोऽस्ति तस्य कृते किमपि विधानं नास्ति । वर्षत्रयं विगतम् । ममापि सन्तीन्द्रियाणि कोऽपि न चिन्तयति पतिं विना कथमियं जीविति ? मम शरीरे प्रत्यङ्गं पीडाः व्यथयन्ति चित्तम् । न जाने, कदा ज्वाला शरीरस्य निर्वाणं यास्यति ? अनङ्गो मां तरलीकरोति अद्य रात्रौ तस्योदारचरितस्यैकेन स्पर्शेण शीतलतैकानुभूता मया । यदि मम पतिः परिहाय मामन्याभिर्नारीभिः सह रमते तर्हि मयापि स्वशरीरस्य पिपासा तेन सह कथं दूरीकर्तुं न शक्यते ? स दयालुः सज्जनो युवा चाप्यस्ति, पुनरत्र स एकाक्येव वसति । श्वो रात्रौ तस्मै मच्छरीरं सप्रणयं दास्यामि । भवतु, परमात्मा मम मनोरथं पूरयतु ... इत्थं चिन्तयन्त्याः तस्या निशा सा व्यगमत । प्रभाते सा नित्यकर्मसु निरता ।

गतायां तस्यां सोऽप्यचिन्तयत् – पुरा विवाह एको धार्मिकसंस्कारोऽभूत् । साम्प्रतं पाश्चात्यसंस्कृतिप्रभावोदयं कामतृप्तेरेकं साधनमेवास्ति । अत्रदम्पती यथापूर्वमामरणमभिन्नत्वं नानुभवतः । कथमियं तरुणी सर्वगुणोपेता सत्यपि विशेषसौन्दर्याभावात् पत्या परित्यक्ता घोरां पीडां सहते ? मयास्या व्यवहारे आचरणे प्रकृतौ च न कश्चनापि दोषो दृष्टः । रूपैकपक्षपातिनः पुरुषाः सुशीलाः नारीरपि परित्यजन्ति एवमधर्ममाचरन्तः ते कथं मनसि शान्तिं सुखं चानुभवन्ति ? अद्यापि पुरुषाः कामाल्लोभादर्थाच्च नारीमवमन्यन्ते परिपीडयन्ति च । ते तासां गुणान् शक्तिश्च न विजानन्ति । शास्त्राण्यपि वदन्त्यस्माकम – नारीषु पराशक्तिर्विद्यते नार्यो भगवत्याः पराम्बाया दुर्गाया लक्ष्म्या कालिकायाश्च प्रतीकभूता भवन्ति तासां समादरेण, ताभिश्च साकं सद्व्यवहारेण पराम्बा भगवती दुर्गा प्रसीदति । नवरात्र-काले कुमारिका पूजनं प्रत्यक्षं भगवतीदुर्गाराधनमेव मन्यन्ते भारतीया शाक्ताः सनातन-धर्मानुयायिनश्च । धिक्तं पुरुषं येन एषा भगिनी बलाद् पराङ्गनासक्त्या परित्यक्तो-पेक्षिता च । वराकी कथमत्र जीवतु न स स्मरति. न च चिन्तयति–सा मम जाया धर्मपत्नी शास्त्रविधिना च परिगृहीता । अस्यानाचारस्य को दुर्विपाक उत्तरकाले मयानुभवितव्यो भविष्यति ? कथमस्याः कल्याणं भवतु ?...' इत्यादिकं चिन्तयत-

स्तस्य निद्रा क्षपायाँ कथमपि नयनाभिमुखी बभूव । प्रातरुत्थाय तेन नित्यकर्माणि कृतानि ।

दिवसे तदीयं नियतं कृत्यं सम्पाद्य सन्ध्याकाले विनीता तस्य प्रकोष्ठं गत्वा तस्य समक्षं सुखासने ससाद अद्य सा विशेषेण अलङ्कृतासीत् । तस्याः चन्द्रवदने मन्दहासः' नयनयोश्चापल्यम् कुचकलशयोः काठिन्यम् अङ्गुलतिकासु स्निग्धता च व्यलसत्तराम् । तस्याः कमनीयं कलेवरमवलोक्य स सपदि कामहतः सन् तस्याः गाढालिङ्गनं मनसि चकमे किन्तु क्षणानन्तरं हि तज्जायारूपं संस्मृत्य मनसि तद्विचार सर्वथा जहौ । अद्य सोऽपि कुसुमायुधेनाहतोऽस्ति तस्य शरीरे मदो विद्यते । झटिति तस्याः आकृतिः पूर्णतां यातु । भगवान् मदनो मामिव इममपीदानीं तरलीकरोति ।' इति मनसि विचार्य तस्य प्रकोष्ठस्य कपाटं स्वयं पिधाय तत्र चार्गलां सा नियोजयामास । विचारमग्नः स इदं रहस्यं न ज्ञातवान् ।

'अद्य भवान् किं चिन्तयति ? कस्मिन् विचारवारिधौ लीन आगतां मां न भाषसे ?...' इत्येवमभिदधती सा तस्य मुखं सरागं चुम्बितवती । चुम्बनानन्तरं तस्याः उन्मुक्तः सकोपः किञ्चिद्रक्तलोचनः स तस्यै अकथयत्- भगिनि ! विनीते ! अद्य त्वं कथमित्थमाचरसि ? किं त्वं न जानासि-अहमेकः परिगृहीत सापत्यः पुरुषोऽस्मि । मया सह तवैतादृशो देहसम्पर्कः कथमपि नोचित । यद्यपि त्वं परित्यक्ता विषद्ग्रस्ता च नारी असि, तव पीडां चाप्यहमनुभवामि, तस्या निराकरणाय च समुचितं विधिं चाप्यहमनुभवामि, तस्य तथापि त्वमसि मम स्वसा । यदा प्रभृति तव परिचयः सञ्जात, तदा प्रभृति त्वं मां भ्रातेति हि मन्यसे, तथैव चाचरसि । अतस्त्वां स्पष्टं वदामि त्वं मया सह देहसम्पर्कस्याकाङ्क्षां कदापि मा कुरु अत्रैकान्तेऽपि परमेश्वरः त्वां मां च पश्यत्येव । यथा त्वं मम स्वसासि, तथा समाचर । अहमपि तव शिवाय यथोचितं विधातुं प्रयतिष्ये ...'

तेन सत्पुरुषेण एवमभिहिता सा सकामापि आत्मानं निरुध्य लज्जावनतमुखी सती तत्प्रकोष्ठं जगाम, शयनीये निपत्य च, न जानाति, किं किं चिन्तितवती

प्रातरुत्थाय, नित्यकर्माणि च समाप्य तस्य समीपं गत्वोक्तवती 'भ्रातः, ममापराध क्षन्तव्योऽस्ति रात्रौ मदनावेशस्थितया मया यदाचरितम्, तत् सर्वथानुचितमासीत् । क्षम्यताम् - लोके त्वत्सदृशा पुरुषाः यदि सर्वे भवेयुः, तर्हि नारीसम्मानः सर्वत्र सुरक्षितः भवेत । भ्रातः, त्वं धन्यः । अहं तवाजीवनं स्वसा भवामि ।'

स सस्नेहमवदत् 'भगिनि ! तव पूतभावादेव ममापि धर्मोऽभिरक्षितः । त्वादृशी नारी कथमपि पुण्येन हि मिलति । एषा अत्र भवती या ममाभिप्रायं विज्ञाय मम चारित्रं जुगोप । अहमाजीवनं तव भ्राता भवामि । प्रभुः तव साहाय्यं करिष्यति ।

विष्णुदत्तस्य सैव स्वसा तस्मिन् महोत्सवे समागताभूत् जगति खल्वेतादृशौ भ्रातरौ न मिलतः ।

रा. इ. का. सितारगंज,
नैनीतालम् (उ. प्र.)

# महत्वपूर्णाः प्राप्याः विशेषाङ्काः

१. विश्व संस्कृत सम्मेलनाङ्कः
२. नवशब्द निर्माणाङ्कः
३. नवकथानिकाविशेषाङ्कः
४. संस्कृतचलचित्रविशेषाङ्कः
५. श्री शङ्कराचार्य विशेषाङ्कः

## मू ल्य म्

एकस्य मासाङ्कस्य मूल्यं रुप्यकचतुष्टयं विशेषाङ्कस्य मूल्य अष्टौ रूप्यकाणि । पूर्वं मूल्यप्राप्तावेव अङ्काः प्रेषयिष्यन्ते ।

— प्रधान सम्पादकः

# संस्कृतशोधछात्राणां कृते उपयोगिनः

दिव्यज्योतिषः प्राप्या गताङ्काः

| सन् | वर्षम् | अङ्काः | सन् | वर्षम् | अङ्काः |
|---|---|---|---|---|---|
| १९५६ | १ | १ | १९७४ | १९ | २, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२, |
| १९५७ | २ | २ | | | |
| १९५८ | ३ | १२ | | | |
| १९५९ | ४ | ८ | १९७५ | २० | १, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२, |
| १९६० | ५ | ८ | | | |
| १९६१ | ६ | ७ | | | |
| १९६२ | ७ | १, २, ३, | १९७६ | २१ | २, ३, ४, ५, ६, ८, ९, १०, ११, १२ |
| १९६४ | ९ | २, ६, | | | |
| १९६६ | ११ | ४, ८, ९, ११ | १९७७ | २२ | २, ३, ४, ५, ९, १०. ११, १२, |
| १९६७ | १२ | ५. | | | |
| १९६८ | १३ | ३, ४, | १९७८ | २३ | १, २, ३, ८ |
| १९६९ | १४ | ४, ६, | १९७९ | २४ | १, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२, |
| १९७० | १५ | १. ४, १० | | | |
| १९७१ | १६ | १, २, ४, ५, ६ | | | |
| १९७२ | १७ | ३, ५, ६, ७, ८, ९. १०, ११, १२, | १९८० | २५ | १ से १२ तक |
| | | | १९८५ | २९ | १ से १२ तक |
| १९७३ | १८ | १, २, ८, ९, १०, | १९८६ | ३० | १ से १२ तक |

—★—

# संस्कृतशोधसंस्थानस्य अभिनवप्रकाशनानि

## सूनृता

## ( सं० गीत काव्यम् )

दिव्यज्योतिषः प्रधानसम्पादकेन श्रीमदाचार्यकेशवशर्मणा प्रणीतं सचित्रं पञ्चचत्वारिंशत्सुललितपद्य– गद्यगीतग्रथितं पुरीस्थश्रीजगन्नाथ सं० वि० विद्यालय-कुलपतिचरस्यश्रीमदाचार्यप्रवर डा० सत्यव्रतप्राक्कथन समुपेतं संस्कृत जगति महत्वपूर्णं खण्डकाव्यम् ।

— मूल्यम् २५ रु० डाक व्ययः पृथक् —

★

## पथ्यापथ्य विनिर्णयः

हिमाचलप्रदेशस्य सुविख्यातराजवैद्य स्व० पञ्चाननशर्मणा महाविदुषा १०५ वर्षं पूर्वं प्रणीतः सं० टीका सहितस्तथा हिन्दीटीकया समुपेत -दुर्लभो ग्रन्थः ।

— मूल्यम् २० रु० डाक व्ययः पृथक् —

## हिमाचलप्रदेशे संस्कृतप्रसारो विकासश्च

स्वातन्त्र्यात्परं हिमाचलप्रदेशे संस्कृतप्रसारविकासविषये यदायोजनादिकं जातं तस्य सचित्रं विवरणं दिव्यज्योतिषः प्रधानसम्पादकेन श्रीमदाचार्यकेशव—शर्मणाऽस्मिन् ग्रन्थे ग्रथितम् ।

— मूल्यम् ५० रु० डाक व्ययः पृथक् —

★

त्वर्यताम् त्वर्यताम् त्वर्यताम्

प्रतयः स्वल्पा एव सन्ति

युगपत् पुस्तकत्रयं, अशीतिरुप्यकैः प्राप्यते

— प्राप्तिस्थानम् —

संस्कृत शोध संस्थानम्, भारती विहार मशोवरा, शिमला-७

# हिमाचल प्रदेश में

## नई लेपरो कोप विधि (दुरबीन)

द्वारा

## परिवार कल्याण कार्यक्रम में शानदार उपलब्धियां

- लेपरोस्कोप द्वारा सरल आपरेशन।
- रोगी 24 घण्टे के भीतर घर लौट सकता है।
- आपरेशन के बाद अस्पताल में रहने की आवश्यकता नहीं।
- बेहोश किए बगैर आपरेशन

## प्रदेश भर में नलबन्दी के विशेष शिविर

— और

माता तथा शिशु कल्याण

सेवाओं को सभी सुविधाए मुफ्त दो जाती है।

## पात्र दम्पतियों

से अनुरोध है कि परिवार कल्याण के किसी भी साधन को अपनी मर्जी से अपनाए, निकटतम स्वास्थ्य केन्द्र-संस्था से सूचना प्राप्त करें।

"दो बच्चों में है भलाई माँ पर छाई रहे तरुणाई"

★ प्रकाशक:— हिमस्वास्थ्य १७१००४ —

# सामयिक प्रसंगः

## उग्रवादः

श्री हरिश्चन्द्रः निस्तन्द्रः

प्रभूताः उग्रवादेन देशाः अद्य समाकुलाः ।
देशद्रोहस्य रूपेण भारतेऽयं समुत्थितः ।१।

सर्वत्र भारते देशे नृशंसैरुग्रवादिभि: ।
अस्मिन्प्रान्ते विशेषेण आतङ्कत्रासिता प्रजा ।२।

वैरबुद्धया समस्येयं राष्ट्रेण प्रतिवासिना ।
सम्यगुत्पादितेदानीं विकटरूपमास्थिता ।३।

स्वातन्त्र्यप्राप्तये दत्तं वङ्गाय भारतेन यत् ।
साहाय्यं तेन पाकस्य खण्डिताऽभवदेकता ।४।

ग्रन्थिरूपेण तद्वैर पाकस्य मनसि स्थितम् ।
पाकदेशः तद्बद्धतुं प्रहारं कुरुते भृशम् ।५।

हिंसायाः शिक्षणं दत्त्वा शस्त्रास्त्राणि बहूनि च ।
द्रव्यमप्युग्रवादिभ्यः प्रेषयत्यत्र भारते ।६।

तेऽत्रागत्य यथाकालं यथा वा योजना भवेत् ।
पूरयित्वा निजं लक्ष्यं पलायन्ते गुप्तवर्त्मना ।७।

धर्मयुद्धमिमां हिंसां कथयन्त्युग्रवादिनः ।
अपराधं न मन्यन्ते यस्य कस्यापि मारणे ।८।

प्रान्तस्यानेकभागेषु गुप्ताः सन्ति सहायकाः ।
ते ददत्युग्रवादिभ्यः शरणं भोजनं धनम् ।९।

दुर्घटनाकृता हत्या, न तथा व्यथयन्ति नः ।
यथैतास्तु कृताः हत्याः नृशंसैरुग्रवादिभि: ।१०।

पतिपुत्रविहीनानां नारीणां कीदृशी दशा ।
अनाथानां विलापेन पाषाणोऽप्यत्र भिद्यते ।११।

उग्रवादेन संत्रस्ताः पञ्चाबुप्रान्तवासिनः ।
यापयन्ति कथञ्चिद्धि एकमेकं दिनं स्वकम् ।१६।

गन्तुमिच्छन्ति ये केचित् प्रान्तमन्यं निजेच्छया ।
स्थानाभावं विचार्यान्ते निजावासं त्यजन्ति न ।१३।

क्व ग्रामः कुत्र गन्तव्यं कः शरणं प्रदास्यति ।
कया वृत्या कुटुम्बस्य पालनं कुत्र संभवेत् ।१४।

प्रान्तं त्यक्त्वा गृहं त्यक्त्वा येऽन्यत्र कुत्रचिद् गताः ।
श्रुत्वा तेषां समस्यास्तु अन्येषां मानसं हृतम् ।१५

असमर्थाः अशक्ता वा व्यथयन्ति जीवनं स्वकम् ।
अत्रैव विवशाः, यद्वत् मीनाः शुष्के सरोवरे ।१६।

ये समर्था: परं स्थानं गन्तुं वा व्यवसायिनः ।
तेऽपि पूर्णतया कर्तुं निश्चयं पारयन्ति न ।१७।

येन केनाऽपि वाहेन नाद्य यात्रा सुखावहा ।
भवत्युपद्रवाद्भीतं मनः शङ्कासमाकुलम् ।१८।

स्मारं स्मारं प्रभुं लोकाः प्रस्थानसमये गृहात् ।
स्मरन्तः रक्षकं मार्गे यात्रान्ते च नमन्ति तम् १९।

ज्ञानिनः पुरुषाः लोके ते तु मृत्योर्न बिभ्यति ।
विपदानां सहस्रेण तेषां चित्तं न चाल्यते ।२०।

भूमौ नभसि पाताले सुप्रच्छन्नं न मुञ्चति ।
मृत्योर्पतिस्तु सर्वत्र कस्तं वञ्चितुमर्हति ।२१।

पुण्यार्थिनां मनुष्याणां आयुष्काले यदा गत ।
तेषां मृत्युर्हरिद्वारे कुम्भावसर आगतः २२

वर्धितो विषवृक्षोऽयं कथं नाशमवाप्स्यति ।
आशेयं तु दुराशाद्य मन्यते बुद्धिजीविभिः ।२ ।

यावत्प्रचण्डदण्डस्य व्यवस्था न भविष्यति ।
मन्ये नोपद्रवस्तावत् समूलं नाशमेष्यति ।२४

सद्बुद्धिमुग्रवादिभ्यः ददातु भगवान् स्वयम् ।
देशभक्तिं समाश्रित्य सत्पथा यान्तु तेऽचिरात् ।२५।

भारतीयाः वयं सर्वे वर्गभेदो न पुष्यतु ।
खण्डितं न भवेद् राष्ट्रं देशद्रोहो विनश्यतु ।२६।

— निरञ्जन निवास
एन. बी. १९९, टांडा रोड, जालन्धर

# उर्मिलीय-महाकाव्यम्

निर्माता - पं० श्रीनारायण शुक्लः प्रा० स्था० श्रीनाथ संस्कृत महाविद्यालय हाटा-देवरिया

अद्यापि देशेऽनेके संस्कृतकवयः सन्ति सुरगिरः समाराधनायां संलग्नाः एषु-एकः- वर्तते पं० श्री नारायण शुक्लः येनोल्लिखितं महाकाव्यं विभिन्नछन्द सुग्रथितम् । रामस्य यौवराज्याभिषेकस्य सज्जा, वनवासः, रामराज्यम्, सीतावनवासः लवकुशयोः जन्म, रामेणाश्वमेधयज्ञयजनम्, अश्वमेधाश्वबन्धनम्, लक्ष्मणस्य पुत्रेण साकं लवकुशयोर्युद्धम् परस्परपरिचयः, सीतायाः रामेण पुनर्विग्रहणम् लक्ष्मणस्य पुत्राणाञ्च राज्यसंचालनाय नियुक्तिः इत्यादिकथानकाधारेषु महाकाव्यानां समस्त-लक्षणंयुतस्य उर्मिलीय-महाकाव्यस्य संरचना कवयित्रा कृता ।

यद्यपि ऊर्मिलायाः विषये रामायणेऽन्यत्र वा इदमेव लिखितं प्राप्यते यत् —

> एतस्मिन्नन्तरे राजा आहूय लक्ष्मणं पुनः ।
> ऊर्मिलाञ्च विधानेन लक्ष्मणाय स्वयं ददौ ।।
>
> ——
>
> अब्रवीज्जनको राजा हर्षेणाभिपरिप्लुतः ।
> लक्ष्मणागच्छ भद्रन्ते ऊर्मिलामुद्यतां मया ।।

लेखनस्याशयोऽयं यत्-ऊर्मिलीयमहाकाव्यग्रथने केवलं कवयित्रा स्वीया कल्पना एव समाश्रिता एतादृक्काव्यनिर्माणाय कविः साधुवादार्हः

एतादृक सुन्दरकाव्यस्यावरणं तादृक्शोभनं नास्ति यथा भवितव्यमासीत् । संस्कृतपुस्तकप्रकाशने महीयानयमभावः परन्तु-अर्थ काठिन्यमेवात्रापि कारणम् । वर्तमानपुस्तकस्य संस्कृतज्ञैर्युगबोधं विधाय नूतनसंस्कृतसाहित्यमपि नूनमेवाध्येतव्य-मिति अस्माकं परामर्शः ।

# सौप्रभम् (गद्यकाव्यम्)

लेखक: श्री वेदव्यास शुक्ल: प्रा. स्था. खोडा
पत्रालय— बारादीक्षित
मण्डलम् देवरिया, उ० प्र० भारतम्)

संस्कृतसाहित्यविदुषामभिमतमिदम् " गद्यं कवीनां निकषं वदन्ति " अर्थात्- काव्यग्रथनं तु सरल परन्तु गद्यरचना-अतीव कठिनकार्यमस्ति । अत एव वाणं प्रशंसयद्भिर्विद्वद्भिः कथितम् :-

श्लेषे केचन शब्दगुम्फ विषये केचिद्रसे चापरे ऽ—
लंकारे कतिचित्सदर्थविषये चान्ये कथावर्णके ।
आ सर्वत्र गभीरधीरकविताविन्ध्याटवी चातुरी—
सञ्चारी कविकुम्भिकुम्भभिदुरो वाणस्तु पञ्चाननः ।।

न केवलमियदेव:-

जाता शिखंडिनी प्राग्यथा शिखंडी तथा वाञ्छामि
प्रागल्भ्यमधिगन्तुं बाणी वाणो बभूवेति ।

अथवा: --

वाणोच्छिष्टं जगत्सर्वम् । एतादृशः विषयः, रसोऽलंकारो वा उक्तिवैचित्र्यम्वा नास्ति यत्र वाणस्य प्रवेशो न स्यात् · काव्यात्मकगद्यस्य लक्षणमित्थं कृतमस्ति पण्डितै - 'गद्यं वृतानुगन्धि स्यात् ।" अर्थात् छन्दसामानन्दो गद्य समागच्छेत् वाणमनु दण्डी सुबन्धु - आनन्दधर - सोढ्ढल - वामन अम्बिकादत्त- व्यासादिभि अनेकसंस्कृतकविभि दशकुमारचरितम् — वासवदत्ता- माधवानलकथा उदयसुन्दरी कथा वीरनारायणचरित्रम् - शिवराज बिजयादिषु रचनासु स्वीय गद्यरचनाचमत्कार: प्रदर्शित परन्तु वाणग्तु वाण एवासीत ।

अस्यामेव परम्परायां नवीनां कथां गृहीत्वा युगानुसारिवातावरणस्याश्रयं गृहीत्वा सौप्रभम् काव्यस्य रचना श्री वेदव्यासशुक्लमहाभागै कृता । शुक्लमहोदयैः ग्राम-गढ-सुप्रम - कामिनी राजसिंह - सरयू - दैवत - वन - आश्रमाणां कलात्मक वर्णनमकारि एष: प्रयास: सर्वथा स्तुत्य: । काव्यपाठेन स्पष्टं प्रतीयते यत् - लेखकस्य ज्ञानं व्यापकं विस्तृतञ्च वर्तते । संस्कृतसमाजोऽस्य स्वागतं करोतु - इति-अस्मदीया निवेदना ।

# अलकनन्दा ( गीतकाव्यम् )

लेखक :— श्री सच्चिदानन्द काण्डपालः, एम. ए. ज्योतिषव्याकरणाचार्यः संस्कृत-प्राध्यापकः, राजकीयमहाविद्यालय नाहन (हि प्र०)

प्रा. स्था:— साहित्य सदन मागपुर डा० काण्डई वाया गोचर जि० चमोली- उ०प्र०)

मूल्यम् रु. ४०-०० ।

संस्कृतसाहित्यरचनायामद्य यथा पाण्डित्यसंरक्षणस्यापि परमावश्यकता वर्तते परन्तु ततोऽप्यधिका आवश्यकता अस्ति संस्कृतस्य सरलीकरणस्य । वर्तमानयुगस्य महतीयमावश्यकता इमामेव पूरयितुं श्री सच्चिदानन्दस्य प्रयासोऽयं सर्वथा-ऽभिनन्दनीय "अलकनन्दा" संस्कृतगीतकाव्यनिर्माणस्य ।

अस्मिन् काव्येऽशीतिपृष्ठात्मके संस्थापितानि गीतानि अतीव मधुराणि सरसानि च सन्ति यथा "हिमाद्रिणं सीमान्तक भारतस्य" "यात्रा" "सहजेच्छा" आदयः कविताः । क्वचित - छन्दोवद्धर ना अपि शोभना सन्ति ।

उपत्यकायां हिमशृंग शाखिनो
नगाधिराजस्य मनोहराञ्चले ।
भवप्रसादाप्त सहस्रबाहुके
उवास बाणो वलिराजसद्मनि ।

कवे कवितासु गेयता प्रवाहश्च सुतरां समयानुकूलौ । सरलसंस्कृतसुगुम्फितेयं रचना सर्वथा स्वागतार्हा

## वैशिष्ट्यम्

अन्यरचनापेक्षया वैशिष्ट्यमत्र वर्तते आवरणसुनियोजनम बहुवारं मया दिव्यज्योतिषि— एतद्विषये विचाराः प्रकटिता यत आवरणं समयानुकूलं न भवति संस्कृतपुस्तकानाम् । परन्तु अस्य आवरणं सर्वथा समाकर्षकं सुन्दरञ्चेति सन्तोषप्रदम् । मन्ये संस्कृतज्ञा अस्याः नवीनरचनायाश्चापि स्वागतं करिष्यन्ति — मुख्यसम्पादकः

## दी पा व ली

गृहे गृहे सन्तु सुमङ्गलानि
आबालवृद्धा सुखिनो भवन्तु ।
प्रकाशयेज्जीवनमुज्ज्वलं वा
दीपावलीय विकिरेत् सुहासम् ।

— प्रधान सम्पादकः

आगम्यताम्   आगम्यताम्   आगम्यताम् ....................

## संस्कृतज्ञानां शोभायात्रायाम्

★ संस्कृतशोधसंस्थानस्य संयोजकत्वे शिमलायाम् संस्कृतनाट्य-दिवससमारोहोत्सव महता समारोहेण ३ ४ नवम्बर, ८६ तिथौ भविता ।

★ समारोहे भवन्तः सर्वे समामन्त्रिताः । समुपस्थितयाः कृतार्थयन्तु ।

★ प्रत्येकनाटकस्य समय अर्धहोरा परिमितो भविष्यति ।

## विशिष्टयोजना

★ अस्मिन् दिने एका मौना शोभायात्रापि संस्कृतज्ञानां शिमलानगरे निष्कासिता स्यात् यत्र संस्कृतज्ञैः बहुसंख्यायाँ समुपस्थातव्यं येन प्रशासनस्य जनतायाश्च ध्यानाकर्षण संस्कृतप्रसारविकासं प्रति स्यात् ।

★ हिमाचलप्रदेशस्य संस्कृतमहाविद्यालयप्राचार्यास्तथा च अन्यमहा-विद्यालयानां संस्कृतप्रवक्तार हि० प्र० विश्वविद्यालयसहिताः प्रार्थ्यन्ते यत्ते स्व-स्व-महाविद्यालयेभ्यः छात्रान् प्रेषयित्वा प्रोत्साहयेयुः येन संस्कृतभाषायाः सार्वजनिकरूपेण प्रसारे साहाय्यं भवेत् । शोभायात्रायाम् च भागग्रहीतारो भवन्तु,

हिमाचलेतरसंस्कृतनाट्यकारा अपि अत्र भागं ग्रहीष्यन्ति ।

सम्पर्कसूत्रम् :

**सचिवः, संस्कृतशोधसंस्थानम्**
**भारती विहार—मशोबरा**
**शि म ला**

संक्षिप्तसमाचाराः --

# प्रख्यात-संस्कृत-पालिविदुषां 'गाण्डीवम्' संस्कृत-साप्ताहिकस्य मुख्यसम्पादकानां प्रो. श्री जगन्नाथोपाध्याय महाभागानां महाप्रयाणम्

काशी संस्कृतवाङ्मयस्य वेदान्त - बौद्धदर्शनपालिथेरवादप्रभृतिविधानां विशिष्टविदुषां गाण्डीवम्. संस्कृतसाप्ताहिकस्य मुख्यसम्पादकानां प्रकाशकानां प्रो० श्री जगन्नाथोपाध्यायानां सितम्बरमासस्य पञ्चदशे दिने सोमवासरे सायंकाले सप्तवादने काशीहिन्दूविश्वविद्यालयस्थित-सरसुन्दरलालचिकित्सालये देहावसानं जातम् । एते ६५ वर्ष देशीया आसन् ।

एतेषां प्रयाणेन संस्कृतजगतोऽपूरणीया क्षतिर्जाता । दिव्यज्योति परिवारः स्वीयां विनतां श्रद्धाञ्जलिमर्पयन् एतेषां परिवाराय भगवान्-दुःखसहनशक्ति यच्छेदिति प्रार्थयति ।

प्रधान सम्पादक.

## साहित्यकार-सम्मानम्

हि. प्र. प्रशासनस्य भाषाविभागेन अकादम्या च पञ्चदशसाहित्यकाराः सम्मानिताः एषु पार्वत्यभाषायां विशिष्टलेखनार्थं श्री गोवर्धनसिंहः दशसहस्ररूप्यकाणां सम्मानेन मानितः, श्री केशव नारायणश्च दशसहस्ररूप्यकसम्मानेन हिंदीभाषायां लेखनाय राज्यपुरस्कारेण सम्मानितः

एवमेवान्ये त्रयोदशसाहित्यकारा अपि शतोत्तरसहस्रद्वयपुरस्कारेण सम्मानिताः । डा श्रीवरयामसिंहः पहाड़ी काव्य कृते अवतार सिंह एनगिलः हिंदी काव्यार्थं डा. श्री सुशील कुमार फुल्ल हिन्दीउपन्यास - कृते श्री दिनेशधर्मपाल हिन्दी-कहानी नाटक-कृते श्री पी, एन सेमवाल इतिहास और परम्पराक्षेत्रे लेखनाय श्री केशवानन्दः संस्कृति और लोकसाहित्य क्षेत्रे लेखनार्थं, डा जोगेन्द्र सिंह वर्मा, शोधसमीक्षाविधायां लेखनाय, डा. श्री पीयूष गुलेरी पहाड़ी' कविता, कृते, श्री कुमार कृष्णः हिन्दीकाव्यक्षेत्रे लेखनाय श्रीमती उत्तम परमार उपन्यासविधायां लेखनाय क स्वर्णकान्ता संस्कृति और लोकसाहित्यविधायां लेखनाय सम्मानिताः । सम्मानसमारोहौ पृथक् पृथक् मानितौ उभयत्र प्रदेशमुख्यमन्त्री श्री वीरभद्र सिंहः, पुरस्कारान् ददौ ।

दिव्यज्योति, परिवारः सर्वेषामप्येतेषां हार्दिकमभिनन्दनं कुरुते ।

# राज्यस्तरीयः संस्कृतदिवससमारोहः हिमाचलीय-नाहननगरे सम्पन्नः

आचार्य तुलसीरमणः

इति गतमासाङ्के भवद्भिः पठितं स्यात् हिमाचले स्वातन्त्र्योत्तरं संस्कृत-लेखनम्" एष विशेषनिबंधः पठितः श्रीमता कुमारसिंहेन । अत्र परिचर्चां प्रारभमाणः श्रीमित्रानन्दनौटियालः प्रावोचत् यत् – अद्यतनपाठकः यत् संस्कृतलेखकेभ्योऽपेक्षते तत्रापि संस्कृतलेखकानां ध्यानमवश्यं स्यात् । अन्यथा सर्वमपीद विगतयुगवार्ता भविष्यति । राष्ट्रपतिसम्मानितेन श्रीदुर्गादत्तशास्त्रिविद्यालङ्कारेणोक्तम्, यत संस्कृतं केचन जनाः साम्प्रदायिकतया धर्मेण च सह योजयन्ति । एषः प्रयासोऽनुचितः-निन्द्यश्च वर्तते । श्रीनरोत्तमदत्तशास्त्रिणा प्राड्विवाकेन भणितम् यत् इतिहासादस्माभिः शिक्षणीयं यदेकला अपि वयं संस्कृतं रक्षितुं सक्षमा भवेम । श्री शंकराचार्य श्री कुमारिलभट्टः, श्री तिलकः एभिरेकलैरेव इतिहासे स्वीयं स्थानं रक्षितम् । संस्कृतं न केवलं ब्राह्मणानां भाषा इयं विश्वभाषा डा० श्री लेखरामोऽवोचत्-यत हिमाचलस्य एकैकस्य संस्कृतलेखकस्य तस्य रचनानां चाध्ययनमपि पृथक् पृथक् रूपेण स्याद्येन अध्ययनमिदं पूर्णं भवेत् । श्री रामानन्द शर्मा, आचार्यः प्रत्यपादयत् - हिमाचलप्रदेशः संस्कृतप्रसारप्रचारदृष्टया अद्य देशे मूर्धन्यः । श्री सीतारामशास्त्रिणा कथितं यत् संस्कृतस्य पुराणा पण्डिताः सम्माननीयाः । श्री हरिश्चन्द्रशर्मणा प्रोक्तं यत् संस्कृतस्य प्राचीना पाण्डुलिप्यः ताम्रपत्रादयश्च संग्रहणीयाः प्रदेशे । संस्कृतविदुषामन्तर्राज्यीयमादानप्रदानमपि भवेदिति तेन प्रस्तावितम् । डा० श्रीराममूर्ति वासुदेव प्रशान्तस्य विचारोऽयमासीद्यत्पण्डितमेहचेन्द्र शास्त्री अपि संस्कृतलेखकआसीत् । श्री नागदत्तः डिम्री प्रावोचद्यत् ज्योतिषादयो वैज्ञानिकविषया नोपेक्षणीया प्रदेशे संस्कृतस्य प्रचारेणासौ सन्तुष्ट आसीत् परन्तु १०×२ प्रणाल्यां संस्कृतस्य कृते स्थानमुचितं न दत्तमिति-अपि प्रतिपादितमत्र च सर्वेऽपि गोष्ठका एकमता आसन् । श्री शालग्राम आचार्येण ग्रामेषु नगरेषु च समानरूपेण संस्कृत-प्रसाराय कथितम् । संस्कृताध्यापका निष्ठया कार्यं कुर्युरित्यपि तेन भणितम् ।

अन्ते च श्री जोशीमहाभागेन भाषाविभागनिदेशकेन ते सर्वेऽपि प्रश्नाः सन्तोषजनकरूपेण समाहिता ये प्रशासनेन साकं सम्बद्धाः आसन् ।

— —

# सर्वं संस्कृतं भवेत्

## अखिलभारतीयसंस्कृतसम्मेलनवृतान्तः

— श्री कृष्ण नारायण पाण्ड

सर्वासां संस्कृतसंस्थानां संस्कृतज्ञानां संस्कृतानुरागिणाञ्च सर्वतो भावेन सहयोगेन संस्कृतस्य प्रचाराय प्रसाराय समन्वितरूपेण साकमभियानं चलतु इति ध्येयेन प्रति वर्षम् संस्कृतसम्मेलनं भवतु एवं वर्त्तते सार्वदेशिकसंस्कृतसमन्वय-समितेः संकल्पना ।

सर्वप्रथमं गतवर्षे रक्षाबन्धनपर्वणि संस्कृतदिवसे ३०-८-८६ दिनांके श्री अमरनाथगुहा क्षेत्रे (कश्मीर प्रदेशे) संस्कृतसाहित्ययात्रारूपेण अखिलभारतीयसंस्कृत-कविसम्मेलनस्य आयोजनं कृतम् । अस्मिन् वर्षे संस्कृतदिवसेऽत्र द्वितीयम् अखिल-भारतीयसंस्कृतसम्मेलनम् श्रीरामजन्मभूमिअयोध्यानगरे १९, २० अगस्त ८६ दिनांकयोः समायोजितम् ।

सम्मेलने उत्कल, बिहार, केरल राजस्थान, कर्नाटक, महाराष्ट्र उत्तर प्रदेश सप्तप्रान्तेभ्यः शताधिकप्रतिनिधयः समागताः

सम्मेलनस्य उद्घाटनसमारोहः अयोध्यानगरस्य राजकीयतुलसीभवनस्य भव्यवि-शालमण्डपे आयोजितः । उद्घाटनम् कुर्वन् उ. प्र. सर्वकारस्य कृषिमन्त्री श्रीनरेन्द्रसिंहः समुद्बोधयत् वेदा अस्माकं ज्ञानं, संस्कृतं अस्माकं मूलभाषा । श्री सिंहेन कथितं सम्मेलनस्य संस्तुतिपालनविषये विशिष्टध्यानं करणीयम् । कार्यान्वयनाय योजना निर्मेया उ. प्र. सर्वकारस्य पूर्णयोगदानम् भविष्यति ।

उद्घाटन समारोहे श्री वासुदेव द्विवेदी, डा० बनेश्वर पाठकः डा. श्री रूप नारायण मिश्र अयोध्याजनत्रयम् पुरस्कृतम् मन्त्रिमहोदयेन ।

उद्घाटनसमारोहस्य अध्यक्षीयसम्भाषणे लक्ष्मणकिलाधीश स्वामी सीतारामशरण-महोदयेन संस्कृतस्य सार्वभौमिकत्व प्रतिपादितम्

प्रथमदिवसस्य द्वितीयसत्रम् संस्कृतपत्रकारसम्पादकसम्मेलनरूपे आयोजितम् । विषयप्रवर्तनं डा. वीरभद्र मिश्र सर्वगन्धा मासिकसम्पादकेन कृतम् । संस्कृतसम्पादकाः संघटिता भवन्तु संस्कृतपत्राणां ग्राहकतां वर्धन्तु ।

संस्कृतपत्रकारिता समन्विता भवतु समसामयिकसमाजसम्प्रेरकविषययुता भवतु इति प्रस्तावः स्वीकृतः । संस्कृतपत्रकारिता संघटनाय डा० वीरभद्र मिश्र सम्पादकः सर्वगन्धामासिक, माई जी मन्दिरम्, लखनऊ कार्यं करिष्यति इति निश्चितम् ।

इदं सम्मेलनं डा० मनोरमा तिवारी, प्रचार्या, महिला महाविद्यालय लखनऊ महोदयाया अध्यक्षतायाँ सम्पन्नम् । विचारविमर्शे सम्मिलिताः विशिष्टजनाः आसन् श्री चन्द्रदीप शुक्लः सम्पादक ( संस्कृत सम्मेलनम्, त्रैमासिक पटना बिहारस्य, श्री पं० दिगम्बर महापात्र सम्पादकः उत्कलोदय, राउर केला (उड़ीसा) डा० योगमाया, सम्पादक प्रभातम् संस्कृतसमाचारसेवा (न्यूज एजेन्सी, लखनऊ) श्री वासुदेव त्रिवेदी सम्पादक परमार्थ सुधा च ।

डा० प्रकाश मिश्र शास्त्री सम्पादक पारिजातम् मासिकम् १०५।९४ प्रेमनगर कानपुर २०८०७१ द्वारा अस्मिन् अवसरे संस्कृतपत्रपत्रिकानाम् भव्यप्रदर्शिनी समायोजिता । प्रायः ४० पत्रपत्रिकाः संस्कृतस्य तत्र प्रदर्शि ।

रात्रौ साकेतमहाविद्यालयस्य तदवाबधाने साँस्कृतिककार्यक्रमाणां प्रदर्शनं कृतम् ।

अखिलभारतीयसंस्कृतसम्मेलनस्य द्वितीयदिने प्रथमसत्रे सर्वप्रथमं संस्कृतं भारतस्य राष्ट्रभाषा भवितुमर्हेति इति विषये छात्राणां वाद-विवादप्रतियोगिता आयोजिता । डा० सुधाकर शास्त्री (राजस्थान) महोदयेन कार्यक्रमस्य अध्यक्षता कृता ।

'सामयिकसमस्या संस्कृतं च' इति विचारगोष्ठी विषयस्य प्रवतनम् डा० राजदेव मिश्र प्राचार्य साकेत महाविद्यालयस्य द्वारा कृतम् सम्मेलनस्य संयोजकश्रीमिश्र-महोदयेन प्रतिपादितम् यत् भारतस्य सम्पर्कभाषा इंग्लिशस्थाने संस्कृतं भवेत् यतः इंग्लिशसंविधानेऽपि स्वीकृता भाषा न वर्तते अस्मिन् विषये डा० घनश्याम तिवारी, डा० रमाशंकर तिवारी इत्यादिभिः स्वमतं प्रकटितम् । विचारानुसारम् संस्कृतं भारतस्य मूलभाषा राष्ट्रैक्यप्रतीकं सम्पूर्णभारते प्रवर्तितम् च वर्तते संघे शक्तिः कलौ युगे एतदर्थं संस्कृतस्य महत् महत्वम् ।

द्वितीयसत्रे उन्मुक्ताधिवेशने सत्रसंचालक श्रीकृष्णनारायणपाण्डेयेन सर्वप्रथम संस्कृतदैनिकसुधर्मा पत्रस्य सम्पादकाय श्री क. न. वरदराज अइंगरमहोदयाय सम्मेलन-प्रतिनिधित्वेन स्वास्थ्यलाभाय सामूहिकशुभकामना कृता ।

सर्वेषां समागतप्रतिनिधिजनानां परिचयपूर्वकं संस्कृतप्रसाराय किं क्रियते विचारविमर्श आयोजितः । मुख्यभागगृहीतारः आसन् डा० शिव बालक द्विवेदी कानपुर डा० रमापति मिश्र बाँदा) श्री मेवालाल पाण्डेय बहराइच, श्री शिव प्रसाद द्विवेदी अयोध्या आचार्य राजनंद त्रिपाठी, श्री रविनन्दन त्रिपाठी, श्री प्रसाद मिश्र

आचार्य प्रभुदास जी आयोध्या श्री ब्रह्मानन्द पाठक श्री नरसिंह नारायण मिश्र, श्री मूलशंकर मिश्र आदय: ।

अस्मिन् अवसरे मुख्यातिथिरूपेण स्वामी नृत्य गोपाल महाराजेन, अध्ययन रामायणशोधसंस्थानवाल्मीकिमंदिरस्य मणिराम छावनी क्षत्रस्य च, सर्वे संस्कृतन्ता: संघटणाय तत्परा भवन्तु इति समुद्बोधितम् ।

तदनतरं संस्कृतप्रचारप्रसाराय प्रस्तावा: प्रस्तुता: प्रस्तावेषु मुख्यम्-नव-शिक्षानीतिपाठ्यक्रमे संस्कृताय समुचित स्थानं भवतु, संस्कृतस्य व्यवहारिक जीवने अधिकाधिकप्रयोग: भवतु ।

सार्वदेशिक संस्कृतसमन्वयसमिते निम्नरूपेण संघटनं स्वीकृतम् —

संरक्षक — १. श्री लक्ष्मण किलाधीशः
स्वामी सीतारामशरण
२. श्री प्रयागदत्त चतुर्वेदी
निदेशक, उ. प्र. संस्कृत अकादमी लखनऊ

अध्यक्ष — डा० मनोरमा रंजन
प्राचार्या. महिला महाविद्यालय, लखनऊ

उपाध्यक्ष— १. श्री वसंत अनंत गाडगील
सम्पादक शारदा पाक्षिकम् पुणे महाराष्ट्र
२. श्रीमती उमापाण्डेय सचालक
प्रभातम्, संस्कृत समाचार सेवा, लखनऊ
३. पं० दिगम्बर महापात्र, सम्पादक उत्कलोदय:
गुरुकुल वैदिकाश्रम: वेदव्यास:, रौडरकला (७६९००४)
४. श्री प्रकाशमिश्रशास्त्री
सम्पादक—पारिजातम् मासिकम् कानपुर
५. श्री चन्द्रदीप शुक्ल, पटणा बिहार

महामन्त्री — डा० राजदेव मिश्र
प्राचार्य साकेत महाविद्यालय अयोध्या

मन्त्री संगठनस्य— डा० घनश्याम तिवारी— रायबरेली ।
मन्त्री वित्त कार्यालय सचिव — डा० योगमाया, कानपुर

उपमन्त्री १. श्री अरविन्द कुमार, लखनऊ
२. डा. शिव बालक द्विवेदी, कानपुर
३. श्री राम प्रसाद मिश्र, अयोध्या

प्रदेश प्रतिनिधि— १. श्री राघवाचार्यं, कर्नाटक

२. श्री अशोकन पुरनाटुकरा, त्रिचुर केरल

३. डा. रोहिताश्व शर्मा, हरियाणा

४. डा. धनीराम, शास्त्री

५. डा. सुधाकर शास्त्री, राजस्थान

६. श्री बाबूराम अवस्थी

सत्रस्य अध्यक्षीय सम्भाषणे श्री बसंत अनंत गाडगील महोदयेन संस्कृताध्ययनाय सम्प्रेरितम् श्री गाडगील महोदयेन आगामिवर्षस्य सम्मेलनम् पूनानगरे आयोजयितुं स्थानीयसंयोजनं कर्तुं च स्वप्रस्तावः कृतः अस्य प्रस्तावस्य सर्वैः अभिनन्दनम् कृतम् ।

रात्रौ अखिलभारतीयसंस्कृतसम्मेलनस्य समापनसमारोहे अखिलभारतीयसंस्कृतसम्मेलनं समायोजितम् कवीनां संख्या प्रायः ५० जाता । मुख्यकवयः आसन् डा० राजदेव मिश्र. डा० मनोरमा रंजन, डा० वीरभद्र मिश्र, डा० रामलखन शर्मा, डा० मिथलेशकुमारी मिश्र, डा० नलिनी शुक्ला डा० हरिदत्त शर्मा, डा० वनेश्वर पाठकः, डा० प्रशस्य मित्र शास्त्री, कु० वीरेश्वरी, श्री मेवाराम शास्त्री. डा० शम्भू नाथ आचार्यं, आचार्य जगदीश्वर, श्री प्रद्युम्नाचार्यं, श्री हरि प्रसाद मिश्र. श्री कुंदन लाल शुक्ल, श्री गोपनाथ टण्डन, श्री वसन्त अनंत गाडगील, श्रीमती उमापाण्डेय, सुश्री नीलम शुक्ल आदयः ।

अयोध्यासंस्कृतसम्मेलन समायोजनं उ. प्र. संस्कृतअकादमी, महिला सांस्कृतिक संगम, साकेत महाविद्यालय अयोध्या, विश्व संस्कृत प्रतिष्ठानम् लखनऊ नगरम्, महिला उ० प्र० संस्कृत समिति लखनऊ, अयोध्या शोध संस्थाऊम् अयोध्याः संस्कृतविद्यालयाः, ग्रामसाहित्यकसभा फैजाबादसंस्थानां प्रशसनीयम् योगदानम् आसीत् ।

( प्रभातम् संस्कृत समाचारसेवा )

---

पत्रस्य शुल्कं पाठकैः शीघ्रं प्रेषणीयम् ।

— सम्पादकः

# संस्कृतभाषामाध्यमेन आई० ए० एस० परीक्षा समुत्तीर्णा

संस्कृतभाषा कियती बलवती, कियती वैज्ञानिकी कियती व्यवहारोपयोगिनी चेति शनैः शनैः साम्प्रतिकेऽपि युगे प्रमाणयितुं शक्यते । इमां भाषामादाय सर्वविधो व्यवहारः सर्वविधा परीक्षा च साधयितुं शक्यते । किञ्चित् कालात् पूर्वमेव विश्वस्य प्रमुखैः वैज्ञानिकैरिदं प्रमाणितं यत् आधुनिकतमोषकरणस्य 'कम्प्यूटर' इत्याख्यस्य कृते यावती उपयोगिनी संस्कृतभाषा अस्ति तावती न काचिदन्या विश्वस्य भाषा । पुरातनं नवीनतमं वा विज्ञानं संस्कृतभाषानिबद्धेषु वेदशास्त्रादिषु सुरक्षितं वर्तते । सम्प्रति प्रयोगमाध्यमेन तत्प्रसार प्रचारश्च नितरामपेक्ष्यते एतदर्थं संस्कृतज्ञैः पण्डितैः तदध्येतृभिश्च जागरूकैर्भवितव्यम । न केवलमियं भाषा कर्मकाण्ड-मात्रसङ्कुचिता, अपितु आधुनिकं समग्रं ज्ञानं विज्ञानं वास्तुकलादिकञ्च प्रकाशयितुं नितरां क्षमेति अनादिकालादधुनायावत् प्रमाणीकृतं वर्तते ।

अत्रेदं सहर्षं साभिमानम् उदाहरणतया उल्लेखनीय सूचनीयञ्च वर्तते यत् उत्कलप्रान्तवास्तव्येन एकेन विदुषा संस्कृतस्नातकेन संस्कृतभाषामाध्यमेनैव संघ-लोक-सेवायोगस्य आई० ए० एस इति सर्वोच्चप्रतियोगितापरीक्षा समुत्तीर्णा सोद्घोषं संस्कृतस्य व्यावहारिकं महत्त्वं प्रमाणितम् परमानन्दस्यायं विषयो यत् खलु भारतदेशस्य प्राचीनतमां मूलभूतां संस्कृतभाषां ये मृतामुद्घोषयन्ति, प्रचारयन्ति, निर्लज्जं भणन्ति च तेषां मुखे चपेटापातनमेव अनेनोदाहरणेन सञ्जातम् ते हि सनेत्रस्फारं पश्यन्तु निभालयन्तु च यदेषा संस्कृतभाषा मृता अमृता वा ? कियती सञ्जीवनीशक्तिसम्भृता संस्कृतभाषयमिति सप्रमाणमनेन प्रदर्शितम् श्री शङ्करनारायणपाणिग्रही विश्वविद्यालयतः संस्कृतस्नातकोत्तरपरीक्षोत्तीर्णः आङ्गल-हिन्दी-संस्कृतोत्कलभाषाभिज्ञोऽस्ति, तेन एतासु कयाचिदपि भाषया उत वा आङ्गल-भाषया एषा सर्वोच्चप्रतियोगितापरीक्षा उत्तर्तुं शक्यते स्म, परन्तु संस्कृतस्य वैशिष्ट्यं तदीयं गौरवञ्च परिलक्ष्य अमुना साहसिकेन स्नातकेन सैव भाषा परीक्षा-र्थमङ्गीकृता या देशस्य विश्वस्य च प्राचीनतमा देववाणी प्रमाणीकृताऽस्ति श्रीमता पाणिग्रहीमहोदयेन भारतस्य सर्वोच्च प्रशासनिकसेवायाः "आई० ए० एस०" परीक्षायाः सर्वाण्यपि प्रश्नपत्राणि संस्कृतमाध्यमेनैव लिखितानि उत्तरितानि च । तेन प्राथम्येन साफल्यमधिगतमित्येषा आधिकारिकोद्घोषणा वृत्तपत्रादिषु सञ्जाता न केवलं लिखितपरीक्षायां सर्वाणि प्रश्नपत्राण्येव संस्कृतेन उत्तरितानि, अपितु मौखिकपरीक्षायामपि साक्षात्कारसमये संस्कृतेनैव तेन सर्वेषां प्रश्नानामुत्तरं प्रादायि ।

इदं महत्‌ प्रमोदस्य गौरवस्य सन्तोषस्य च स्थानम्, विशेषतः संस्कृतस्नातकानां संस्कृतविदुषाञ्च कृते बरीवर्ति । सघलोकसेवायोगस्य ते सदस्याः परीक्षकाश्च नूनं साधुवादार्हाः यैः देशस्य निधिभूतं संस्कृतं तन्निष्ठं ज्ञानं सुपरीक्ष्य श्रीमान् पाणिग्रहीमहोदय सफल उद्घोषित । 'न रत्नमन्विष्यति मृग्यते हि तत्' इति कविकुलगुरोः कालिदासस्य सूक्तिं मनसि निधाय संस्कृतरूपिरत्न सुरक्षणीयं सम्भरणीयं प्रसारणीयं प्रचारणीयञ्चेति संस्कृतज्ञा भारतीयाः अनुरुद्ध्यन्ते श्रीशङ्करनारायणपाणिग्रहीमहोदयश्च यादृशमादर्शमुपस्थापितवान् तदनुसारमन्येऽपि संस्कृतस्नातकाः प्रचलन्त्विति भूयः प्रार्थयते ।

( गाण्डीवात् साभारम् )

— सर्वेश्वर राजहंसः काशीस्थः

—✱—

# मारिशसच्छात्राः संस्कृताध्ययनाय भारतं समायाताः

मारिशस देशस्य नवसंख्यकाश्छात्राः संस्कृतमध्येतुं ऋषिकेशस्थ जयराम-संस्कृतमहाविद्यालये समायाताः । ते ऽत्र संस्कृतं पठन्ति । एते अन्तर्राष्ट्रियसहयोगपरिषदः- योजनानुसारं समागताः श्रीजयरामआश्रमेणैव एतेषां निवासभोजनादिव्यवस्था कृता ।

मारिशसदेशे गतमईमासे अन्ताराष्ट्रियसहयोगपरिषदः प्रतिनिधिमण्डलमेकं तत्र स्वस्तिकामन्दिरे मूर्तीनां प्राण-प्रतिष्ठाऽवसरे गतम् । तदैव तत्र विचारविमर्शोऽभूत् - यत्केचन छात्राः संस्कृतं पठितुं भारतं गच्छन्तु । अनेन कर्मकाण्डपण्डितानां पूर्त्या सह मारिशसदेशे संस्कृतस्य व्यापकप्रचाराय अपि सहायता मिलिष्यति ।

अन्ताराष्ट्रिय-सहयोगपरिषदः महामन्त्री श्रीबालेश्वरअग्रवालः, एतेषां छात्राणां क्षेमादिक प्राप्तुं ज्ञातुञ्च जौलाई सितम्बरमासयोः तत्र गतः । एवमेव अन्ताराष्ट्रियायुर्वेदसस्थानस्याध्यक्षः वैद्यराट् श्री जगदीशप्रसाद शर्मा, अपि तत्र गतः । छात्राणां काचन स्थानीयसमस्या अपि एतयोर्गमनेन समाधानं प्राप्ताः । मारिशसे भारतस्य पूर्वराजदूतः श्री प्रेमसिंहः तथा भारते मारिशसस्य दूतावासीयप्रथमसचिवः श्री पुनुस्वामि अपि छात्रैः साकं तत्र गत्वा मिलितौ ।

प्रथमोऽयमवसरः यदा सहैव समूहरूपेण संस्कृतमध्येतुमत्र वैदेशिकाश्छात्राः समायाताः :—

- मारिशसे भारतीयमूलनिवासिनां संख्या ५२% मिता ।

# दिव्यज्योतिः संस्कृतमासिकम्

(संस्थापितम् १९५६)

## स्थापना:—

पत्रमिदं १९५६ ख्रीष्टाब्दस्याक्तोबर मासे श्री दुर्गाष्टम्यां मातुराशिर्वादेन आचार्यश्रीदिवाकरदत्तमहाभागैः संस्थापितं सञ्चालितञ्च। अस्य आद्यसम्पादका अपि श्री चरणा एव। इदानीमपि एतेषां सत्प्रयासैः—धनदानेन च प्रचलति। १९५६ ख्रीष्टाब्दे हिमाचलप्रदेशे संस्कृतस्यानेक-ग्रन्थानां, उपनिषद-वेदादीनां जन्मभूमावपि संस्कृतस्य नाम एवासीत्। समस्ताः प्राचीनसंस्कृतविद्यालयाः लुप्तप्रायाः आसन् षटत्रिंशत्-प्राचीन-राज्येषु विभक्तेऽस्मिन् प्रदेशेऽन्यप्रदेशविद्वांसः केवलं राज्ञां सविधे राजपण्डितरूपेण यत्र तत्र समाहूताः—राज्ञां दैनन्दिनकर्मसु साहाय्यमकार्षुः। संस्कृताध्ययनाध्यापनपरम्परा यद्यपि अत्रापि केषुचित् पण्डितपरिवारेषु नूतमेवासीत् - यत्र ज्योतिषायुर्वेदकर्मकाण्डादिविषयान् पारम्परिकरूपेणाध्यापन्ति स्म विद्वांसः। श्री आचार्याणामस्याकमपि च परिवारेषु इयं परम्पराऽस्मत् वृद्धप्रपितामहपर्यन्त प्रचलिता आचार्यचरणैश्च पुनः प्रतिष्ठापिता। परन्तु अतीव लघुकार्यमासीदिदं संस्कृतप्रसारदृष्टया प्रदेशेऽस्मिन्। अत्र हयामालये (शिमला) आंग्लशासनकालीनायां भारतराजधान्याम् जनाः स्वप्नान्यपि आंग्लभाषायामेव गृह्णन्ति स्म।

## उद्देश्यम्

देशसेवा प्रत्येकभारतीयस्य पावनमेव कर्तव्यम्। तत्पालनं कथं स्यादिति श्रीचरणैश्चिन्तितम्। "भारतस्य सर्वविधामूल्यवस्तुषु संस्कृतस्य प्रथमं स्थानम् असंस्कृतभारतम् न भारतं स्यात् संस्कृतसम्पर्कच्छिन्नो देशः स्वीयं रूपं न कदापि ज्ञास्यति। आरब्याङ्गलभाषाप्रवाहे च संस्कृतं यदि नष्टमभवत्तु ततोऽधिकं अहितं देशस्य न किमपि स्यात् ततो यथा स्यात्तथा संस्कृतपत्रमेकं प्रकाशनीयम्। पञ्चाम्बुराज्यपालः तत्कालीनः श्री चन्द्रशेखरप्रसादनारायणसिंहोऽपि श्री आचार्यचरणैः साकं एकमतोऽभूत। एवञ्च कठिनपरिस्थितौ संस्कृतमासिकस्य दिव्यज्योतिषो जन्म-अभूत।

# परिस्थितयः

पञ्चषड्भिः— आजीवन संरक्षकैः किञ्चित्साहाय्यं कर्तुं प्रतिवचनं दत्तम्। कैन ५०० रु० कैश्चिच्च शतम्, द्विशतम् – इत्थं साहाय्यमभूत्। कर्गजम्, मुद्रणम् सर्वमपि शिमलानगरे समस्तभारतापेक्षया महार्घमासीत् - इदानीमपि तथैव वर्तते। नात्र संस्कृतमुद्रकाः नाक्षर संयोजका एव प्राप्यन्ते। यदि कश्चित् – मुद्रकः सज्जोऽपि भवति तु त्रिगुणमूल्यं पारिश्रमिकं वा गृह्णाति। मया तदानीं शास्त्रिपरीक्षा उत्तीर्णा एवासीत् श्री चरणाः पूर्वमेव शिमलायां संस्कृतमहाविद्यालयं प्राचार्यत्वेन सेवन्ते स्म। परन्तु तत्र छात्राणां - आवास भोजनादिव्यवस्था, वस्त्रव्यवस्थादि तथाध्यापकाध्यापकवेतनादिव्यवस्था एभिरेव करणीया भवति स्म। अतः सर्वमपि-यांचितं-एकत्रितं धनं अस्य महाविद्यालयस्य सञ्चालनकर्मणि व्ययी भवति स्म। श्रीचरणाः स्वयं सप्ताष्टपुत्रपुत्रीणां पितपादाः आसन्। स्वकृते च न किमपि धनमवशिष्यते स्म अतोऽस्मिन्नेव वर्षे आकाशवाणीशिमलाकेन्द्रे एभिः अतिरिक्तकालीनकलाकारपदे सेवा स्वीकृता। अनया यदपि – धनमायातिस्म तेन पत्रसञ्चालनमारब्धम्। समस्तपरिवारेण च निःशुल्कसेवा समर्पिता।

तेनापि मुद्रण-कर्गज - डाकव्ययस्य पूर्तिर्नभवति स्म। मुद्रकैः बहुवारं कथ्यते स्म– 'पण्डितमहोदय, किमर्थं व्यर्थं स्वशक्ति धनञ्च व्ययी करोषि। यथाकाल त्वया मुद्रणशुल्कमपि दातुं न शक्यते। एवं कथमपि पत्राणि चलन्ति ?" एतत्सर्वं सोढुं वय विवशाः- आस्म। एतादृशोऽपि कालः अस्य पत्रस्य प्रसङ्गेन समुपस्थितः. यदा किल वणिग् जनानां— येभ्यः भोज्यसामग्री गृह्यते स्म—पञ्चषट्मासपर्यन्त मूल्यं ऋणरूपेण तोदयति स्म। विभिन्नविश्वविद्यालयेभ्यः श्री चरणानां कृते सेवार्थं पत्राणि समायातानि। बहुषु स्थानेषु अन्तर्व्यूहेषु साफल्यमपि प्राप्तं परन्तु "दिव्यज्योतिः कथमत्र-प्रचलिष्यति इति चिन्तनेन सहैव च संस्कृतमहाविद्यालयोऽयं समाप्तिमेष्यति। कश्च तदानीम् एतान् - निः सहायान् बालान् सर्वरूपेण पालयिष्यति -इत्यादिचिन्तापरै रेभिः न क्वापि प्राशासनिकक्षेत्रे विश्वविद्यालयक्षेत्रे वा भृतिः स्वीकृता। प्रतिवर्षं पञ्चाशत् सहस्ररूप्यकाणां व्ययः पत्रोपरि भवति स्म। एतस्य पूर्तिः श्रीचरणैः— स्वीयै विभिन्नायसाधनैर्यथा पुराणप्रवचनैः ज्योतिषकर्मकाण्डसाधनैः स्वभूमि—आयतश्च—कृता। १९६४ ख्रीष्टाब्देऽहमपि प्राध्यापकत्वेन सेवामेकस्मिन् - अन्ताराष्ट्रियसंस्थाने प्राप्नुवम्। तदपि सर्वदा पत्रस्य सेवाकर्मणि लग्नम्। द्वादशवर्षपर्यन्तामिमां सेवां कृत्वा दिव्यज्योतिषः सम्पादन न सम्यग्भवति यतोहि सर्वं अपि कालस्तु महाविद्यालये लगति स्म। तस्मात् सा सेवा १९७६ वर्षे परित्यक्ता सर्वात्मना च आचार्यचरणैः संस्थापितस्य स्वरक्तेन च सिंचितस्यास्य पत्र - वृक्षस्य सेवायै सन्नद्धोऽभवम्। १९६९ तश्च प्रमुखसम्पादकत्वेन पत्रमिमं शरीरेण - धनेन च यथास्यात्तथा सेवे। श्रीचरणा अपि-साहाय्यं सर्वदा कुर्वन्ति।

## ग्राहकाः पाठकाः

एवं किल व्यतीतोऽयं ३० वर्षाणां दीर्घकालः १९८६ अक्तोबरमासतः दिव्यज्योतिः ३१ तमे वर्षेऽधिरोहति । अद्यापि सैव चिन्ता तदेव काठिन्यम् दिनानुदिनं वर्धत एव यतोहि वस्तूनि प्रतिदिनं महार्घाणि परन्तु संस्कृतपत्राणां ग्राहका न वर्धन्ते । निःशुल्कमपि पत्रं च पठितुं अपि न समर्था आधुनिकाः, संस्कृतज्ञानमपि क्षीयमाणं वर्तते नवयुवकेषु । तथापि तेषु जागृते रभावो नास्ति ।

"रात्रिर्गमिष्यति भविष्यति सुप्रभातम्" इति चिन्तयद्भिरेवास्माभिः सेवेयं क्रियते । अत एव तदानीं [स्व. श्री ब्रह्मदत्तजिज्ञासुभिः लिखितमासीद्यत्, शिमलातः संस्कृतपत्रप्रकाशनन्तु, "किमाश्चर्यमतः परम् - इव प्रतिभाति मे"

## लेखकाः

पाठकानामिव संस्कृतलेखका किमपि स्वीयमन्यविधं विपरीतं पाठकेभ्यः स्थानं धारयन्ति । न केवलमस्य पत्रस्यापितु प्रायः संस्कृतपत्राणां लेखकाः निःशुल्कं सेवन्ते पत्राणि-इति आधुनिकेऽपि, युगे विचित्रमिव-आभाति परन्तु सत्यमिदम् । आम् - एतस्मादपि विमुखा न भवितुं शक्नुमो यत्-अनेकैः संस्कृतस्य भारतान्ताराष्ट्रिय ख्यातिप्राप्तैर्वा संस्कृतविद्वद्भिः— आंग्लभाषायामन्यासु वा भारतीयभाषासु लेखनमारब्धम् ते नूनमेवएषु लघुतमसंस्कृतपत्रेषु लेखनमिदानीं स्वप्रतिष्ठाप्रतिकूलमनुभवन्ति । तथापि सर्वे तादृशाः न सन्ति । केचन विश्वविख्याताः संस्कृतलेखका अद्यापि तेनैवात्मीयभावेन संस्कृतपत्राणि सेवन्ते । इयमपि - एका महती शक्तिरस्ति संस्कृतपत्राणां येन एतानि जीवन्ति ।

## भारतप्रशासनम्

भारतीयकेन्द्रीयशिक्षामन्त्रालयद्वारा दीयमानेनानुदानेनापि संस्कृतपत्रकारः— अवश्यमेव साहसावाप्तिः कृता । एतत्सत्यमस्ति यदिदमनुदानं स्वल्पतममेव । तथापि - अनेन संस्कृतपत्रकाराणां मानसिकबलवृद्धिस्तु-अवश्यमेव जायते । दिव्यज्योतिरपि तस्मात् भारतप्रशासनस्य कृते धन्यवादानर्पयति ।

## प्रान्तीयप्रशासनानि

यदि प्रान्तीयप्रशासनान्यपि स्व स्व प्रदेशेभ्यः प्रकाश्यमाणसंस्कृतपत्रेभ्योऽनुदानं प्रभूतमात्रायां प्रयच्छेयुस्तदा पत्राणि एतानि संस्कृतस्य

देशस्य च सेवामधिकां कर्तुमर्हन्ति । एतदर्थञ्च प्रान्तीयप्रशासनानि संस्कृतज्ञैः विवशीकरणीयानि ।

## दिव्यज्योतिषः माध्यमेन संस्कृतप्रसारविकासक्षेत्रेषु कार्यम्ः

गतेषु प्रायः दशकत्रयेषु दिव्यज्योतिषः अभिनवकविनिर्माणांकः, अभिनवशब्दनिर्माणाङ्कः, पत्रलेखनांकः, कथानिका-अंकः उपन्यासाङ्कः, इत्यादयोऽनेके विशेषाङ्काः प्रकाशमायाताः संस्कृतस्य प्रसारविकासकर्मणि लग्नानां संस्थानां व्यक्तिविशेषाणाञ्च गतिविधिप्रकाशने पत्रस्यास्य समस्तभारते संस्कृतपत्रेषु प्रथमं स्थानम् । एकबारं छागलामहाभागेन यदासौ शिक्षामन्त्री आसीत् - अस्यानुदानमेव स्थगितमासीत यतोहि प्रशासनबोधनाय तीव्र-सम्पादकीयानि मया लिखितान्यासन् यतोहि तेषां बालेऽस्मि संपादकः आसम् पत्रस्य च सर्वमपि कार्यं मदधीनमेवासीत् । तदानीं श्रीशास्त्रिवर-लालबहादुरमहाभागानां हस्तक्षेपेण विषयोऽयं कथमपि समाधानमवाप अनुदानस्य च पुनरारम्भोऽभूत् ।

## हि. प्र. मुख्यतः पत्रेण इमे विषयाः समुत्थापिताः आसन् :-

१. संस्कृतशास्त्रिशिक्षकाणां वेतनमानानि स्नातकाध्यापकवत् स्युः । (Traind graduates) समानि ।

२. डिग्रीकालेजेषु सर्वत्र संस्कृताध्यापनव्यवस्था स्यात् तत्र चाध्यापक द्वय नियुक्तं स्यात् संस्कृतकृते ।

३. संस्कृतमहाविद्यालयानामध्यापकेभ्यः विश्वविद्यालयानुदानायोगसमर्थितानि वेतनमानानि प्रदत्तानि भवेयुः ।

४. संस्कृतमहाविद्यालयेषु नवीनपाठ्यक्रमनिर्धारणं स्यादेन संस्कृतज्ञाः भारतस्य सर्वासु प्रशासनिकसेवाप्रतियोगितासु उपवेष्टमर्हास्युः ।

५ विश्वविद्यालये हिमाचलस्य शास्त्रि-आचार्या B. A. M. A. वदेव उपाधिभाजो भवेयुः ।

६ संस्कृतोत्थानाय प्रदेशे भाषाविभागनिर्माणं स्यात् ।

७. शिक्षायां संस्कृतस्य सर्वासु संस्थासु, आवश्यकमध्ययनं भवेत् ।

हर्षस्यायं विषयः यदस्माकं प्रयासैः श्री चरणानाञ्च शुभाशीर्वादेन राज्यपाल-मुख्यमन्त्रि-वराणां प्रेरणेन श्रीचरणद्वारा, उल्लिखितासु सप्तविधासु षड्विधपूर्तिः सञ्जाता अस्माभिः पत्रेण च दशकत्रयेषु यदि इदं लब्धम् - तु बहु सन्तोषकरमस्ति । इदानीं केवलमेक एव विषयोऽवशिष्यते । जगदम्बिका अत्रापि साहाय्यं करिष्यतीति दृढ़ो नो विश्वासः ।

एतत्साफल्यन्तु—आसीत् राजकीयक्षेत्रे । साहित्यिकक्षेत्रे प्रदेशेऽस्य बहवः प्रतिभाशालिनो लेखकाः संस्कृतस्य सन्ति, काव्यकाराः, कथाकाराः, नाट्यलेखकाः, विद्वांसः समालोचकाश्च विराजन्ते ।

प्रदेशे संस्कृतज्ञानां स्थितिरत्र सुदृढा । केवलं संस्कृतपत्रस्य स्थितिरेव नास्ति सुदृढा । अत एव मया युवजनानां परिज्ञानाय स्वल्पमिदं निवेदितं येन तेऽपि जानीयुर्यत् संस्कृतपत्रकारिता असिधाराव्रतमिवातिकठिना । अतः सर्वे संस्कृतपत्रकाशाणां सहयोगाय अग्रे आगन्तव्यम् ।

# संस्कृतलेखकेषु—आक्षेपः

नाहननगरे सञ्जाते हिमाचलप्रदेशभाषाविभागेन समायोजिते संस्कृतदिवसे केचन विद्वांसः संस्कृतलेखकेषु वर्तमानसमाजेन सार्कं चलनस्य प्रयासो नास्ति—इति समाक्षिपन् ।

अत्राक्षेपः सत्यता भवितुमर्हति परन्तु समालोचकाः ये किल संस्कृतं-संस्कृतलेखकान् वा अधिक्षिपन्ति ते संस्कृतसाहित्यं वर्तमानं पठन्ति एव नहि । संस्कृतस्याधुनिक लेखकैः नक्षत्रयुद्धम् (Starwar) यावत्तु लिखितमेव यदि संस्कृतज्ञाः पठेयुः । परन्तु संस्कृतज्ञानामियं प्रवृत्तिर्वर्तते यदिदं संस्कृतपत्रम् - अहो व्यर्थम् नात्र किमपि पठनीयम् - अस्ति । यतोहि पठनीयन्त्विदानीं - अश्लीलचित्रसहितचित्रपटसम्बन्धिपत्रिकासु - एव भवति । तत्र च दुर्भाग्येन देशस्य लोकाः मधुनि मक्षिका इव मुग्धाः सन्ति । विशेषतश्च भारतीयाः स्वीयं भूतं वर्तमानं भविष्यञ्च न किमपि चिन्तयन्ति ।

अत्र संस्कृतलेखकैरपि समालोचनाभ्यो न भेतव्यमपितु वर्तमानसमाजपथप्रदर्शनमपि कर्तव्यं तं च सदैव गृहीत्वा अग्रे गन्तव्यमनेनैव सुरगिरः समुपासकानां कल्याणं स्यादनेनैव च देशस्य अपि शुभं भविष्यति ।

## नववर्षाङ्कः

अक्तोबरमासीयाङ्केनानेन सहैव भवदीयमिदं पत्रं एकत्रिंशत्तमे वर्षेऽधिरोहति । गतमासादेवास्माभिः पुनरस्य पृष्ठसंख्या वर्धिता । विषयविन्यासः सम्पादनादिषु अपि श्रीमद्भिर्वैशिष्ट्यं द्रक्ष्यते यदि भवतां सहयोगः— पूर्वतोऽधिकः प्राप्तोऽभवत् । आशासेऽस्माकं पाठकाः कृपालवो लेखकाः सुहृदः सहायकाः छात्राः, अध्यापकाः, प्राध्यापकाः आचार्याः सर्वेऽपि यदि अस्माकमुत्साहवर्धनं करिष्यन्ति तु पुनरपि वयं दिव्यज्योतिषः समुपायनं भवद्भ्यः परिपुष्टरूपेण करिष्यामः सर्वेभ्योऽपि शुभकामना ।

— केशव शर्मा

# हिमाचल कला, संस्कृति एवं भाषा अकादमी, शिमला-171001

## विशेष उपलब्धियां और कार्यक्रम

१ पीच ब्लाज़म काटेज (निकट छोटा शिमला डाकघर) में एक लेखकगृह और अध्ययन केन्द्र स्थापित किया गया है, जिस में साहित्यकारों और कलाकारों के कला एवं अध्ययन उपाजन और रहने की सुविधाएं प्रदान की गई हैं

२. प्रदेश की पारम्परिक कलाओं यथा काष्ठकला, मूर्तिकला, संगीत नृत्य, पहाड़ी चित्रकला आदि में प्रशिक्षण के लिए सहायतानुदान प्रदान किया जाता है। कलाकारों के बच्चे अपने अभिभावकों गुरुओं कलाकारों के घर बैठे छात्रवृत्ति पर प्रशिक्षण प्राप्त कर सकते हैं।

३ हिमाचल की कला, संस्कृति एवं भाषा पर उच्च शोध कार्य करने के लिए फलोशिप दिए जाने की योजना है। प्रति वर्ष ३ अधिछात्रवृत्तियां इस योजना के अधीन प्रदान की जाती हैं।

४ संगीत नृत्य, वास्तुकला नाट्यकला, ललितकला में प्रशिक्षण प्राप्त करने और प्रदेश की कला, भाषा और संस्कृति पर शोध कार्य करने के लिए छात्रवृत्तियां दी जाती हैं।

५ प्रदेश के लेखकों को पुस्तक प्रकाशन हेतु सहायतानुदान दिया जाता रहा है।

६ प्रदेश की विभिन्न देवी-देवताओं पर देवगाथाखण्ड पुस्तक प्रकाशन हेतु लेख आमन्त्रित हैं।

७ सांस्कृतिक और साहित्यिक स्वैच्छिक संस्थाओं को उनके कार्यक्रमों के आयोजन के लिए सहायतानुदान दिया जाता है।

८. श्रेष्ठ पुस्तकों पर साहित्यिक पुरस्कार प्रदान किए जाते हैं।

**अधिक और विस्तृत जानकारी के लिए लिखें या मिलें**

-- सचिव,
हिमाचल कला संस्कृति एवं भाषा अकादमी,
क्लिफ, एण्ड, एस्टेट शिमला-१७१००१

R. N. 6384/57 Registered No. 10


# उत्तर प्रदेश संस्कृत अकादमी

संस्कृत, भवनम्, न्यू हैदराबाद लखनऊ, २२६००७

## विशिष्ट पुरस्कार

उत्तर प्रदेश संस्कृत अकादमी, पच्चीस हजार (२५,०००) रुपये के तीन विशिष्ट पुरस्कारों हेतु संस्कृत विद्वानों से आवेदन पत्र आमंत्रित करती है।

संस्कृत जगत में प्रचार–प्रसार एवं विकास कार्य में निरन्तर विशिष्ट सेवा के लिए। इस विशिष्ट सेवा की अवधि कम से कम ३५ वर्ष हो तथा संस्कृत साहित्य में ग्रन्थों के प्रणयन द्वारा भी महत्वपूर्ण योगदान किया गया हो। विद्वान की आयु ६० वर्ष या उससे अधिक होनी चाहिए। विशेष परिस्थितियों में आयु प्रतिबंध को शिथिल किया जा सकता है। ऐसे अर्ह संस्कृत विद्वान यदि चाहें तो अपने व्यक्तित्व का विवरण स्वयं अथवा किसी अन्य परिचित विद्वान से अपने हाल के पासपोर्ट आकार के एक छायाचित्र (फोटो) सहित ३१ अक्तूबर ८६ तक भेज सकते हैं।

## नामित पुरस्कार:

उत्तर प्रदेश संस्कृत अकादमी की पुरस्कार योजना के अन्तर्गत निम्न-लिखितनामित पुरस्कारों हेतु कलेण्डर वर्ष १९८५ में प्रकाशित मौलिक तथा उत्कृष्ट संस्कृत रचनाये लेखकों एवं प्रकाशकों से ३१ अक्तूबर ८६ तक आमंत्रित की जाती है

प्रत्येक पुरस्कार १०,००० (दस हजार रु.) का होगा।

१-कालिदास पुरस्कार (एक) वर्ष १९८५ में प्रकाशित सर्वोत्कृष्ट संस्कृत काव्य रचना के लिए

२-वाणभट्ट पुरस्कार (एक) वर्ष १९८५ में प्रकाशित सर्वोत्कृष्ट संस्कृत गद्य रचना के लिए

३-शंकर पुरस्कार (एक) वर्ष १९८५ में प्रकाशित सर्वोत्कृष्ट दर्शन रचना के लिए

लेखक/प्रकाशक को पुस्तक की आठ प्रतियाँ अकादमी को भेजनी होगी, जो वापस नहीं की जायेगी। विशेष विवरण हेतु उक्त पुरस्कारों से संबंधित मुद्रित --

सामग्री (फार्म) अकादमी कार्यालय से निशुल्क प्राप्त किये जा सकते हैं।



पी. डी. चतुर्वेदी
निदेशक

संस्कृतस्य सचित्रमासिकम्

शिमला, दिसम्बर, १९८६,

वर्षम् ३१ – अङ्कः ३

## संस्कृतनाट्योत्सवाङ्कः

भावपूर्णमुद्रायां विश्वविख्याता संस्कृत-
टकलेखिका अभिनेतृ च सुश्रीलोलाराव-
ालु बम्बई, यया संस्कृतनाटकानि
नेपालात् अमेरिकापर्यन्तं नीतानि-
भिनीतानि च ।

# विषयानुक्रमः



---

## परिचयः


संस्थापकाः तथा आद्यसम्पादकाः आचार्यश्रीदिवाकरदत्त शर्माणः, दूरभाष 3859

प्रधानसम्पादकः— प्रा० केशव शर्मा एम. ए., एम. फिल, साहित्यरत्नम्, .. 8-200

दिव्यज्योतिः कार्यालयः भारती विहारः, मशोबरा, शिमला-७ (हि.प्र.)

मुद्रकः प्रकाशकः—

भारतीमुद्रणालय भारती विहार, मशोबरा-१७१००७ शिमला (हि.प्र.)

स्वामी :—श्रीमती आचार्य रत्नकुमारी शर्मा

# भारतवर्षे संस्कृतस्य अनिवार्यता

The Sanskrit word for a Scientific work is Sastra the same word is used to denote also any branch of knowledgc. Hence Sastra probably meant with text book as also science Sastra may be either a Scietific work or a theological peradise — winternitz.

सम्—उपसर्गपूर्वक कृ धातो निष्पन्नोऽयं शब्दः। भाषाया अस्या प्रकृतिप्रत्ययादि-संस्करणाधानत्वं स्फुटं सूचयति। परिष्कृतं परिशुद्धं व्याकरणादिदोषरहितं यत् तत् संस्कृतम् मतम्। निरुक्तकारो यास्कः संस्कृतं भाषा (व्यवहारभाषा) इति निरूपयति। हनुमतापि सीताशोधप्रसङ्गेन अशोकउपवनं प्रविश्य संस्कृत एव सीतया सह वार्तालापः कृतः सैव देवभाषा, देववाणी, गीर्वाणवाणी इत्यादिनामभिः व्यवह्रियते।

संस्कृतभाषेयं सर्वास्वपि विश्वभाषासु प्राचीनतमा नास्ति अत्र कश्चिद् संशयः। भारतवर्षस्य समस्तमपि प्राचीनं वाङ्मयं संस्कृतभाषायामेव वर्तते। निखिलमपि वाङ्मयं, रामायणं, महाभारतं, पुराणानि स्मृतिग्रन्था, दर्शनानि, धर्मग्रन्थाः, महाकाव्यानि नाटकानि, गद्यकाव्यानि गीतिकाव्यानि, आख्यानसाहित्यम्, गणितं, ज्योतिषं, आयुर्वेद, धनुर्वेद, अर्थशास्त्रम्, वास्तुकलाशास्त्रम्, राजनीतिशास्त्रम्, कोशग्रन्थाश्च संस्कृतभाषाया गौरवं अभिवर्धयन्ते। ज्ञानविज्ञानयोर्न तादृश किमपि अङ्गम् यत् संस्कृतभाषायां न उपलभ्यते

भाषणाद् हि भाषा भवति। कस्याश्चिद् भाषायाः महत्वं द्वयोः तथ्ययोः आधारे स्थितम् भवति। तयोः एकम् तु तथ्यम् इदम् यत् तस्याः भाषायाः वाङ्मयम् कीदृशम् वर्तते अपरम् च तथ्यम् इदम् यत् सा भाषा स्वयम् कीदृशी अस्ति। इत्थम् कस्याः अपि भाषायाः महत्वम् स्वप्रतिपाद्याधारकम् स्वाधारकम् च भवति। संस्कृतभाषाया महत्वम् न केवलं भारतीयैरेव अपितु पाश्चात्यैरपि स्वीक्रियते। उक्तं च—"साऽमर-भारती लोके भारते भातु नित्यशः।

यस्या दिव्यप्रभावेण भारतम् भारतम् मतम्" भारतेऽपि जन्मलब्धवा यो मानवः संस्कृतं न जानाति स कीदृशो भारतीयः एतादृशान् भारतीयान् दृष्ट्वा विदेशीयाः आश्चर्यं कुर्वन्ति।

Without Sankrit India would be nothing but a bundle of linguistic groups.

अस्ति संस्कृतभाषानेकवैशिष्ट्यशालिनी। तत्र सा संस्कृतिमन्दाकिनी प्रवहति यया मानवता जीवनमश्नुवाना सततमुपचयमधिगच्छति मैक्डानलमहोदयेन स्वमतानुसारं समग्रसभ्यताया मूलं संस्कृतवाङ्मये एव निहितम्। भारोपीयपरिवारे संस्कृतभाषैव प्राचीनतमा तन्मूलक एव भाषाविज्ञानस्य उद्भवः परिणामतः तुलनात्मकभाषा-विज्ञानस्य प्रादुर्भाव जातः अतएव मैक्डानल कथयति – The discovery of the Sanskrit language led to the foundation of the science of comparative Philology. an acquaintance with the litrature of the vedas resulted in the foundation of the science of comparative mythology.

यद्यपि भाषाविज्ञानस्य भाषा-शास्त्रस्य च वर्तमानं रूपम आधुनिकमेव तथापि भारतवर्षे वैदिककालाद् आरम्य भाषाविषयकंचिन्तनं, विवेचनं विश्लेषणं चोप-लभ्यते। वेदेषु भाषाविज्ञानसंबद्धा निर्वचनादय. प्राप्यन्ते। यजुर्वेदे सर्वप्रथमं विश्लेष-णार्थे व्या+कृ धातोः प्रयोग उपलभ्यते। संस्कृतं खलु भारतीयाधुनिकप्रान्तीय-भाषाणामेकजननी साम्प्रतं अस्या ज्ञानादेव प्रान्तीयभाषाणां सम्यग ज्ञानं भवितुमर्हति। मैक्समूलरमहोदयेन सत्य उक्तम् – The greatest language in the world the most wonderful and the most perfect.

शब्द-कोष दृष्ट्या एषा अतीवोच्चतमं पदमधितिष्ठति। वर्णमाला लिपि दृष्ट्या एषा भाषा वैज्ञानिकी चास्ति। उच्चारणदृष्ट्या आंग्लभाषायां लिख्यतेऽन्यत् पठ्यते चान्यत् – But बुट लिख्यते पठ्यते च बट walk वाल्क लिख्यते उच्चार्यते च वाक Right रिघट लिख्यते उच्यते च राइट। परं संस्कृतभाषायां यल्लिख्यते तदेव उच्चार्यते। पाश्चात्यविद्वांसः अस्या एतादृशो परिपूर्णां दशां विलोक्य अस्या अध्ययनाय प्रवृत्ताः। विण्टरनिटज, मैक्डानल, मैक्समूलर कीथ वेबर इत्यादयः विद्वांस संस्कृतमधीत्य अस्या गुणगणमहिमानमुपवर्णयन्तो अमरत्वमुपागता।

धन्योऽयं भारतो देश धन्येयं सुर भारती।
तत्पूजकाः वयं धन्या अहो धन्या परम्परा ॥

संस्कृतभाषा एव मानवसंस्कृतेः प्राचीनतमस्य स्वरूपस्य प्रकाशिका वर्तते तस्याम् एव च भारतस्य संस्कृतिकजीवनम् निहितम् वर्तते। षोडशसंस्काराः

गर्भाधानादारभ्य अन्त्येष्टिपर्यन्तम् सन्ति ते च संस्कृतभाषायामेव उपनिबद्धाः सङ्कलिता वा। इत्थं सांस्कृतिकदृष्ट्यासंस्कृतभाषा अनर्घा श्रेष्ठा च। विश्वसाहित्ये संस्कृतभाषाया. श्रेष्ठतमं स्थानमस्ति —

संस्कृते संस्कृतिर्ज्ञेया संस्कृते सकलाः कलाः ।

संस्कृते सकलं ज्ञानं संस्कृते किन्न वर्तते ।

आधुनिककाले विज्ञानं यत् उन्नतिम् करोति तानि सर्वाणि तथ्यानि अस्माकं संस्कृतसाहित्यस्य वेदवाङ्मये पूर्वमेव सन्ति यथा हैलीकोप्टरः पुष्पकविमानरूपे मिसाइलादयः च अग्निबाणरूपे आसन् । अद्यापि चिकित्सायाः क्षेत्रेऽपि आयुर्वेदस्य यत् महती उपयोगिता वर्तते सापि अस्माकम् सुविदितआचार्य चरकवाग्भटसुश्रुतआदिभिः पूर्वमेव वेदेषु वर्णिता आसीत् रोगाणाम् विषये आधुनिकचिकित्सका. तेषां पद्धतीनाम् अनुकरणं कुर्वन्ति

संस्कृत वाङ्मये मानसरोगाणाम् वर्णनमपि प्राप्यते येषां आधुनिकमनोविज्ञानम् अनुकरणं करोति । इत्थं अस्माकम् सर्वेषाम् उन्नते. साधनानि संस्कृतवाङ्मये एव निहितानि सन्ति वेदस्यानुशीलनमेव मानवा लौकिकं पारलौकिकं वाऽभ्युदय साधयन्तो जीवनं सर्वविधसमुन्नतिशील विधातुं शक्नुवन्ति। च्यवनऋषिप्रणीतं औषधं च्यवनप्राशरूपेण चिकित्सकैः प्रयुज्यते ।

संस्कृतभाषायाः बहवः शब्दाः अन्य भाषाभिः गृहीताः सन्ति यथा संस्कृतभाषायाँ प्रयुक्तः स्वेदशब्दः आंग्लभाषायाँः गृहीत्वा Sweat अकरोत उर्दू, पंजाबी, भाषानाम् अनेकशब्दाः संस्कृतादेव गृहीतानि सन्ति । इत्थ न केवलं शब्दभाषाविवादः अपितु सस्कृतभाषेयं विश्वभाषापदवीमधिरोहति। यतोहि खलु वैशिष्ट्य संस्कृतभाषाया. भाषान्तरेभ्यः ।

यदि भारतस्य, सर्वाङ्गीणा समुन्नतिः काम्यते सर्वसुखदो विकासश्च अभिलष्यते तर्हि संस्कृतस्य प्रचारः प्रसारश्च नितरामनिवार्यः संस्कृतभाषापरित्यागेन भारतस्य स्वं स्वरूपेण हीनम् भविष्यति । तस्याः प्रतिपाद्यम् विश्वव्यापकस्य महत्वस्य वस्तु सत् जगतः विधिव र्तते । धर्मार्थकाममोक्षात्मकपुरुषार्थचतुष्टयस्य साधनं संस्कृत वाङ्मयमेवैकं साधनम् । सेयं संस्कृतिरजस्त्रं रक्षणीया पालनीया परिवर्धनीयेति भारतीयसंस्कृतेः समुद्धाराय अवबोधाय च संस्कृतज्ञानमनिवार्यम् ।

संस्कृतभाषाया उद्धाराय संस्कृतभाषायां वृत्तपत्राणि, कथापुस्तकानि नाट्योपन्यासादीनि विरचनीयानि । संस्कृतविद्वद्भिश्च परस्परं संस्कृतभाषायामेव भाषणं कर्त्तव्यं, संस्कृतेनैव च पत्रव्यवहारादीनि कार्याणि।

संस्कृतेऽन्वेषणकार्यस्य महत्यावश्यकता । अन्वेषणेनैव वाङ्मयस्य महत्वमुत्कर्षश्चावगम्यते संस्कृतस्य प्रचारार्थं इद आवश्यकं यत् सर्वेषामपि प्रमुखानामुपयोगिनाँ च संस्कृत ग्रन्थानां न केवल भारतीयासु भाषास्वेव प्रमाणिकोऽनुवाद स्यादपि तु विश्वस्य सर्वास्वेव प्रधानासु भाषासु तेषामनुवाद: स्यात् । अन्य भाषाभिः सहैव संस्कृतमपि सर्वेषु विद्यालयेषु अनिवार्यं स्यात् एतद् कार्यं सर्वकारप्रयत्नेन तत्सहयोगेन च सम्भवति । अतः संस्कृत साहित्यविषये मैक्समूलरस्य कथन सुसंगतमेव —

Infact there is still plenty of work left for those who came after us for with all that has been achieved, we are on the threshold of a truly historical study of Indian philosophy and literatur here also we are still like children playing on the seashore and finding now a pevil or a shell while the great ocean of that ancint literature lies before us undiscovered and unexplored

डा० (कु०) रेखा शर्मा
रिसर्च साइंटिस्ट 'ए'
संस्कृत विभाग, आगरा कालेज आगरा



## निवेदनम्

कृपया वा० शुल्कं शीघ्रतया प्रेषयित्वा अस्माकं साहाय्यं विधेयम् ।

सम्पादक:

शशि कान्त शास्त्री
ज्यो. आचार्य

★

माता — पुत्र ! शीघ्रं गच्छ पंजरे मूषकः आगतः ।
पुत्रः — तदा किं ? अहं मार्जारोऽस्मि ॥

शिक्षकः — (छात्रं प्रति) पंकज, त्वं गान्धी विषये प्रकाशं पातय ।
पंकजः — श्रीमन् श्वः प्रकाशयिष्यामि ।
शिक्षक — किमर्थं न अद्य ।

पत्नी — (भर्तारं प्रति) श्रीमन् भवान् कथं धूम्रपानं करोषि ?
भर्त्ता — प्रिये भक्षणे असमर्थोऽस्मि ।

पथिकः — मार्गं कुत्र गच्छति ।
अपरः — अहर्निशं अत्रैव वसति ।

नराय सर्वात्यधिकं सुखं किम् ?
यदा भार्या स्व मातुः गृहे गच्छति ।

पुत्रः — जननी समाचार पत्रे समाचारोऽयमस्ति यत अग्रिम सप्ताहे महामूर्खसम्मेलनं भविष्यति ।

जननी — तदा अहं किं करवाणि । शीघ्रं गच्छ । निज पितरं वद ।

पुत्रः — (पितरं प्रति) रावणं को हतवान् ?

पिता — भो मूर्खं ? किमपि न जानासि ।
शीघ्रं गच्छ रामायण आनय ।

— माध्यमिक पाठशाला
हारसी (कांगड़ा) हि. प्र.

# ज्ञानं भारः क्रियां विना

डा० राम लखन शर्मा

सांप्रतिके युगे निखिले विश्वे मानवः विविधाभिः यातनाभिः समस्याभिश्च प्रताडितः दृश्यते । विपन्नः भवतु वा सम्पन्नः प्रत्येकं जनः सुखाय चेष्टते किन्तु आप्नोति दुखम् । शासकः भवतु वा शिष्टः सर्वः अहनिशम् अस्मिन् जगज्जाले भ्राम्यन् भ्राम्यन् एकमेव गन्तव्यम् अधिगच्छति नात्र कश्चित् सन्देहः । भवतीषु एतासु वैज्ञानिक समुपलब्धिषु मानवः कुत्रापि सुखी न दृश्यते । तर्हि किं कारणं यावत् अस्याः दुर्गतेः मानवानां, किं तत्र निदानं भवितुमर्हति ।

वस्तुतः अद्यतने युगे तत्र सन्ति द्विविधाः जनाः भौतिकवादिनः अध्यात्मवादिनश्च । भौतिकवादिनः प्रायः पाश्चात्यदेशेषु बहुलतया सन्ति किन्तु ते सम्प्रति पाश्चात्यजीवनपद्धत्या प्रभावितेषु राष्ट्रेष्वपि वर्तन्ते । भौतिकवादिनां सर्वे यत्नाः ऐहिकाय सुखाय, तेषामहंभावस्य तुष्टये च भवन्ति । तेषां कृते लौकिकं सुखं परमं स्पृहणीयम् अपेक्षितञ्च वस्तु वर्तते । तत्र नास्ति कोऽपि प्रश्नः कथमिदम् आयाति । कैः साधनैश्चेदमुपलभ्यते । चेत् लुण्ठनेन, दुराचारेण, दुर्दान्तवृत्या, तस्करव्यापारेण वा वञ्चनेन इद प्राप्यते न कापि हानिः । किन्तु एतद् विपरीतं अध्यात्मवादिनां परम्परावादिनां कृते नैतत् समीचीनं प्रतिभाति । तेषां मते सुखं भवतु वा दुःखम्, उपलब्धेः यत्नः श्लाघ्य भवेत् तेषाम् आचारः व्यवहारः वा साधुः भवेत् । अत्र न केवलं गन्तव्यस्य चिन्तनं भवति, अपितु तस्य मार्गस्यापि भवति केनापि कुमार्गेण न गन्तव्यम्, महाजनो येन गतः स पन्थाः । अस्यामेव जीवनपद्धतौ पौरस्त्याः जाताः अस्यामेव सुसंवर्द्धिताश्च जायन्ते । अस्यां पद्धतौ मानवः ऐहिकं सुखं निश्चप्रचं न प्राप्नोति, न च स कांक्षति, स तु शाश्वतिकं सुखं वाञ्छति, जरामरणात् मुक्तिं कामयते, मोक्षं वाञ्छति । एतत् कृते स यावज्जीवं यतते, यदा कदा तु न केवलम् एकस्मिन् जीवने अपितु —

अपरेऽपि तदेव उद्देश्यं प्रति यत्नं विदधाति अस्यां पद्धतौ एतादृशी मान्यता वर्तते यदेकस्य जीवनस्य संस्काराः अपरस्मिन् जीवने गच्छन्ति । अतः अत्र स्पृहणीयतमं सुखं मुक्तिः एव । किन्तु कष्टं, महत् कष्टं, गतास्ते दिवसाः यदास्माकं देशे एतादृशाः यत्नाः विधीयन्ते स्म । गता. ते मनुजाः

ये स्वकीयार्थं परम्परार्थं स्व प्राणान् प्रत्यर्पयन्, गतास्ते ऋषयः, मुनयः, ये ब्रह्मचिन्तनम् अकुर्वन्। गतास्ते वीरपुङ्गवाः ये आजीवनं सत्याय प्रायतन्त। इदानीं तु सर्वं सद्धान्तिक चिन्तनं ग्रन्थेषु उपनिबद्ध, क्लिष्टायां भाषायां विहितं वर्तते। इदानीं तस्य लवोऽपि मानवानाम् आचारे नास्ति। वस्तुतः याभिः काभिः समस्याभिः मानवः जगती तले प्रताडितः अस्ति तासां सर्वासां निदानं संस्कृतसाहित्ये वरीवर्ति, चेत् संस्कृतसाहित्यस्य समुचितमालोडनं विलोडनम्, अध्ययनं, व्यवहारश्च जायेत।

एतत्तु सुविदित विपश्चितां यत् संस्कृतसाहित्ये ज्ञानस्य अक्षयो निधिः वर्तते। अस्मिन् साहित्ये परिपक्वं, प्राचीनतमं, गुह्यतमं, सुसंस्कृतं चिन्तनं विद्यते अस्य प्रमाणानि सन्ति एतादृश्यः उक्तयः।

१. अहिंसा परमोधर्मः।
२. सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।
   सर्वे भद्राणि पश्यन्तु माकश्चिद् दुःखभाग् भवेत्।
३. अयं निजः परो वेति गणना लघु चेतसाम्।
   उदार चरितानां तु वसुधैव कुटुम्बकम्।
४. आत्मवत् सर्वभूतेषु यः पश्यति स पश्यति।
५. नहि ज्ञानेन सदृशं पवित्रमिह विद्यते।
६. योगः कर्मसु कौशलम्।
७. योगश्चित्तवृत्तिनिरोधः।
८. ज्ञेयः स नित्य सन्यासी यो न द्वेष्टि न कांक्षति।
   निर्द्वन्द्वो हि महाबाहो सुखं बंधात् प्रमुच्यते॥
९. संगच्छध्वं, संवदध्वं, संवो मनांसि जानताम्।
   देवाभागं यथा पूर्वे सजानाना उपासते।
१०. समानो वः आकूति :—
११. ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्।
   तेन त्यक्तेन भुञ्जीथाः मागृधः कस्यचिद्धनम्॥

अत्र किमपि विस्तरेण न वक्तुं शक्यते, किन्तु यादृशं शाश्वतिक ज्ञान संस्कृतवाङ्मये विद्यते न तत् क्वचिदन्यत्र। संस्कृतसाहित्यं दया—दाक्षिण्य, मानवता-सत्य-अहिंसास्तेयादिभिः गुणैः सम्यगापूरितम्. यतो हि अस्य प्रणेतारः ऋषयः, मीमांसकाः तपस्विनः, त्यागिनः कवयः अभूवन्। अस्य साहित्यसर्जनं विद्वद्भिः तटस्थबुद्धया सदा मानव कल्याणाय विहितं न तु ऐहिकसुखाय।

इदानीं महत्तमं कष्टं यत् पाश्चात्यसाहित्यसर्जकाः स्वीयैः अन्तर्द्वन्द्वैः परस्परं वैमनस्या, दुर्भावनाभिश्च आपूरिताः अतः तेषां साहित्यं विध्वंसकं भवति, केवलं क्षणिकं, सुख प्रयच्छति, भौतिकं सुखं प्रयच्छति । अस्मै ऐहिकाय सुखाय एव अद्यावधिनं जाने कियन्तः यत्नाः विहिताः अतः पाश्चात्यचिन्तने कूटनीतिः, मानसिकं चाञ्चल्यं, प्रत्यक्षभावाः प्रायशः परिलक्षिताः । तत्र आत्मनः चिन्तनं जायते, अतो हि तेषाम् एका धारा पूर्वाभिमुखा जाता। पूर्वेऽपि इदानीम् एकः भयंकरो दोषः समायातः यत् साहित्ये यत् चिन्तनं विद्यते तस्य आचारः विनष्टः, केवलं तज्ज्ञानं विद्यते पुस्तकस्थम् अतः तादृशामूल्यचिन्तनोपेतं साहित्यं भारः सञ्जातः । यथोक्तं केनापि विदुषा— ज्ञानं भारः क्रियां विना ।

५८ छित्वापुर रोड, लखनऊ

## श्री नगाधिपहिमालयवन्दनम् ।

## तस्मै नमो भगवते हि नगाधिपाय ।

आचार्य रामकिशोर मिश्रः

अद्रीश्वरं नगपतिं धरणीधरेन्द्रम्,
वन्दे हिमाचलमुमाजनकं गिरीशम् ।
चीनाभियानमवरोधयतीह यो हि,
तस्मै नमो भगवते हि नगाधिपाय ॥

पूर्वाऽपराऽब्धिगतभूमिजमानदण्डः
यः कालिदासकविवर्णितकीर्तिरत्र ।
देवः स्थितो य इह भारत उत्तरस्याम्,
तस्मै नमो भगवते हि नगाधिपाय ॥

यः पार्वतीशिवविवाहकरो गिरीन्द्र-
स्तं निर्झरैर्हिमनदैः प्रसृतं नमामि ।
यो देवदारुलसितो जगदद्रिभूच्च-
स्तस्मै नमो भगवते हि नगाधिपाय ॥

कैलासभूषितशिलोच्चयराजमीड्यम् ,
मैनाकपुत्रसहितं शिखरेन्द्रमीशम् ।
यं पर्वतेशमचलेशमहं भजामि,
तस्मै नमो भगवते हि नगाधिपाय ॥

तं पार्वतीपितृवरं श्वशुरं शिवस्य,
शैलेश्वरं धरपतिं हृदयेन वन्दे ।
आण्डं विभिन्नखनिजौषधधातुदं य-
स्तस्मै नमो भगवते हि नगाधिपाय ॥

नानामहर्षिवरतापसकर्मभूमिम्,
गौरीमहोच्चशिखरेण विभूषिताङ्गम् ।
स्रोतस्वतीपितरमद्रिपतिं भजेयम्
तस्मै नमो भगवते हि नगाधिपाय ॥

गङ्गोद्गमेन यमुनाप्रभवेन देशे,
यो ब्रह्मपुत्रजननेन च लब्धकीर्तिः ।
ख्यातश्च यो जगति मानसरोवरेण,
तस्मै नमो भगवते हि नगाधिपाय ॥

शैलेश्वराय गिरिराजहिमालयाय,
मेनाधवाय गिरिजापरिपालकाय ।
सर्वोच्चगोत्रपतये तुहिनाम्बराय,
तस्मै नमो भगवते हि नगाधिपाय ॥

सोरोंनिवासिकविरामकिशोरमिश्रः,
यद् वन्दनं व्यरचयद्धि नगाधिपस्य ।
तत्पाठकाय भुवि योऽत्र सुखानि दत्ते,
तस्मै नमो भगवते हि नगाधिपाय ॥

संस्कृत विभागाध्यक्षः, म. म. डिग्री कालेज,
खेकड़ा (मेरठ) उ. प्र. २०११०१

# मानवधर्मो मानवता

श्री कृष्ण नारायण पाण्डेय

स्वायम्भुवमनुपुत्रो मनुजः
सूर्यवंशजः चन्द्र – वंशजः
प्राच्यानिवासः पश्चिमवासः
वर्णो विविधः चिन्तनमेकम्

एवं नित्यं मननीयम्
मानवधर्मो मानवता ।१।

सूर्यपूजकश्चन्द्रपूजकः
अग्निपूजको वायुपूजकः
निराकारसाकारपूजकः
तत्वम् एकं नाम्नि विभेदः

एवं नित्यं भजनीयम् ।२।

यथा यान्ति सागरं सुनद्यः
तथा हि धर्मा एकमीश्वरम्
धर्मस्थलगत एको देवः
जगदीश्वरो भाति सर्वेशः

एवं नित्यं कथनीयम् ।३।

मनुपुत्राणाम् अपि गुणवत्ता
समता समरस मनुष्यता
चरतु नरो मा पशुवत्नित्यं
मनुजो जीवतु मनुजाय सदा

एवं नित्यं वरणीयम् ।
मानवधर्मो मानवता ।४।

सम-न्वय कुटीरम् ई १०५२ राजाजीपुरम्
लखनऊ २२६०१७

# सत्याग्रहगीताया सत्याग्रहनीतिकाव्ये च सत्यं सत्याग्रहश्च

— डा० सुरेन्द्र अज्ञात:

किं सत्यमसत्यञ्चेति कवयोऽप्यत्र मोहिताः। यजुषि तु[I] सत्यस्य मुखं हिरण्मयेन पात्रेण पिहितमित्युक्तं भवति, प्रत्येकं युगे सत्यस्यान्वेषणं कुर्वद्भिः तस्य स्वरूपविषये स्वीयानि मतानि प्रतिपादितानि-तानि न सर्वाणि एकरूपाणि, नैतावदेव, तेषु परस्परं विरोधोऽपि दृश्यते क्वचिद् क्वचिद्, परं तेषामेकस्मिन् विषये मतैक्यमपि दृग्पथपथिकं भवति, तत्त्विन् सर्वे सत्यस्य समुपासकाः, सर्वे स्वीयं सत्यं सत्येन मनसा सत्यमिति मन्वते।

सत्याग्रहगीता द्वात्रिंशदुत्तरेष्वेकोनविंशतौ शतेषु खिस्ताब्देषु गतेषु प्रकाशं जगाम पैरिसनगर्याम्, भारतेत्वियं षट्पंचाशदुत्तरेष्वेकोनविंशतौ खिस्तवत्सरशतेष्वेव प्रकाशिता बभूव, ग्रन्थनिर्मात्री क्षमाराव महोदया मुख्यतो गान्धिनश्चरितस्य स्वातन्त्र्यसंग्रामस्य चेतिवृत्तात्मकं वर्णनं कृतवती गीतायाम्, परन्तु प्रसंगवशात्तस्याः सत्याग्रहस्य च विषयेऽपि विचारा दृग्गोचरीभवन्त्यत्र।

सत्यस्य सारं वर्णयन्ती कथयति सा-सारं सत्यव्रतस्येदं तितिक्षा नाम निश्चला (१८-१)।

तितिक्षैव सत्यमिति तस्या मतम्, परिभाषेयं सत्यस्य स्वरूपं पूर्णतया न व्यनक्ति, तथापि सत्ये तितिक्षातत्त्वं सर्वातिशायीत्यनेन स्पष्टोभवति निःसन्देहम्।

सत्याग्रही शारीरिकरूपेण दुर्बल सन्नपि बलवन्तमसत्यवादिनमतिशेते, यतः सत्यस्य बलमद्वितीयं भवति, कथयति कवयित्री—

शस्त्रास्त्रबलहीनानां बलं सत्याग्रहः परम् ॥ (३-२१)
बलं सर्वबलेभ्योऽपि सत्यस्यैवातिरिच्यते।

———

I यजुर्वेद संहिता, ४०-१७

सत्यवानबलः श्रेयान् सबलात्सत्यवर्जितात् · विरामहै (४-८)
परं सत्याग्रहाद् विद्धि नास्ति तीव्रतरं बलम् । (१०-२१)

सत्यं कदाचिदप्रियमपि भवति, मनुस्त्वाह सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियमिति (मनुस्मृतिः, ४- ३८) परं क्षमारावमहोदया सत्यस्याप्रियं रूपमपि स्वीकरणीयमिति प्रतिपादयति, स्वीयायाः सत्यनिष्ठायाश्च दार्ढ्यं प्रकटयति, तस्या नायको वदति -- सत्यस्य प्रतिपत्ताऽस्मि भयदस्यापि निश्चितम्, (४-१४) ।

यदा वयं सत्यस्योपासकास्तदा तु तस्य सर्वविधं रूपं स्वीकार्यमेव, न केवलं प्रियं रूपम्, यदि तस्याप्रियं रूपं त्यज्यते तदा तस्योपासनाऽपूर्णैवेति मनसि निधायैव सा परम्परागतं सत्यविषयकं विचारं खण्डितवती ।

यदा सत्यस्य विश्वरूपम्सत्याग्रहस्तदा तन्महदायुधं भवति --
प्रति शत्रुमशक्तानां बलमेकं हि केवलम् ।
---- परं सत्याग्रहायुधम् । (१६-३८)

परं मार्गोऽयं विषमः, यतः सत्यस्य विजयो घोरतमक्लेशादृते न भवति, सत्यं बाललीलयैव जयं न प्राप्नोति यदर्थं सर्वोपायैर्दृढतया च प्रयतितव्यं भवति, अनेक विधानि कष्टानि चापि सोढव्यानि भवन्ति । न सत्यमिति विजयः तस्य स्वयंसिद्ध इति, अतः कवयित्री कथयति—

शान्ति सत्त्वप्रधानोऽपि मार्गोऽयं विषमः परम् ।
न सत्यस्य जयः प्रायः क्लेशाद् घोरतमादृते । (१०-२९

सत्यस्य मार्गो निर्भयस्य जनस्य मार्गो न तु भयभीतस्य । अनेकविधकष्टविघ्नादिसंकीर्णोऽयं पन्थाः यो भीत्या सत्यं त्यजति तस्य जीवनं निष्फलमिति प्रतिपादयन्ती कवयित्री कथयति—

सत्ये सत्यपि यो भीत्या न च तत्प्रतिपद्यते ।
क्लीबयोरुभयोश्चापि निष्फलं जीवनं तयोः । ४-१२-१३)

सत्यं स्वयमपि निर्भयतां जनयति, यथा निर्भयो जनः सत्यं गृह्णाति, अत एव कवयित्री कथयति–सत्याग्रहप्रभावात्तात्मा संजातो दण्डनिर्भयः (१०-४४) इति ।

सा जनान् सत्याग्रहाय प्रचोदयन्ती कथयति — बान्धवा अयि वर्तध्वं सत्याग्रहनियन्त्रिताः (११-१०)

सा जनप्रतिक्रियामपि जानाति, न हि सर्वे सत्याग्रहस्य समर्थकाः । अत सा सत्यमिदमपि स्वीकरोति —

अस्यायुधस्य माहात्म्यं न बुद्धमखिलैर्जनैः ।
सन्त्येव केचिदद्यापि सत्याग्रहविनिन्दकाः ।। (१६-३९)

तथापि सा तान् प्रति निन्दात्मकान् शब्दान् न प्रयुनक्ति प्रत्यक्षम्, परं सा सत्यं प्रत्याग्रहवतामन्यायकृद्भिरसह युद्ध वर्णयन्ती सत्याग्रहिणो येशुगौतमकृष्णादिभिस्तोलयति —

अहो उदार सत्त्वानामिदं युद्ध महाद्भुतम् ।
येशुगौतमकृष्णानां सत्त्वोत्कर्षेण सम्मितम् । (१२ २२)
अनेन सत्याग्रहविरुद्धानां प्राकृतत्वं प्रतिपादित भवत्यर्थात् ।

सत्याग्रहनीतिकाव्यमेकोनचत्वारिंशदुत्तरेष्वेकोनविंशती ख्रिस्तवत्सरशतेषु लिपिबद्धोऽपि अष्टचत्वारिंशदुत्तरेष्वेकोनविंशतौ ख्रिस्तवत्सरशतेषु प्रकाशं जगाम, सत्याग्रहनीतिकाव्यस्य कर्ताऽपि काव्येऽस्मिन् सत्यस्य मीमांसायां स्वोपज्ञं सत्वं प्रतिपादयति ।

सत्यस्य स्वरूपवर्णनप्रसगे कवि. सत्यदेवो लिखति -

सत्त्वं हि सत्यम् (५-१-४)

सत्य विरूपम्, सदसदतस्तु गूढम् (५-१ ५)

कवौ रजस्तमोहीनं सत्त्वमयं भावं स्थितिं वा सत्वमिति मनुते, सत्यं नश्वरेऽनश्वरे चापि वस्तुनि वर्तते, तस्य रूपं लोष्ठपिण्डवत् केनापि दर्शयितुं, न शक्तम्, तद् विरूपं भवति ।

सत्यस्य महिम्नो वर्णनं कुर्वन्स कथयति यदस्य विश्वस्य जगतः सर्वस्वं सत्ये प्रतिष्ठितं वर्तते

सत्येनोत्तम्भिता भूमिः, सत्येनोत्तम्भितं वियत् ।
सत्येन वाति वायुश्च, सत्ये सर्वं प्रतिष्ठितम् ।। (१-२-२४)
सत्य जाड्यं सुधां मानं, पापं चेतो यशो रतिम् ।
हरेत्. सिञ्चेद्. दिशेद्, हन्याद्, हर्षयेत् तनुयात् श्रियात ।। (१-२-३९)

सत्यं कीदृशेषु जनेषु तिष्ठतीत्यस्य प्रश्नस्य प्रतिवचनं ददाति कविरेवं—

नैपुण्यं स्वजने, दयां परिजने, शाठ्यं शठे चान्वहं,
प्रीतिं साधुजने नयं क्षितिपतौ, विद्वज्जने चार्जवम् ।
शौर्यं शत्रुजने क्षमां लघुजने नारीजने संयमं,
कुर्वन्तो विचरन्ति ये बुधवरास्तेष्वेव सत्यस्थितिः । (१-२-३७)

सत्यस्यान्वेषणं जीवनयात्रायां सर्वदैव कार्यम्, एवं न चिन्तनीयं यद् वानप्रस्थाश्रमस्य सन्यासाश्रमस्य वावस्थायां सत्यस्य समुपासनं विधास्यामि यदा कार्यसाधनस्य

शक्तिरेव नास्ति, तदा सत्यस्य जपेन का सिद्धिर्भविष्यति ? अस्मिन् विषये कविः कथयति स्वात्मानं संबोध्य –

बाल्यं तु क्रीडने नीतं यौवनं मधुसंचये ।
प्रयाते समये सत्यं, सत्यलिप्सा वृथा न किम् ।।
यावत् कार्यसहं भवेद् वपुरिदं यावच्च नैता जरा,
यावत् साधनसन्ततेरुपगतिर्यावन्मनः संयतम् ।
तावत् सत्यविधौ यतेत तपसा श्रान्तेन्द्रिये तेजसि,
चिन्ताभिः परिलुप्तसर्वविभवे सत्ये श्रमः कीदृशः ।। (२.४-२७-२८)

सत्यसाधकस्तु सर्वदा सत्यस्य स्मरणमेव करोति, न कदापि विस्मरति तमित्यस्य प्रतिपादनं कुर्वन्स कथयति—

सत्ये रताः सत्यमनुस्मरन्ति रात्रौ च सत्यं पुनरुत्थिता ये
ते सत्यनिष्ठा प्रविशन्ति सत्ये, हविर्यथा मन्त्रहुतं हुताशे ।। (५-१-१२)

तथाविधा जना रागद्वेषादिरहिता भवन्ति. ते संसारसागरस्य पारं प्राप्नुवन्ति मुक्ताश्च भवन्ति. कविः कथयति—

ये मानवा विगतरागपरावरज्ञाः, सत्याग्रह गुणनिधिं सततं चरन्ति ।
सत्याग्रहेण परिपूतमनोविकाराः, नैवाधिशेरते वै जठरं जनन्याः ।।
(५-१-१३)

सत्ये सर्वे स्निह्यन्ति, सर्वे चात्मानः सत्यभक्तान् मन्वते, इच्छन्ति च यद् सर्वे तान् सत्यभक्तान् जानीयुः, परमनेन तेषां सत्यनिष्ठा न स्थापिता भवति, सत्यभक्तास्तु त एव सन्ति ये मृत्युकालेऽपि न सत्यं परित्यजन्ति, अन्ये तु सत्यलिंगिन एव, कविः कथयति

सम्पत्तिलाभे सुवचं महद्वचो, विपत्तिलाभे सवचं च सद् वचः ।
मृतेर्विभीतावपि सद्वचो ब्रुवा, भवन्ति सत्याग्रहवन्त आर्या । (५-१-१६)

ये जना अनृतसक्ताः, कामक्रोधयुक्ता, काञ्चनकामिनीनिरतास्ते सत्यलिंगिन एव सन्ति, यतस्ते सत्यस्य प्राप्तौ, नितरामक्षमाः । कविः कथयति—

अनृतवचनलिप्ते कामरोषादिसिक्ते विषय-भुजग-कर्णे मोहके काञ्चनादौ ।
विमल-सुखद-रूपं सत्यदेवस्य वाञ्छन्, न वहति खलु चेतः सत्यरूपं विषाक्तः ।। (५ १-१७)

ये जनाः सत्यस्य नोपासकास्ते जघन्याः, तेषां जीवनं धिक्कर्तुं महत्कष्ट कवेर्दृष्टौ—
शृण्वन्ननृताग्रहकथा गुण-कीर्त्तनानि,
सत्ये न यस्य दृढता रिपुहाऽऽत्मदीप्तिः ।
जागर्त्ति नो विविध-पृश्न-सहिष्णुता च,

घिक्कर्तु महंमिह जीवनमस्य पुंस. ।। १९

केचिद् वदन्ति धन-हीन-जनो जघन्यः,
केचिद् वदन्ति गुण-हीन-जनो जघन्यः ।
आनन्तरामिरसकृन्मतमेतदौर्त्ते
सत्याग्रहेण रहितः पुरुषो जघन्यः । २० (५-१)

तथाविधस्य जनस्य देवोपासनमपि निरर्थकम्, यतो देवाः सत्यरहितस्य संसर्गं न वाञ्छन्ति —

श्रद्धा-सत्य-मुचं नरस्य हृदयं, देवो न मुञ्चेत् कथम् । (५-१-२३)

सत्यवादास्तु समत्वसम्पन्नाः । सम्पत्तौ च विपत्तौ च तेषामेकरूपता, सत्यस्य साक्षात्कारेण ते तथाविधां मनः स्थितिं प्राप्नुवन्ति यथाविधा सम्पत्तेर्विपत्तेश्च समान-भावेन साम्मुख्यं करोति, कविः सत्यमेव कथयति—

हृष्यन्ति लोक-विभवाप्तधियस्तु मध्वाः,
क्लिश्यन्ति भाग्य रहिताश्च विपद्गृहीताः ।
सत्याग्रहे विषमतां समता सदैव,
सम्पद्विपच्च चरतः परिपीडने स्वे ।। (५ १-२२)

सत्यस्येमं महिमानं प्रस्तुत्य कविर्जनान् प्रेरयति. भवद्भिः सदैव सत्यस्य पालनं कार्यम् , सत्यं विहाय न हि किंचिदपि नित्यम् , अन्यत्सर्वं परिवर्तनशालि, अनित्यञ्च —

सत्याग्रहं भज सदा, त्यज लोकवादं, सेवस्व शास्त्रनिपुणं, त्यज मूर्खसंगम ।
दोषान् विविच्य मनसो वपुषश्च नित्यं. नम्रत्वमात्मनि निधाय रमस्व लोके ।।
१०

कायेऽस्थि-मांस रुधिरेऽभिमतिं विमुंच, जाया सुतादिषु मृषा ममतामपेहि ।
रम्यानिशं जगदिदं परिवृत्तिशीलं, तस्मादृताप्ति-नियतो भव सत्यनिष्ठः ।।
१४ (५.१)

कविः सत्यमेवेश्वर इति प्रतिपाद्य, ईश्वरसत्ययोरेकत्वं स्थापयति । स कथयति – कविर्यतस्तत् (५.१-१५)

अत्र तेन सत्यं कविरिति कथयित्वा यजुर्वेदीयमन्त्रानुसारं सत्यस्य कवित्वं साधितम्, यजुषि ' कविर्मनीषी परिभूः स्वयम्भू." (४०–४) इत्येवं ईश्वरः कविरिति कथितोऽस्ति ।

परं कवेर्नानेन सन्तोषो जातः, अतः स सत्यमीश्वरतोऽप्यधिक मनुते, स कथयति-पापाब्धितारकं, नरकयातनानिवारकञ्च सत्यादन्यन्न किञ्चिदप्यस्ति लोके, अतः

स एवोपास्य कल्याणकामुकैः स ईश्वराराधनाय नोपदिशति न चापीश्वरो नरक निवारक इति कथयति, स तु

नो चेद् पिपासा निरयाब्धितोये, सत्य प्रयत्नाद् हृदि धारयैकम्
पापाब्धितस्तारकमत्र सत्यादन्यं न पश्यामि । (५-१-१५)

इति दृढतया प्रतिपादयति

कवेर्दृष्टौ सत्यस्य महत्त्वं निरतिशयम् स आस्तिकोऽपि सन्नीश्वरतोऽधिकं सत्यं मनुते ।

सत्यस्य परिभाषाप्रसंगे क्षमादेव्याः परिभाषा न तथा व्यापिनी यथा सत्यदेव-स्येत्येव वक्तव्यमापतति, परं सत्यस्यानुपासकान् प्रति वदन् यथा सत्यदेवः सत्वप-रित्यागं करोति, न तथा क्षमादेवी तितिक्षाँ परित्यजति. ।

सत्यमप्रियं चेत्तदा किं करणीयम् ? मनुना त्वप्रियस्य सत्यस्य त्याग एव श्रेमान् इति प्रतिपादितम्, परं क्षमादेवी तस्य खण्डनं चकार, अप्रियस्य चापि सत्यस्य स्वीकरणं श्रेयस एवेति प्रतिपादितवती च, सत्यदेवोऽत्र मौनमेव भजते मौनं स्वीकृति-सूचकमिति दृशा तु स मनोरेवानुकरणं साध्विति मनुत इत्येव स्वीकर्त्तव्य भवति, यत्र साधु, स यस्य विकासयाऽऽयां क्षमादेव्या 'गतमत्र यथा सत्यस्य परिभाषायां सत्यदेवेनेति ।

इदमत्रावधेयम् गान्धिना सत्यं परमात्मना तुलितम्, गान्धिनो विचारान् प्रतिपादयन्ति क्षमादेवी तस्यामुं विचारं न कुत्रापि प्रकटीचकार, सत्यदेव आर्यसमाज-द्वारा प्रवर्तिते सत्याग्रहे सम्मिलितो वभूव न तु गान्धिना प्रवर्तिते, तथापि तेन गान्धिनो मतानुरूपमेव स्वीयस्य सत्यस्य स्वरूपं प्रतिपादितम्, क्षमादेवी गान्धि न इतिवृत्तं प्रतिदत्तावधाना यथा न तथा तस्य दर्शनं प्रति, सत्यदेवो यथा सत्याग्रह-दर्शनं प्रति दत्तावधानो न तथेतिवृत्तं प्रति' अत उभयोः प्रतिपादनयोर्भेद इति मेमति ।

— ३-८७. अज्ञातवास
बंगा - १४।१५०५

## सत्यम्

न सत्यात् परमो धर्मः न सत्यात्परमं तपः ।
न सत्यात् परमं सौख्यं सर्वं सत्ये प्रतिष्ठितम् ।।

# प्र ति रू प म्

ओम् प्रकाश शर्मा 'सुबन्धु'

बहुषु दिवसेषु व्यतीतेषु
यदा त्वं नाऽगच्छसि
तव पन्थानं पश्यन्ती
इयं नेत्र—द्वयी
श्रान्ता भवति ।

पत्रे लिखितं भवति
अहम् अमुक—दिवसे
प्राप्स्यामि,
परं तद्दिनम्
व्याकुलता—पूर्णायाम्
प्रतीक्षायाम्
समाप्तं भवति
समाप्तं भवति ।
परं त्वं न
आगच्छसि ।

अहं स्वयमभिजानामि
एकस्या बालिकायाः
विवशताम्
परं किं करोमि
तव प्रणये बद्धम्
इदं मनः
अधीरतां प्राप्नोति ।

तदा अन्वेषयामि
वन्य—वीथिकासु —

— मार्गेषु तव प्रतिरूपम्
स्यान्नाम मनस:
इयम् अधीरता
शान्ता भवेत् ।
परं न कुत्रापि लभते
तव प्रतिरूपम् ।

यदा कदाचित
तव केषाञ्चित
अंगानां छवि:
कस्या अपि बालिकाया:
बदने द्रष्टुं प्राप्नोति
तदा साम्ये क्रियमाणेऽपि
तव छवि:
तव तत् प्रतिरूपे
प्रयत्ने कृतेऽपि
न लभते ।

एकस्मिन् दिवसे
अत्यवधानेन
दृष्टा एका बालिका
प्रतीतं मया
यत्किमपि प्रतिरूपं तव
तया ध्रुवं मुषितम् ।

अधुना यदा
तव स्मृति:
सोपानम् उल्लङ्घ्य
पीडयति
तदा द्रष्टुं ताम्
तत्र गच्छामि
यत्र चौर्येण ताम्
तत्र प्रतिरूपं मत्वा
स्वकीयां मानसिकीं
व्याकुलताम्
शान्ति नयामि ।।

— प्रवक्ता
राज. संस्कृत कालेज नाभा
(पञ्जाब)

(गताङ्कादग्रे)

एका लघुकथा—

# 'कुब्जा सुन्दरी'

(मूललेखकः चक्रवर्ती राजगोपालाचार्यः)

## रूपान्तरकारः

डा. रूपनारायणपाण्डेयः, रा. इ. का.
सितारगञ्जः, नैनीतालम्

[पूर्ववृत्तसारः

श्री नरसिंहः शास्त्री विविधोच्चपदेषु न्यायालयेषु कार्यमकरोत्। दौर्भाग्येण तस्य पत्नी बहुवर्षाणि पूर्वं मृता। स सन्यासिवत्जीवनं यापयामास। एकस्मिन् दिने स क्वचिद् भाषणप्रसङ्गेन मद्रासनगरं गत आसीत्। तत्र यद्यपि तस्य भाषणानि परमप्रभावोत्पदकानि बभूवुः तथापि यत्र स निवासमकरोत् तत्रैव महाविद्यालयबालिकानां छात्रावासः आसीत्। असौ छात्रावासस्था बालिकाः दूषितदृशाऽवलोकयत्। एव जाते बालिकाभिः सः पत्रेण सूचितः यत् त्वयि कामभावोऽधुनापि त्वां तोदयति तस्मात् द्वितीयोद्वाहं कुरु अस्माभिश्च सुन्दरी कन्या त्वत्कृते समन्विष्टा अस्ति। बहुविचारानन्तरं शास्त्री सुन्दरी कन्यागृहमभियाति। तत्र स कमलां पश्यति तामेव च सुन्दरी कन्येयमिति मनसि धारयति परन्तु सुन्दरी कन्या तु कुब्जा आसीत्। इयं कमला तु छात्रावासीयकन्या आसीत्। शास्त्री दुःखितोऽभूत्—परन्तु शास्त्रज्ञानेन तस्यात्र साहाय्यं कृतम् - एतत्पश्चात् किं जातमिति पठ्यतामस्मिन्नङ्के। — सम्पादकः —]

मद्रासात् प्रस्थानकाले तस्य मनसि विरक्तिरभूत्, चिन्तितं च 'अहमादेशं पालयामि भगवतः।' अतः स सुन्दरीमवलोक्य चिन्तयामास- 'इयमस्ति परीक्षा मम। अत्राधिगन्तव्योत्तीर्णता। मया विद्याः शास्त्राणि च यद् दूषितानि' तस्यैतदेव प्रायश्चितम्। दैवाहृतामिमां कन्यकां शरणं चेद् ददामि, भवाम्यहं नितरां सौभाग्यशाली।' इत्थं घृणावेशः परिहृतस्तेन।

कमलाश्चैव वार्तां न हि परिजहार तया सचेतनं सुन्दर्याः पठनं पाठनम्, विशेषेण च चर्चितं संस्कृतस्य ज्ञानम् । अस्मात् समाश्वस्तः शास्त्री यदा सुन्दर्या सार्धं वार्ताश्चकार, तदा तस्याः शारीरिकरूपं विलुप्तमिवाभवत्, केवलं च तस्या आत्मा प्राकाशत स व्यश्वसीद् यदियं मम सुतायै लक्ष्म्यायादर्शभूता जननी भवितुमर्हति । स स्वमनसि जगाद—'महात्मानं यन्मालिन्यं तत् स्वच्छीभविष्यति स्थितिश्च तस्याः स्याद् दृढा । न मयावबुद्धमद्यापि – शरीरमात्मा च पृथक् पृथक् स्तः । यथा सत्यं ज्ञातव्यमस्ति । शरीरकुरूपता न प्रभावयत्यात्मसौन्दर्यम् आत्मसत्ता पृथक् विद्यते, या रमणीया भव , सुखयति च । अस्माकं शास्त्राणीदमेव विश्वासयन्ति ।' क्रमशः शास्त्रिणा संस्मृतमखिलमधीतं वेदान्तदर्शनम् ।

समालापः सम्पेदे, उद्वाहश्च निर्णिनाय । का कथा हर्षस्य गोविन्दार्यस्य ।

'भवान् न जामाता, अपितु देवता, आगतश्च मम रक्षायै ' इति सोऽभ्यधात्, चरणौ च तस्यास्पृशत् मन्ये स वस्तुतः कश्चिद् महात्मास्ति । ... न तस्य जाया स्मृता । लोचनजलमवरोद्धुमक्षमः स मुक्तकण्ठं रुरोद ।

तदा कमला समाश्वासयामास—'पतृव्यवर्य, नायं शुभः कालो रोदितुम्, अपितु मोदितुम् ।'

'पुत्रि ! चिरं जीव्याः, सर्वथा च सुखिनी भूयाः ' इति गोविन्दार्यः कमलायायचकथत्, लघुस्थले चैकस्मिन् नारिकेलं पूगफलं च निधाय तस्मायदात् । उद्गतमश्रुजलं कमलालोचनयोरपि ।

छात्रावासं प्रत्यागत्य सा स्वसहपाठिनीं कामाक्षीमुवाद—'अस्माकं गीताशिरोमणिरतीव मज्जनोऽस्ति । अस्माभिस्तु केवलं तस्योपहासोऽभ्यलष्यत, तस्य वासनायै विलज्जनं च, किन्तु तस्योद्वाहो निश्चित इति फलितम् ।

पुनः सावोचत्—'उद्वाहस्तिरुपतिमन्दिरे भविता, सर्वे च संस्काराः एकस्मिन्नेव दिने पूर्णतां यास्यन्ति मयापि गन्तव्यमस्ति । मां विना तस्य कार्यं न सम्पत्स्यते—इति गोविन्दार्येणोक्तम् ।'

'किन्तु आवामनध्यायं न लभेवहि ।' इति कामाक्ष्यवादीत् ।

'अवश्यं लभ्येत, उद्वाहे गन्तव्यमेव ।' इति कमलया प्रत्युक्तम ।

अन्येऽपि द्वे छात्रे ताभ्यां साकं गन्तुं निर्णीतवत्यौ, इत्थं च शास्त्रिपरिणये तिरुपतिं गन्तुं लघुरेको रम्यः समाजः संघटितः ।

'वृद्धस्य विवाहो भव्यः भविता ।' इति सर्वा एकस्वरेणोचुः, गमनस्य दिवसं च प्रत्यपालयन् ।

प्रसरन्त्यामस्यां वार्तायां धार्मिकसंस्थासु कोलाहलः प्रारभत कोऽप्य-प्राक्षीत् – 'श्रूयते शास्त्री पाणिं गृह्णाति । बालिका कुत्रत्या, किं च तद्वयः?' केनापि कथितम् — अष्टवर्षीया, केनापि द्वादश—वर्षीया, केनचिच्च युवती । किं तैलशकटे, किं विद्युच्छकटे यत्र श्रूयताम्, तत्र इयमेव चर्चा वर्तते समाजस्य च सुधारकेषु बभूवातावोद्वेगः ।

अलवारपेटस्थाने महिलासमानाधिकारसभोपविवेश, यस्य मुद्दाहः पञ्च-चत्वारिंशदधिकवर्षवयः स्थानां, पुरुषाणां निरुध्येत– इति प्रस्ताव संशोध्य वयः सीमोनपञ्चाशद्वर्षं यावत्; सभायामिदमप्यङ्गीकृतम् • यदि उदुह्यमा-नायाः कन्याया वयः पञ्चविंशदुत्तरं स्यात् तर्हि पुरुषवयसः प्रतिरोधः न स्यात् ।

द्वे वर्षे व्यगमताम् कावेरीनदीपुलिने एकस्मिन् लघौ ग्रामे नरसिंह शास्त्रिणः लब्धो कन्यका लक्ष्मी: तज्जननीमपृच्छत् – 'जनाः कथयन्ति– त्वं सुन्दरी नासि, किन्तु त्वं तियती सुन्दरी असि, कथं नु त इत्थं वदन्ति, मातः?' 'पुत्रि ! मम कटिं पश्य । अपीयं धनुर्वद् विनता न वर्तते ? कटि-रन्येषामृज्वा भवति । अहं भूम्यां करौ हृत्वा चलामि । अतएव यो मां पश्यति, स उपहसति ।' इति तस्याः विमाता सुन्दरी कथितवती ।

'अपि तव कट्यां पीडा जायते ?'

'न हि पुत्रि ! पीडा न जायते ।'

'तत् त्वं विनता भूत्वा चलसि—इति किम् ? त्वमिव वत्सापि तु चलति । अपि सा न मनोहरति ?'

लक्ष्मीः किं वदति ?' इति गृहं प्रविशता शास्त्रिणा पृष्टम् ।

'लक्ष्मीर्वदति—अहं वत्सेव मनोहरास्मि, जनाश्च वदन्ति अह कुरूपास्मि—इति मिथ्यास्ति अत्र भवान् किं मन्यते ?'

इति सुन्दरी पप्रच्छ ।

'अहं तया सह मन्ये ।' इति शास्त्री प्रत्यवादीत् ।

पितरौ समायाते लक्ष्मीरन्यदप्यलपत् । सा मातुः समक्षं तस्थौ, उवाद च 'पश्य यदाहं त्वां पश्यामि, तव वदनं दृश्यते ।' 'यदि त्वं निपुणं द्रक्ष्यसि, तर्हि वदनमपि द्रक्ष्यते ।' इति सुन्दरी कथयामास ।

'नहि मातः यदाहं तव वदनं पश्यामि, त्वं न दृश्यसे तदा; यदा च त्वां पश्यामि, तव वदनं न दृश्यते तदा ।' इति लक्ष्मीरुवाद ।

'किमियं वदतीति त्वया किञ्चिदवगम्यते ।' इति सुन्दरीं शास्त्री पृष्टवान् ।

'प्रलपतीयमसम्बद्धम्' इत्यभिदधौ सुन्दरी ।

नरसिंहशास्त्री लक्ष्मीं वक्षसाश्लिक्षत्, सोऽपरिमेये चानन्दसागरे निममज्ज, अवादीच्च-'अद्य लक्ष्मीवचनमाकर्ण्य उपनिषद एकस्य श्लोकस्य भावमवजगाम। उपनिषत्स्वप्येतादृश्यः शिशुवार्ता इव वार्ता उक्ताः सन्ति।'

'कः स श्लोकः (को भावः सः)?'

'सः श्लोकः (भावः) अस्ति - नेत्राभ्यां यद् वस्तु दृश्यते, स आत्माऽस्ति। त्वं मया यदाऽलभ्यत, तदा तस्य श्लोकस्यार्थोऽवगतः— इति ज्ञातमेकदा किन्त्वद्यास्याः बालिकायाः वचनैः तस्य तात्पर्यं नितरां विशदीकृतम्। यदा द्वौ जनौ परस्परं निर्भरस्नेहेन पश्यतः, तदा शरीरं तयोर्नयनयोः समक्षं न आसते। आत्मात्मानं पश्यति। इदमेव वचनं लक्ष्म्याः, श्लोके चाप्यभिहितम्।'

'आत्मा शरीरं च पृथक् वर्तेते- इति त्वं मन्यसे?' इति सुन्दरी पृष्टवती।

'न हि, इयं वार्ता नास्ति। इदं तत् सत्यस्यांशमात्रमस्ति इतः पश्य- इदानीमहं त्वां पश्यामि—न शरीरं ते। तत् खल्वदृश्यमस्ति। तव नेत्रे, नासिका, कर्णं वदनं चेति सर्वमदृश्यमभूत्। केवलं त्वं वर्तसे। इदमेव तद्वस्तु, यत्तु लोचनाभ्यां दृश्यते' इति शास्त्री जगाद।

सुन्दर्यापि पठिता उपनिषदः। साब्रवीत् -'तेऽन्यथापि मन्यन्ते। यदा कोऽपि सद् ज्ञानी वा मग्नेत्रेनि मीलय गभीरे समाधौ तिष्ठति, तदा स आत्मानं नेत्राभ्यां विलोकयति— इति वदन्त्युपनिषत्तत्त्वविदः।'

नरसिंहः शास्त्री कथितवान्- 'अस्याप्ययमर्थो भवति, किन्तु यं लक्ष्मी गदति, स उचिततरः व्यावहारिकश्च। नाहं साधुः, न च संतः पुनरपि यदाहं त्वामेकाग्रप्रेम्णा पश्यामि, तदा तव शरीरं न विलोक्यते तदानीं तवात्मा विलोक्यते, तं च विलोक्य संतुष्यामि। यदावयोर्लोचने मिथः मिलतः, ततश्चावामानन्दावः, तदा न केवलं तव वदनम्, अपितु तव समग्रमस्तित्वं मम नयनयोरग्रे नृत्यति। यदाहं तव नासिकां मस्तके तत्र स्थितं तिलकं तव भ्रुवं वा पश्यामि, तर्हि तव स एव भागो दृश्यते, त्वं चान्तर्हिता भवसि दृष्ट्या।

संक्षेपेण, शास्त्री सुन्दरी चान्योऽन्यं प्रेम्णा, सम्मानेन च व्यवहरन्तौ सत्यं दार्शनिकमुच्चं च जीवितं यापितवन्तौ। सत्यं तु सौन्दर्यमन्यत् किमपि नास्ति, प्रेमैव। शरीरस्य सुन्दरता कुरूपता चोद्वाहात् प्रागेव परीक्ष्येते यत् स्थायि वस्तु, तच्चरित्रम्। उद्वाहानन्तरं यदात्मात्मानं बध्नाति, तदा शरीरं रूपं चान्तर्हिते भवतः। इदं पत्न्याः पत्युश्च—उभयोः कृते सत्यमस्ति। तस्या नासिकां पश्य, दशनम् च वदनं चेति वदन्ति विलासिनः, तेषां त्वेतावद् एव प्रयोजनम्, परन्तु स्नेहबन्ध निबद्धानां मिथुनानां कृते सर्वा एतावार्ताः नश्यन्ति, तानि न आनन्दयन्ति, न च व्यथयन्ति।

— सितारगंज नैनीतालम्

## एकं विवरणम्—

# संस्कृतशोधसंस्थानसमायोजितः संस्कृतनाट्योत्सवः

### ३, ४, ५, नवम्बरमासः, १९५६ खीष्टाब्दः

### संस्थानम्

आचार्य श्री दिवाकरदत्तमहाभागैः संस्थापितमिदं संस्कृतसंस्थानम् तैरेव सञ्चाल्यते ऽहञ्च निःशुल्क सेवामत्र विविधविधां सम्पादयामि १९५६ खीष्टाब्दतः-अबिरतम्

### उद्देश्यम्

सर्वविधसुलभसाधनै संस्कृतस्य प्रसारविकासकार्याणां सञ्चालनम् ।

### पूर्वकार्याणि

संस्थाने विविधसंस्थानां जन्माभूत् ।

संस्कृतविश्वपरिषद. हिमाचलशाखा, अ० भा० सं० सा० सम्मेलनस्य हिमाचलशाखा, हि० प्र० संस्कृतशिक्षकपरिषद् इत्यादिसंस्थानामद्यापि मुख्यकार्यालयोऽत्रैव वर्तते । आभि. संस्थाभिश्च प्रदेशे संस्कृतप्रसारविकासक्षेत्रेषु कार्यं सतत क्रियमाणं वर्तते

प्रतिवर्षं वर्षद्वयानन्तरं वा सस्कृतसमाजजागरणाय संस्थानेन शिमलायां किमपि तादृक्-आयोजनं विधीयते येन जनाः प्रशासकाः—नेतारश्च एकमञ्चासीनाः भवन्ति अस्यामेव शृंखलायां वर्षेऽस्मिन्, उल्लिखिततिथिषु सम्मेलनमिदं संस्कृत-नाट्योत्सवनामकं जातम् ।

### संस्कृतनाट्योत्सवः

नवाम्बरस्य तृतीयदिवसे प्रातः एकादशवादनावसरे संस्थानकार्यालये गणपति-पूजन-वेदघोष-स्वस्तिवाचनपूर्वकं प्रारम्भिकयज्ञोऽक्रियत । तत्पश्चात् शिमलानगरे

समीपस्थोपनगरेषु च दशसहस्र–प्रचारपत्राणि वितीर्णानि यत्राग्रहोऽयमासीद्यत् प्रशासनं लोकाश्च परस्परं संस्कृतस्यावश्यकी करणाय संस्कृतस्य च सार्वजनिक-प्रचार-प्रसारकृते सम्मिलय कार्यं कुर्युर्येन भारतं स्वस्वतन्त्रतां संरक्षितुं शक्तं स्यात् ।

द्वितीये दिने शिमलाया प्रख्याते गेयटी नामके नाट्यगृहे संस्कृत - नाट्यो सव-समारम्भः- अभूत् एकादशवादने प्रदेशस्य मुख्यमन्त्रिमहोदया. श्री वीरभद्रसिंहाः भारतराजधान्या देहल्यामासन् । तऽपि प्रातः नववादने शिमलां प्राप्ताः सार्धदशवादने दूरभाषेणासूचयन् यद्आगच्छेयम्? अस्माभि.- कथितं यत् किञ्चिद्विश्रम्य एकादशवादने समुद्घाटयन्तु उत्सवम् । ते किल एकादशवादने गेयटी नाट्य गृहं प्राप्ताः ।

श्री आचार्य चरणैः– भाषाविभागनिदेशकेन श्री निवास-जोशिना च वहिर्मुख्य-द्वारोपरि मुख्यातिथिमहोदयानां स्वागतं व्याहृतम् आभ्यन्तरे मञ्चोपरि प्रा० केशवशर्मणा श्री वीरभद्रमहाभागानां स्वागतमकारि पश्चाच्च कु. गिरिजा तिलक-प्रदानपूर्वकं मुख्यातिथिं समर्चयामास । मुख्यातिथिभिः ज्योति. प्रज्वालनपूर्वकं सर-स्वत्या पूजनसहितञ्च नाट्योत्सवस्योद्घाटनमकारि ततः कु. गिरिजा

रूपराशे ! हे हिमाचल ! वन्दनमभिवन्दनन्ते ।
स्वर्णराजत – शृंगशोभित – वन्दनमभिनन्दनन्ते ॥

इति दिव्यज्योतिषः सम्पादकानां प्रख्यातगीतगानेन" मङ्गलाचरणं अकरोत् । मङ्ग-लाचरणोपरान्तं प्रा० केशवशर्मणा संस्थानस्य विवरणमुपस्थापितम् । आचार्यस्ततः मुख्यातिथेः स्वागतकरणाय प्रार्थिताः । स्वीये स्वागतभाषणे श्री आचार्यचरणैः श्री वीरभद्रसिंहस्य संस्कृतसेवाविषये विस्तरेण स्वविचाराः प्रकटिताः प्रश्चाच्च प्रा० शर्मणा मुख्यातिथिं उद्घाटनभाषणं कर्तुं प्रार्थितः ।

## संस्कृतमहाविद्यालयाः

मुख्यमन्त्रिणा स्वीये समुद्घाटने कथितं यत् प्रशासनं एवं विधनियमावलिनिर्माणे संलग्नमस्ति येन संस्कृतस्य केचन महाविद्यालयाः पूर्णमहाविद्यालयरूपाः स्युः ।

## संस्कृतभवनम्

पूर्वं समुद्घोषितं संस्कृतभवनं संस्कृतिभवननाम्ना लक्षद्वयस्थाने चत्वारिंशत् लक्षात्मकव्ययेन निर्मितं भविष्यति । शिमलायाञ्च एतस्य कृते भूमिः अधिगता ।

## संस्कृतस्यानिवार्यता

संस्कृतस्यानिवार्यशिक्षा केन प्रकारेण प्रदेशे छात्रेभ्यः दीयेत अत्रापि विचार्यते प्रशासनेन केवलमत्र प्रशासनमेव न विचारयति अपितु शिक्षासचिवस्य

संस्कृतप्रतिनिधिभिः साकं एतद्विषये संयुक्ताधिवेशनानि जायन्ते विचारणाय काले काले ।

श्री आचार्य चरणाः केशवशर्माणश्च एवं विधायोजन-संसाधनाय मुख्यमन्त्रिणा अभिनन्दिता —यतोहि एभिः प्रयासैः संस्कृतस्य ज्ञानज्योतिः ज्वलन्ती तिष्ठति भारतस्य नवनिर्माणे चानेन साहाय्यं प्राप्यते ।

एतदुपरान्त प्रा: केशव शर्मणा सर्वेऽपि समुपस्थिताः जनाः धन्यवादैरभिनन्दिताः राजकीयउच्चकन्याविद्यालय (लक्कड़बाजार शिमला) छात्राभिः – 'सुजलां सुफलामिति राष्ट्रगीतं गीतम् पश्चात् प्रारब्धः संस्कृतनाट्योत्सवः ।

अत्र किल चत्वारि संस्कृत नाटकानि- अभिनीतानि । प्रा. केशव शर्मणः मधुशाला, एकभारतम् च पञ्जाम्बुप्रदेशस्य प्रख्यातसंस्कृतविदुषः श्री शुकदेव मुनेः वेतालपराजयम् नाटकम् भासस्य च कर्णभार । प्रा० शर्मणः मधुशाला नाटकं राजकीयसंस्कृतकालेजस्य शिमलास्थितस्य छात्रैरभिनीतम् । नाटकस्य निर्देशनादौ आचार्यबलिरामः श्री मदन मोहनश्च सहभागिनावास्ताम् । कालेजस्य प्राचार्यः श्रीरमाकान्त जोशी अपि समारोहे सहयोगमदात् । शर्मणः द्वितीयं नाटकमासीत—एकभारतम् । इदं किल शिमलास्थ रा. उ विद्यालय (लक्कड़बाजार) छात्राभिरभिनीतम । अत्र दमयन्तीकपूर मुख्याध्यापिका परमसहयोगिनी सिद्धा या समारोहदिवसेषु सततं स्वोपस्थित्या सहयोगमदात् । तृतीय नाटकं कर्णभारः आसीत् – सोलनस्थराजकीयसंस्कृतकालेजस्य छात्रैरभिनीतम । एतस्य निर्देशकः आसीत डा० श्री हरिदत्त आचार्यः । एक भारतम् नाटकस्य च निर्देशनं श्री सीताराम शास्त्रिणा शांकली विद्यालयेऽध्यापयता कृतम् । चतुर्थनाटकमासीत् वेतालपराजयम् । अस्य लेखकः श्री शुकदेवमुनिः, संस्कृतस्य समर्थः कविः, लेखकश्च पटियालास्थ नाभा महाविद्यालये प्राचार्यत्वेनाधितिष्ठते । अस्यानेकरचना भवद्भिः दिव्यज्योतिषि पठिताः स्यु । अस्य निर्देशनञ्च तत्रत्येनैव प्राध्यापकेन आचार्य श्री जीतसिंह खोखरेण कृतम् जीतसिंह नामकेन छात्रेण वेतालस्याभिनयः तथा कृतः यथाऽसौ अभिनये प्रथमपुरस्कारं प्राप्तवान् ।

## विजेतारः

अत्र वेतालपराजयम् नाटकं प्रथममायातम् नाभास्थ सं. महाविद्यालयेन च अस्याभिनयतः अचलविजयोपहाररूपं सरस्वतीचक्रं जितम् । लक्कड़बाजारस्थ कन्या, उ. विद्यालयेन च द्वितीयपुरस्कार एक भारतम् नाट्काभिनयार्थं जितः अचलसरस्वतीचक्ररूपः । सोलनस्थ रा. सं. महाविद्यालयेन तृतीयः शिमलास्थ रा. सं. महाविद्यालयेन च चतुर्थपुरस्कारः जितः । उभाभ्यां छात्र–छात्राभ्यां अभिनये प्रथमस्थानप्राप्त्यर्थं रजतचषकौ उपायनी कृतौ ।

सर्वेभ्यश्च संस्कृतनाटकेषु भागगृहीतृभ्यः अभिनेतृभ्योऽपि पुरस्कारराशिः Cash Prize) प्रदत्त. ।

संस्कृत महाविद्यालय अध्यापका डिग्रीकालेज अध्यापका: संस्कृतस्य, विद्यालयेषु च नियुक्ताः शास्त्रीअध्यापकाश्चेत् – संस्कृतम्प्रति कामपि जागृतिमुत्पादयेयु स्तु संस्कृतस्य बहु हितं भवितुं शक्नोति । किं कापि – आशा अत्र क्रियेत ?

अस्मिन्नेव समारोहे संस्कृतस्य पुस्तकत्रयमपि मौलिकं पठनाय विमोचितम् प्रदेश मुख्यमन्त्रिणा १. "सूनृता" गीतकाव्यम् लेखक: प्रो. केशव शर्मा दिव्यज्योतिषः सम्पादकः । २, "हिमांचल प्रदेशे संस्कृतस्य प्रसारो विकासश्च" (अनुसंधानात्मकः ऐतिहासिकसामग्रीसम्पोषितः ग्रन्थः) लेखकः पूर्ववत् प्रा. शर्मा ३. यौतुकम् (लघुकथानकसंग्रहः) लेखकः प्रा. श्री जीतसिंह खोखर प्रवक्ता–रा. संस्कृत म. वि. नाभा पञ्जाब । संस्कृते बहूनि गीतान्यपि गीतानि गायकैः संस्कृतनाटकानां अभिनयादिकं निर्णायिकावास्ताम् केन्द्रीयसर्वकारस्य संगीतनाटकप्रभागस्य सहायकनिदेशकः श्रीमहेशचन्द्रः तथा राजकीय संस्कृत-महाविद्यालयस्य नाहनस्थस्य प्राचार्यः श्रीशुकदेव-आचार्य ।

मध्यान्हभोजनोपरान्तं कैश्चित् शिमलाभ्रमणस्यान इलाभः कृतः । एवञ्च नाट्योत्सवः सम्पूर्णसाफल्यतया सम्पन्नः । अस्यैवाङ्गभूतं शिक्षासम्मेलनं कविसम्मेलञ्च पञ्चमे दिवसेऽभवताम् ।

शिक्षा–सम्मेलनं एकादशवादने भवितव्यमासीत् । अस्याध्यक्षता च हि. प्र. वि. वि. सांध्यमहाविद्यालयस्य प्राचार्येण कर्तव्या आसीत्, परन्तु महाविद्यालयस्य प्राध्यापकयुगलं कारदुर्घटनायां पञ्चत्वं गतम् । अतोऽसौ आगन्तुं न समर्थो बभूव ततः श्री आचार्य दिवाकरदत्त शर्मभिरेव अध्यक्षताऽस्य शिक्षा–सम्मेलनस्य कृता अत्र पञ्जाब-हिमाचलहर्याणा आदिविभिन्नप्रदेशेषु संस्कृतस्य स्थितिश्चर्चिता । प्रदेश शासनञ्च प्रस्तावत्रयेण मुख्यतया निर्विरोधं पारितेन प्रार्थितं यत् —

१. प्रदेशशिक्षायां संस्कृतस्यानिवार्यं शिक्षणं स्यात्

२. संस्कृतमहाविद्यालयाः- पूर्णतः महाविद्यालयाः स्युः न केवल नामतः सुविधाभिरपि ।

३. प्रदेश शिक्षाविभागे च संस्कृतस्य विशेषाधिकारो नियुज्येत येन संस्कृतस्य योजनाः यथाकालं विचारिताः स्युस्तत्र च कार्यजातं समुचितं भवेत् ।

## संस्कृतकविसम्मेलनम्

अस्मिन्नेव दिने सायं चतुर्वादने संस्कृतकविसम्मेलनं जातम् । अस्य अध्यक्षता श्री के.सी. शर्मा आई. ए.एस. हि.प्र. राज्यपाल सचिवः अकरोत् अयं किल संस्कृतस्य समर्थः कविः प्रख्यातसाहित्यकारः, परमविनीतः विदुषां गुणगणयुतश्च । अत्र भागग्रहीतार आसन् —

१, श्री जीतसिंहः, २. श्री पूर्णचन्द्र आचार्य, ३. डा. हरिदत्त आचार्यः, रा, सं. का सोलन, ४. डा. ओं प्रकाश शर्मा, रा सं. का. नाभा, ५ श्री जीतसिंह खोखरः, रा. सं. का नाभा ६ श्री केशवराम शर्मा प्रवक्ता रा. डिग्री कालेजः सोलन, ७. दिव्यज्योतिष सम्पादक श्री केशवशर्मा. सम्मेलनाध्यक्षः श्री के. सी. शर्मा. आई ए. एस

कविसम्मेलनाध्यक्षेण श्री शर्मणा अन्ते पुरस्कारावतरणं कृतम् । एवञ्च संस्कृतनाट्योत्सवः त्रिदिवसीयः साफल्येन सम्पन्नः ।

अत्र केन्द्रीयप्रशासनस्य नाटकसंगीतप्रभागकलाकारैः संगीतवाद्यादिसंयोजन-निर्देशने भागो गृहीतः । संस्थानसचिवत्वेन पुनरपि श्री केशवशर्मा सर्वेभ्योऽपि सम्बद्धजनेभ्यः स्वीयाँ कृतज्ञतां प्राकटयत् सविनयं सादरञ्च ।

---

# संस्कृतशोध संस्थान द्वारा आयोजित त्रिदिवसीय संस्कृत नाट्योत्सव समारोह

३, ४, ५, नवम्बर को कार्यालय मशोबरा में, गेयटी थियेटर, एवं गाँधी भवन शिमला इन तीन स्थानों पर समारोह पूर्वक हुआ ।

३ नवम्बर को कार्यालय में हवन, वेदपाठ तथा दस हजार प्रचार पत्र शिमला के कार्यालयों बाजारों और समीपवर्ती उपनगरों मे बाँटें गए

४ नवम्वर को गेयटी थियेटर में चार संस्कृत नाटकों एवं १० संकृत गीतों को प्रस्तुत किया गया । इसमें चार संस्कृत नाटक मण्डलियों ने तथा केन्द्रीय सरकार के हिमाचल स्थित संगीत नाटक प्रभाग के कलाकारों ने भाग लिया । प्रभाग के उपनिदेशक श्री महेशचन्द्र जी का सहयोग बहुत ही सौहार्द पूर्ण रहा । नाटक मण्डलियों को दो शील्ड तथा रजत चषक प्रदान किए गए प्रत्येक भाग लेने वाले पात्रों को नकद पुरस्कार भी दिए गए भोजन निवास की सारी व्यवस्था बाहर से आने वालों को की गई थी ।

५ नवम्बर को गांधी भवन माल रोड पर संकृत शिक्षासम्मेलन तथा संस्कृत कवि सम्मेलन का आयोजन किया गया । शिक्षा सम्मेलन की अध्यक्षता आचार्य श्री

दिवाकरदत्त जी ने की तथा कवि सम्मेलन की अध्यक्षता श्री के. सी. शर्मा, आई. ए. एस. ने की पंजाब, हरियाणा, हिमाचल प्रदेश में संस्कृत की परिस्थिति की विस्तार से समालोचना की गई तथा हिमाचल सरकार को निर्विरोध पारित तीन प्रस्ताव भेजे गए :—

१. संस्कृत को प्रदेश की शिक्षा मे अनिवार्य किया जाय।

२. संस्कृत महाविद्यालयों को नाम का नहीं वास्तविक कालेजों का दर्जा सुविधाओं और वेतनमानों सहित दिया जाय।

३. प्रदेश शिक्षा विभाग में एक संस्कृत विशेषाधिकारी संस्कृत विद्वान को नियुक्त किया जाय।

संस्कृत कवि सम्मेलन में आठ संस्कृत के प्रख्यात कवियों ने भाग ग्रहण किया।

सभी दिनों में उत्सव में प्रर्याप्त जन समुदाय उपस्थित होता था।

समारोह के आयोजन में हि. प्र. भाषा विभाग एवं निदेशक श्रीनिवास जोशी जी का विशेष सहयोग रहा वह समय २ पर स्वयं भी उत्सव में आते रहे।

संस्कृत नाटक अभिनेताओं में से श्रेष्ठ अभिनेता को देने के लिए प्रो० सन्तोष वर्मा ने पानीपत से अपनी ओर से नकद राशि भेजी उनके हम हृदय से आभारी है।

कला, संस्कृति—भाषा अकादमी एवं जनसम्पर्क विभाग हि. प्र. ने भी सहयोग द्वारा कृतार्थ किया। दोनों के हम कृतज्ञ हैं।

अन्य जिन महानुभावों का भी सहयोग इस उत्सव में रहा उन सभी के प्रति पुनः आभार व्यक्त करते हैं।

— केशव शर्मा.

आदरी सचीव, संस्कृत शोधसंस्थानम्

मशोबरा—शिमला-७

# महत्वपूर्णाः प्राप्याः विशेषाङ्काः

१. विश्व संस्कृत सम्मेलनाङ्कः
२. नवशब्द निर्माणाङ्कः
३. नवकथानिकाविशेषाङ्कः
४. संस्कृतचलचित्रविशेषाङ्कः
५. श्री शङ्कराचार्य विशेषाङ्कः

## मूल्यम्

एकस्य मासाङ्कस्य मूल्यं रुप्यकचतुष्टयं विशेषाङ्कस्य मूल्य अष्टौ रूप्यकाणि । पूर्वं मूल्यप्राप्तावेव अङ्का प्रेषयिष्यन्ते ।

— प्रधान सम्पादकः

# संस्कृतशोधछात्राणां कृते उपयोगिनः

दिव्यज्योतिषः प्राप्या गताङ्का

| सन् | वर्षम् | अङ्काः |
|---|---|---|
| ३९५६ | १ | १ |
| १९५७ | २ | २ |
| १९५८ | ३ | १२ |
| १९५९ | ४ | ८ |
| १९६० | ५ | ८ |
| १९६१ | ६ | ७ |
| १९६२ | ७ | १, २, ३, |
| १९६४ | ९ | २, ६, |
| १९६६ | ११ | ४, ८, ९, ११ |
| १९६७ | १२ | ५ |
| १९६८ | १३ | ३, ४, |
| १९६९ | १४ | ४, ६, |
| १९७० | १५ | १, ४, १० |
| १९७१ | १६ | १, २, ४, ५. ६ |
| १९७२ | १७ | . ५, ६, ७, ८, ९, १०, ११, १२, |
| १९७३ | १८ | १, २. ८, ९, १०, |
| १९७४ | १९ | २. ३, ४, ५. ६ ७. ८, ९, १०, ११, १२, |
| १९७५ | २० | १, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२, |
| १९७६ | २१ | २, ३, ४, ५, ६, ८, ९, १०, ११, १२ |
| १९७७ | २२ | २. ३, ४, ५, ९ १०. ११, १२, |
| १९७८ | २३ | १, २, ३, ८ |
| १९७९ | २४ | १, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२, |
| १९८० | २५ | १ से १२ तक |
| १९८५ | २९ | १ से १२ तक |
| १९८६ | ३० | १ से १२ तक |

—★—

R. N. 6384/57 Registered No. 10

# संस्कृतशोधसंस्थानस्य अभिनवप्रकाशनानि

## सूनृता

## ( सं० गीत काव्य् )

दिव्यज्योतिष: प्रधानसम्पादकेन श्रीमदाचार्यकेशवशर्मणा प्रणीतं सचित्रं पञ्चचत्वारिंशत्सुललितपद्य– गद्यगीतग्रथितं पुरीस्थश्रीजगन्नाथ सं० वि० विद्यालय-कुलपतिचरस्यश्रीमदाचार्यप्रवर डा० सत्यव्रतप्राक्कथन समुपेतं संस्कृत जगति महत्त्वपूर्णं खण्डकाव्यम् ।

— मूल्यम् २५ रु० डाक व्यय: पृथक् —

★

## पथ्यापथ्य विनिर्णयः

हिमाचलप्रदेशस्य सुविख्यातराजवैद्य स्व० पञ्चाननशर्मणा महाविदुषा १०५ वर्ष पूर्वं प्रणीत: सं० टीका सहितस्तथा हिन्दीटीकया समुपेत –दुर्लभो ग्रन्थ:

— मूल्यम् २० रु० डाक व्यय: पृथक् —

## हिमाचलप्रदेशे संस्कृतप्रसारो विकासश्च

स्वातन्त्र्यात्परं हिमाचलप्रदेशे संस्कृतप्रसारविकासविषये यदायोजनादिकं जातं तस्य सचित्रं विवरणं दिव्यज्योतिष: प्रधानसम्पादकेन श्रीमदाचार्यकेशव–शर्मणाऽस्मिन् ग्रन्थे ग्रथितम् ।

— मूल्यम् ५० रु० डाक व्यय: पृथक् —

★

त्वर्यताम् त्वर्यताम् त्वर्यताम्

प्रतय: स्वल्पा एव सन्ति

युगपत् पुस्तकत्रयं, अशीतिरूप्यकै: प्राप्यते

— प्राप्तिस्थानम् —

संस्कृत शोध संस्थानम्, भारती विहार मशोबरा, शिमला-७

संस्कृतस्य सचित्रमासिकम्

शिमला, जनवरी, १९८७,

वर्षम् ३१ - अङ्कः - ४

## संस्कृतस्य प्रसारविकासकर्मणि

भारतीयमहिलानां गणनीय – सहयोगस्य दिव्यज्योतिषा निरन्तरं स्वागतमकारि । आसु एव वर्तते प्रो. सुश्री सन्तोष वर्मा गांधी आदर्श कालेज समालखा करनाल हरियाणा प्रदेशे संस्कृतविभागाध्यक्षा, या संस्कृते लेखनेन आर्थिकसाहाय्येनापि च संस्कृतसमृद्धिकरणे संलग्ना ।

*

# विषयानुक्रमः





## परिचयः


**संस्थापकाः** तथा आद्यसम्पादकाः आचार्यश्रीदिवाकरदत्तशर्माण. दूरभाष. : 3859

**प्रधानसम्पादकः**— प्रा० केशव शर्मा एम. ए. एम. फिल. साहित्यरत्नम्, ,, 8 200

**दिव्यज्योतिः** कार्यालय भारती विहारः, मशोबरा, शिमला-१ (हि.प्र.)

मुद्रकः प्रकाशकः—

भारतीमुद्रणालय भारती विहार, मशोबरा-१७१००७ शिमला (हि.प्र.)

**स्वामी :—श्रीमती आचार्य रत्नकुमारी शर्मा**






वार्षिक मूल्यम् २० रु०

# "कानिचन प्रेरकप्रसङ्गानि–उत्तररामचरितम्"

आचार्य सुरेशः

उत्तररामचरितनाटकम् समालोचकानां, पाठकानाञ्च अतीव प्रीति-भाजनं बभूव। भवभूतिना अस्मिन् स्वकल्पनाप्रयोगेण नाटकोपयोगी-परिवर्तनं कृतमस्ति यथा-चित्रदर्शन दृश्यम्, रामस्य पुनः दण्डकारण्ये प्रविष्टः वनदेवताया वासन्त्याश्च संगमः एवमेव छायासीताया सत्ता नाटकस्याभि-वृद्धि कुर्वन्ति आधुनिकशासकानां कृते दृश्य नाटकम् अतीव शिक्षाप्रदमस्ति। नाटकेऽस्मिन् लोकाराधनतत्परस्य रामस्योक्तिरियं तस्योदात्तस्वरूपमेवो-पस्थापयति। स तु सर्वस्वमपि वस्तुजातं त्यक्तुकाम प्रजामुपसादयितुम्। कामं जानकी अपि कथं न गच्छेद् तस्य तु प्रतिज्ञा एव यद्—

'स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।
आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा॥

कुत्रास्ति एतादृश आदर्शलोकनायकः आदर्श प्रजापालक इदानीमुप दृश आसीत् रामः भगवता श्री रामेण प्रसभतया घोरं आरण्यकव्रतमङ्गीकृतम् किन्तु पितुराज्ञा न लोपिता यथा—

"पुत्र संक्रात लक्ष्मीर्कैयद् वृद्धेक्ष्वाकुभिर्धृतम्।
धृतं बाल्ये तदार्येण पुण्यमारण्यकव्रतम्।

अस्यामवस्थायाम् कीदृशानि कष्टानि सोढानि अत्र द्रष्टव्यम्—
रामस्य सीताम् प्रति विलापः कीदृशो मर्मस्पृक्—

"हा हा देवि! स्फुटति हृदयं ध्वंसते देहबन्धः
शून्यं मन्ये जगदविरलं ज्वालमन्तर्ज्वलामि
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि॥

एवञ्च—अस्य कवितां श्रुत्वा—
"अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्।"
अन्ये जनाश्चापि रामं प्रति कथयन्ति यत्—

अयि कठोर ? यशः किल ते प्रियं,
किमयशो ननु घोरमतः परम् ?
किमभवद्विपिने हरिणी दृशः,
कथय नाथ ! कथं बत मन्यसे ?

अनेन स्पष्टं भवति यत् महतीषु विपत्तिषु अपि रामः प्रजानामनुरञ्जनम्, यश्च न त्यक्तवान् । सीताया परपुरुषभवननिवासदोषः विक्षिप्त—कुक्कुरस्य विषमिव सर्वतः प्रसक्तम् यद्यपि सीतायाः तद्दोषं अग्निप्रवेशादिभिरुपायैं प्रशमितम् तथापि—

"उत्पत्ति परिपूतायाः किमस्याः पावनान्तरैः ।
तीर्थोदकं च वन्हिश्च नान्यतः शुद्धिमर्हतः ।

किन्तु सा तु अभागिनी यथा—
"त्वया जगन्ति पुण्यानि त्वय्यपुण्या जनोक्तयः ।
नाथवन्तस्त्वया लोकास्त्वमनाथा विपत्स्यसे ।

सीताया रूपस्य सौन्दर्यस्य च चमत्कारोपि दर्शनीयः यथा—
"इयं गेहे लक्ष्मी इयममृतवर्तिर्नयनयोः ।
असावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः ।
अयं बाहुः कण्ठे शिशिरमसृणमौक्तिकसरः,
अस्या किम न प्रेयं यदि पुनरसह्यस्तु विरहः ॥

एवमेव आचार्यस्य विषये एकः प्रसङ्गः—
वितरति गुरु प्राज्ञे विद्यां यथैव तथा जड़े,
न खलु तयोर्ज्ञाने शक्ति करोत्यपहन्ति वा ।
भवति हि पुनर्भूयान् भेदः फलं प्रति तद्यथा,
प्रभवति शुचि विम्बग्राहे मणिर्न मृदादयः ॥

अतः मर्यादापुरुषोत्तमश्री रामचन्द्रस्य जीवनं आधुनिकपुरुषाणाम्, शासकानां, गृहस्थानां, कृते अनुकरणीयमस्ति तथा च सीताया चरितं नारीणां कृते पदे-पदे शिक्षाप्रदमस्ति । अतः रामादिवत् आचरितव्यम् न तु रावणादिवत् । यतो हि रामः सत्यस्य साक्षाद् प्रतिमा तथा रावणः अनृतस्य (पापस्य) प्रत्यक्षमुदाहरणम् । अतः सत्यमेव विजयते नानृतम्

— स्थान वरयाड़ी, जिला सोलन
(हि० प्र०)

# "शिमलायात्रास्मरणम्"

डा० जगदीश चन्द्र शर्मा

अस्ति निखिलविश्वपूजितस्य विविधदेवाराधितस्य अनेकधर्मावलम्बि-जनाधिष्ठितस्य भारतवर्षस्य भूषणस्वरूपा मौलिमुकुटमिव सर्वनगराणां 'जाखू' इत्यभिधानां हनुमत्मन्दिराधिष्ठिता शिमला नाम नगरी । यत्र सर्वसमृद्धिसम्पन्नाः सकलकलाकोविदः राजनीतिनिष्णाताः धर्मधौरेयाः सनातनधर्मरक्षणतत्पराः अनेकविद्यापारदृश्वानः नैकसंस्थासंस्थानपूजिताः सकलजनसम्मान्याः जनाः निवसन्ति । उन्नतानि शिखराणि सदैव हिमाच्छादितानि तिष्ठन्ति येन पर्वतश्रृंखलानां सौन्दर्यं मनांसि हरति । सर्वतः उन्नतानि सुधाधवलितानि बजूलेपलिप्तानि अनेकवर्णोपेतानि भवनानि दर्शकजनमनांसि रञ्जयन्ति । तत्रापि मध्ये मध्ये अनेकपठनेच्छुछात्रलसिता विद्याध्ययनतत्परबालिकोपेताः निखिलविद्यासमुत्पादनदक्षाः प्रसादाः इव निखिलसमाजस्य ज्ञानशाला पाठशाला विराजन्ते । तत्र च विविधविषयक-पुस्तकपाठनचतुराः लोकव्यवहारनिपुणाः अज्ञानान्धकारविनाशकाः समाज-पथप्रदर्शकाः राष्ट्रस्य कर्णधाराः जगद्गुरवः गुरवः (अध्यापकाः) अध्यापयन्ति, अस्ति सर्वेषाम् मौलिभूतः सर्वश्रेष्ठ विविधज्ञानसम्पन्नशिक्षाशास्त्रिभिः विभूषितः विविधकलानिपुणकर्मकरैः विलसितः भारतस्य निखिलेषु विश्व-विद्यालयेषु पूजितः जगति ख्याति गतः अनेकविद्यासमुत्पादनदक्षः विविध-वैशिष्ट्यसमन्वितः हिमाचलविश्वविद्यालयः । तत्र दूरात् छात्राः समागताः पठनार्थम् । तेषु केचन आङ्ग्लीयाः, केचन बङ्गीयाः, केचनमद्रदेशीयाः अपरे रूसदेशीयाः वैदेशिकाः छात्राः, अन्ये नेपालदेशीयाः इतरे च जर्मनदेशीयाः छात्राः सन्ति ते परस्परं मित्रभावमुपागताः सुखदुःखावस्थासु परस्पर साहाय्यं कुर्वाणा दरीदृश्यन्ते । किं बहुना—तत्र अनेके अनेकभाषाविदः पाठनकलानिपुणाः प्राध्यापकाः सन्ति । एवमेव तत्र अनेकैः कर्मकरैः विभूषिताः कार्यालयाः सन्ति, यत्र परीक्षासम्बन्धीनि निखिलानि कार्याणि सम्पाद्यन्ते । न हि तत्र कस्यचिदपि बहिरागतस्य जनस्य सुलभः प्रवेशः अस्य विश्वविद्यालयस्य प्राध्यापकाः अन्ये कर्मकराश्च अतीव सुयोग्याः स्वस्वकार्ये परमनिपुणाश्च । किं किं कथयामः, अस्य स्नातकाः न केवलं

भारते एव, अपितु विदेशेष्वपि विविधक्षेत्रेषु कार्यरताः राजनीतिनिपुणाः बहुख्यातिं गता यशोभाजनानि समाजस्य सेवकाः सन्ति ।

एकतः मशोबरा स्थाने देववाणी संस्कृतरक्षणतत्परौ आचार्य श्रीदिवाकरकेशवौ दिव्यज्योतिः माध्यमेन गगनमिव भासेते अनयोः मार्गं सर्वेषां संस्कृतज्ञानां अनुकरणीयः अतः पत्रिकासञ्चालनाय, संस्कृतरक्षणाय च ग्राहकसंख्या वर्धनीया । पत्रिकासम्पादकस्य श्री केशवस्य कथनमिदं सर्वदैव स्मर्तव्यम्

'यावद् भारतवर्षं स्याद् यावद् विन्ध्यहिमाचलौ ।
यावद् गङ्गा च गोदा च तावदेव हि संस्कृतम् ॥''

दिव्यज्योतिः, जुलाई १९७६

अस्य नगरस्य मध्ये परमशोभनीय भक्तजनरक्षणतत्पराया कालीं' मातुः मन्दिरम् विराजते । तस्य एकतः स्वस्वक्षेत्रवासिजननिर्वाचिताः राजनीतिचतुराः समाजसेवकाः सचिवालये शासनसंचालने संलग्नाः नेतारः सन्ति । तत्र महान् जनसम्मर्दः प्रतिदिनं अक्षिलक्षी क्रियते । मुख्यमन्त्री श्री वीरभद्रसिंहस्य अध्यक्षतायाम् अनुपमोऽयमस्माकं प्रदेशः शिमलानगरी च । अत्र अनेका जातयः वेषभूषा च. परम हर्षस्य विषयोऽयं यत्—'सर्वः एव प्रदेशः सर्वं प्रकारेण एकतायाः सूत्रे निबद्धः अस्ति ।

अत्रैव एषा उक्तिः सत्यमुद्घाटयति—
'हम सब पंछी इक डाल के'

सर्वजनहिताकांक्षी राजकुलावतंसस्य श्री वीरभद्रमहोदयस्य प्रेरणया प्रदेशः उत्तरोत्तरम् उन्नतिपथम् आप्नोति इति मे विश्वासः ।

अत्रैव सचिवालये विविधसमस्यासमाधाने व्यग्राः 'आई. ए. एस.' इति उपाधिमण्डिताः सचिवसहायकाः अनेके जनाः सर्वदा स्वस्वकार्यालयेषु दृष्टिपथमवतरन्ति तस्य सचिवालयस्य पृष्ठभागे विविधविवादसमाधानकर्तृभिः वाककीलैः विभूषितः मध्यमणिना इव न्यायाधीशेन अधिष्ठितः उच्चन्यायालयः तत्रापि महान्जनसम्मर्दः गमनागमन जनानां प्रतिदिनं दृश्यते । जनेषु केचन विजयिनः प्रसन्नाः, अपरे पराजिताः खिन्नमनसश्च ---क्यन्ते । तस्य एकतः विविधशोभापरिवेष्टितः नानालंकारसुसज्जितश्च ोड' इत्याख्यो राजमार्गः शिमलानगरस्य दर्शनीयः । तत्र पंजाबकेसलालालाजपतरायस्य प्रतिमा राष्ट्रपितुः महात्मगान्धिनः प्रतिमा च ्रू चक्षूंषि बलात् समाकर्षतः । अनेके जनाः सायं समये भ्रमणार्थं ्छन्ति तत्र । केचन विद्यालयीयाः छात्राः, अपरे विश्वविद्यालयीयाः

छात्राः, अन्ये प्रशिक्षणविद्यालयीयाः छात्राः तथा च विदेशेभ्य आगताः पर्यटकाः मनोरंजनार्थं समागच्छन्ति मोदान्विताः च भवन्ति ।

अस्य नगरस्य नेदीयसि 'संकटमोचनमन्दिरम्' जनानां दुःखदारिद्र्यं दूरीकृत्य स्वनाम सार्थकीकरोति । किं बहुना—स्थलमिदं वस्तुतः निखिलस्य आर्यावर्तस्य भूषणमिव स्वर्गस्य कान्तिमत् खण्डमिव प्रतिभाति । अस्य वर्णने नास्ति कवेः लेखनी समर्था अतो विरम्यते मया । नगरमिदं वीरभद्रसिंहस्य अध्यक्षत्वे एव उत्तरोत्तरमुन्नतिपथमारोहेदित्यस्माकं प्रभोरग्रे बद्धाञ्जलिः प्रार्थना ।

— राजकीय उच्चविद्यालयः पीरसलूही
तह० देहरा जिला कांगड़ा
(हि० प्र०)

# श्रीहरिमन्दिरचण्डीगढ़े २६ सैक्टरस्थे
## श्रीमद्भागवतसप्ताहसमारोहः सम्पन्नः

चण्डीगढ़ । अत्र किल १३ नवम्बरतः २० नवम्बर–१९८६ पर्यन्तं श्रीमद्भागवत-सप्ताहपारायणमभूत् सैक्रेड हार्ट स्कूल पार्श्वे श्री हरि मन्दिरे । हिमाचल-पञ्जाब-हरियाणा-दिल्ली-राजस्थान-गुजरात-उत्तर प्रदेशादीनां जनाः सम्यक् जानन्ति यत् पूर्वराष्ट्रपतीनां श्री राजेन्द्रप्रसाद महाभागानां श्री गुरवः श्री १०८ श्रीहरि जी महाभागाः सोलन नगरे श्री हरिमन्दिर आश्रमे विराजन्ते । श्रीमन्तः शतोत्तर आयुष्याः सन्ति पञ्चाशततोऽप्यधिकवर्षेभ्यश्च मौनिनो विराजन्ते ।

एतेषामेवाश्रमे श्री हरिमन्दिरचण्डीगढ़ेऽयं समारोहः सम्पन्नः । श्री चरणाः परमभागवताः समनुष्ठितानेकश्रीमद्भागवतसमारोहाः । अत्र पारायणकर्तार आसन् आचार्यकेशवशर्माणः दिव्यज्योतिषः सम्पादकाः वक्तारश्च श्री आचार्य दिवाकर महाभागाः श्री आचार्याणां वाक्सुधां पातुं चिरात् चण्डीगढ़वास्तव्या – समुत्कण्ठिता आसन् । हिमाचलप्रदेशात् विभिन्नस्थानेभ्यः अन्यप्रदेशेभ्योऽपि चानेके भागवतरसलम्पटाः जनाः अत्र समवेता बभूवुः । निवासभोजनादिसर्वविधसुप्रबन्धः श्री सत्संगभवने आसीत् अत्रत्या श्रेष्ठिन श्री प्यारे लालः, तत्पुत्राः श्री विपिन चन्द्रः स्व. भागमलमहाभागस्य ज्येष्ठ पुत्र श्री मुकुन्दीलालादयः विशेषतश्च अमरनाथ कोहली महाभागोऽत्र कर्मण्यस्मिन् अहर्निशं स्वयं स्वकीयवाहनैश्च परः सहस्रजनानां सेवामकार्षुः । श्री हरि जी महाभागानामियमिच्छा सर्वदा भवति यदहर्निशं श्री कृष्णकथारसधारा प्रवहेत् - जनाश्चाविरतं तत्पानं कुर्युः । आचार्याणाञ्च भागवत-प्रवचनेऽपि संस्कृतं प्रति लोकानामाकर्षणं -- सन्ततं प्रचलति ।

# श्रीविद्या ।

श्री स्वयम्भू चैतन्य, ब्रह्मचारी
दुर्गापुरम् (हि. प्र.)

ब्रह्म सत्यं जगन्मिथ्येति ज्ञानं सर्वैरपि जोघुष्यते किञ्चास्मिन् समये कति च सन्ति तस्यानुभविनः ? स्वयमननुभवन् कोऽपि कथं तदनुभावयेदन्यमिति प्रश्नो नयनपथमायाति । तर्हि अनुभवावसानं तज्ज्ञानं समुपलब्धुं को वाऽस्ति सुगम उपायः ? श्री विद्यैव ब्रह्मविद्येति वक्तुं शक्यते मार्गश्चायं सुलभः अत्र सोपानक्रमेण जीवो जीवभावं विहाय स्वप्रकाशचिदात्मनाऽभिन्नत्वमनुभवितुं समर्थः "देहो देवालयः प्रोक्तो जीवो देव सनातन" इत्यर्थं श्री विद्योपासनपरायणसुगमाः सुषुम्णा कुण्डलिनी प्रभृतयः पदार्थाः स्फोटयन्ति जीवशक्तिस्वरूपा कुण्डलिनीयं कं कं ग्रन्थिं छित्वा कथङ्कारं परमशिवेन सायुज्यमाप्नोतीति प्रत्यहं समुपासका अनुभवन्ति । ते चितिमेव हृदयपद्मतो ब्रह्मरन्ध्रं नीत्वा स्वोपास्ये वाह्यश्रीचक्रे गुरूपदिष्टेन मार्गेणाविष्कुर्वन्ति श्रीगुरोर्लब्धदीक्षा एव समुपासका एतद्विज्ञातुं प्रभवन्ति । साधकस्य शरीरमेव श्रीचक्रम् । अस्मिन्नवावरणानि भवन्ति तथा चोक्तं श्रीचक्रविषये –

"बिन्दुत्रिकोणवसुकोणदशारयुग्म-
मन्वस्रनागदलसंयुतषोडशारम् ।
वृत्तत्रयञ्च धरणीसदनत्रयं च
श्रीचक्रमेतदुदितं परदेवतायाः ।"

साधकेन पदे पदेऽनुष्ठीयमानानि तत्त्वशोधनानि चाविद्यामलमपोहितुं किं नैव प्रभवन्ति ?

भोगमोक्षप्रदेयं विद्या प्रभूतकालाद्वैदिकमार्गावलम्बिनां समादरस्थानमिति निश्च-प्रचम् अत्र तन्त्रे श्रीशङ्कराचार्यभगवत्पादैरप्यखिलशास्त्रसारभूतं सौन्दर्यलहरी-ललितात्रिशतीभाष्यञ्चेति ग्रन्थद्वयं प्रणीतम् । सौन्दर्यलहरीग्रन्थस्य श्लोकोऽयं वैशिष्ट्यमावहति तद्यथा—

"शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं
न चेदेवं देवो भवति कुशलः स्पन्दितुमपि ।
अतस्त्वामाराध्यां हरिहरविरिञ्चादिभिरपि
प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति ।"

यजुर्वेदे प्रथममस्योल्लेख: समुपलभ्यते विषयस्य । तद्यथा —

' यस्माज्जातं न पुरा किञ्च नैव
य आवभूव भुवनानि विश्वा ।
प्रजापतिः प्रजया सं रराण—
स्त्रीणि ज्योतींषि सचेतस षोडशी ।।"

अत्र त्रीणि ज्योतींषि इति पदद्वयेन
वाला-पञ्चदशी-षोडशी इति तिस्रो देव्य: वर्णिता: ।।

## श्रीचक्रविश्लेषणम्

' चतुर्भिः शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः ।
नवचक्रैश्च संसिद्धं श्रीचक्रं शिवयोर्वपुः ।।"

नवावरणात्मकमिदं श्रीचक्रं शिवचक्रचतुर्भिः शक्तिचक्रपञ्चभिश्च संयुतम् । तत्र शिवचक्रे बिन्दु- नागदल ( अष्टदलकमलम् ) षोडशदलकमलम्- चतुरस्रञ्च चत्वार्येतानि चक्राणि परिगृह्यन्ते तथा च शक्तिचक्रे त्रिकोण वसुकोण-(अष्टकोण.) दशारद्वयम् (अन्तर्दशारं बहिर्दशारञ्च, चतुर्दशारचक्रञ्च पञ्चैतानि चक्राणि परिगण्यन्ते । साम्प्रतमस्माभिरेतानि चक्राणि विशदी क्रियन्ते

## प्रथमावरणम् (त्रैलोक्यमोहन चक्रम्) चतुरस्रात्मकं प्रवेशद्वारम् —

तत्र प्रथमावरणे थमरेखा शुक्लवर्णात्मिका यस्यामणिमालघिमा-महिमा-ईशित्व-वशित्व-प्राकाम्य भुक्ति-इच्छाप्राप्ति-सर्वकामाख्य श्च सिद्धयो भवन्ति ।

मध्यमरेखा या चारुणवर्णात्मिका यस्यां वाराही-माहेश्वरीकौमारी-वैष्णवी-ब्राह्मी-माहेन्द्री चामुण्डा-महालक्ष्म्याख्या मातृका: सङ्गृह्यन्ते ।

अन्तिमरेखा या च पीतवर्णात्मिका यस्यां सर्व संक्षोभिणीसर्वविद्राविणी-सर्वाकर्षिणी - सर्ववशङ्करी - सर्वोन्मादिनीसर्वमहाङ्कुशा - सर्वखेचरी - सर्वबीजमुद्रा-सर्वयोनिमुद्रा-सर्वत्रिखण्डामुद्राशक्तयः सर्वाश्चैता: प्रकटयोगि-यश्चित्रिता. ।

## द्वितीयावरणम्-(सर्वाशापरिपूरकचक्रम्) षोडशकमलयुक्तम्—

(वामावर्त्तादारभ्य) - कामाकर्षिणी - बुद्ध्याकर्षिणी अहङ्काराकर्षिणी- शब्दाकर्षिणी - स्पर्शाकर्षिणी रूपाकर्षिणी - रसाकर्षिणी - गन्धाकर्षिणी - चित्ताकर्षिणी-धैर्याकर्षिणीस्मृत्याकर्षिणी - नामाकर्षिणी - बीजाकर्षिणी - आत्माकर्षिणी - अमृता-कर्षिणी - शरीराकर्षिणी-सर्वाश्चैता गुप्तयोगिन्यो भवन्ति षोडशकमलात्मके-सर्वाशापरिपूरकचक्रे ।

## तृतीयावरणम् (सर्वसंक्षोभणचक्रम्) अष्टदलकमलात्मकम् —

चक्रेऽस्मिन् अनङ्गकुसुमा - अनङ्गमेखला - अनङ्गमदना - अनङ्गमदनातुरा —

अनङ्गरेखा । अनङ्गवेगिनी - अनङ्गाङ्कुशा-अनङ्गमालिनी - सर्वा अप्येतागुप्ततरयो-गिन्या सम्पूज्यन्ते ।

## चतुर्थावरणम् (सर्वसौभाग्यदायकचक्रम्) चतुर्दशारचक्रम

वामावर्तादारभ्य) सर्वसंक्षोभिणी- सर्वविद्राविणी- सर्वाकर्षिणी सर्वाह्लादिनी सर्वसंमोहिनी- सर्वस्तम्भिनी - सर्वजृम्भिणी - सर्ववशङ्करी सर्वरञ्जिनी सर्वोन्मादिनी सर्वार्थसाधिनी - सर्वसम्पत्तिपूरणी - सर्वमन्त्रमयी सर्वद्वन्द्वक्षयङ्करीशक्तयः सर्वा श्चैता सम्प्रदाययोगिन्यो भवन्ति ।

## पञ्चमावरणम् (सर्वार्थसार्थसाधकचक्रम्) बहिर्दशारम्–

(वामावर्तादारभ्य) चक्रमिदं सर्वार्थसिद्धिप्रदा सर्वसम्पत्प्रदा-सर्वप्रियङ्करी सर्वमङ्गलकारिणी - सर्वकामप्रदा- सर्वदुःख विमोचिनी - सर्वमृत्युप्रशमनी सर्वविघ्ननिवारिणी - सर्वाङ्गसुन्दरी सर्वसौभाग्यदायिनी देवीभि संवृतम् । सर्वा ह्येताः कुलोत्तीर्णयोगिन्यो निगद्यन्ते ।

## षष्ठमावरणम् (सर्वरक्षाकरचक्रम्) अन्तर्दशारम्

(वामावर्त्तेन सर्वज्ञा सर्वशक्ति-सर्वैश्वर्यप्रदा - सर्वज्ञानमयी सर्वव्याधिविनाशिनी सर्वाधारस्वरूपा - सर्वपापहरा सर्वानन्दमयी - सर्वरक्षास्वरूपिणी - सर्वेप्सितफलप्रदा एताभिर्निगर्भयोगिनीभिः परिवृत चक्रमिदं षष्ठावरणं सम्पादयति

## सप्तमावरणम् (सर्वरोगहरचक्रम्) अष्टारम्

(वामावर्त्ते) अस्मिन् चक्रे वशिनी कामेश्वरी - मोदिनी - विमला - अरुणा-जयिनी - सर्वेश्वरी - कौलिनीरहस्ययोगिन्यो विराजन्ते । सर्वाश्चैता वाग्देवताः ।

## अष्टमावरणम् सर्वसिद्धिप्रदचक्रम्

(मध्यत्रिकोणाद्बहि : सर्वजम्भनाख्या (बाणशक्तिः) – सर्वसंमोहनाख्या (धनुः शक्ति ) सर्ववशीकरणाख्या (पाशशक्तिः सर्वस्तम्भनाख्या - (अङ्कुशशक्तिः) - सर्वा अप्येता शक्तय मध्यत्रिकोणाद् बहि सम्पूज्यन्ते

। त्रिकोणाभ्यन्तरम् ।

१. अग्निचक्रे कामगिरिपीठे मित्रेशनाथ - नवयोनि-चक्रात्मक आत्मतत्त्व सृष्टिकृत्य - जाग्रद्दशाधिष्ठायक इच्छाशक्ति- वाग्भवात्मक-वागीश्वरीस्वरूप ब्रह्मात्मक शक्तिर्महाकामेश्वरी विलसति

२ सूर्यचक्रे जालन्धरपीठे . षष्ठीशनाथ दशारद्वय चतुर्दशारचक्रात्मक- विद्यातत्त्व - स्थितिकृत्य - स्वप्नदशाधिष्ठा क - ज्ञानशक्ति कामराजात्मक - कामकमलास्वरूपविष्णवात्मशक्ति महावज्रेश्वरी विराजते ।

३. सोमचक्रे पूर्णगिरिपीठे उड्डीशनाथ - अष्टदलषोडशदलचतुरस्रचक्रात्मक-शिवतत्त्वसंहारकृत्य - सुषुप्तिदशाधिष्ठायक - क्रियाशक्ति - शक्तिबीजात्मक परापरशक्तिस्वरूप रुद्रात्मशक्ति महाभगमालिनी विभाति ।

. परब्रह्मचक्रे महोड्याणपीठे चर्यानन्दनाथ - समस्तचक्रात्मक सपरिवार परमतत्त्व - सृष्टि - स्थिति संहारकृत्यतुरीयदशाधिष्ठायक-इच्छा ज्ञानक्रियाशान्ताशक्तिवाग्भवकामराज शक्ति बीजात्मक-परमशक्तिस्वरूप-परब्रह्मात्मशक्ति- श्रीमहात्रिपुर सुन्दरी विजयते ।

एताः सर्वा अतिरहस्ययोगिन्यः सर्वसिद्धिप्रदचक्रेऽष्टमावरणे सम्पूज्यन्ते ।

## नवमावरणम् (सर्वानन्दमयचक्रम्) बिन्दुचक्रम्

बिन्दुचक्रे परापरातिरहस्ययोगिनी श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिका सर्वोपचारैः सम्पूज्य सन्तर्प्यते च ।

एतद्विषये पूजोपचारा अपि विशिष्टा भवन्ति । पात्राणां न्यासविधानमपि विचार्यते किन्त्वस्माभिः पूर्वमेवोक्तं यदियं श्रीविद्या गुरुक्रमपुरस्कृतैवार्चामर्हति । नान्येषां सर्वेषामस्याः पूजने अधिकारः । किं बहुना, अस्याः विशेषार्थमप्यदीक्षितैर्ग्रहीतुं नैव शक्यते । केवलं पुस्तकान्यवलोक्यैव यदि कोऽपीमां विद्यामाराद्धुकामः प्रवृत्तो भवेत्तर्हि नूनमेवानिष्टापत्तिः । अतएव शिवदीक्षायुतानां कृते विधेयं सर्वकामप्रदेति नात्र कश्चित् सन्देहास्पदो विषयः ।

तथा च

"सम्पूजकानां परिपालकानां
यतेन्द्रियाणाञ्च तपोधनानाम् ।
देशस्य राष्ट्रस्य कुलस्य राज्ञां
करोतु शान्ति भगवान् कुलेशः ।"

॥ इतिमङ्गलकामनाभिरयं लेखो समाप्तिमेति ॥

---

## वार्षिक शुल्कं त्वरया प्रेषणीयम् ।

— सम्पादकः

एका सत्यघटना

# 'मम पुत्री अस्ति नूनम्'

श्रीमान् अरुण एल त्रिवेदी

संस्कृतरूपान्तकार: डा० रूपनारायण पाण्डेय:

विगतानि कतिपयवर्षाणि मम चतुर्थी मातृष्वसा तदानीं सप्तमकक्षायां पठति स्म; पठने कार्यान्तरेषु चापि पटुरभूत्। तदानीन्तनाया: प्रधानाध्यापिकाया मान्याया हाजरामहाभागाया तस्यां बालिकायामतीव स्नेहोऽभूत। दीपमालिकामहोत्सवं यावद् मम मातृष्वसा पठितवती। तदनन्तरं गृहकार्यव्यग्रतया कारणान्तरैरपि विद्यालयं न जगाम। तया मातामह्या विशेषनिर्बन्धात पठनं परित्यक्तम्, दिवसद्वयं च भोजनमपि भुक्तं पठनार्थम्। परन्तु, निषेधो निषेध एवासीत।

मातृष्वसरि विद्यामत्यामनुपस्थितायां हाजरामहाभागया रुग्णतया गृह-कार्यव्यग्रतया सा नाजगामेति चिन्तितम्, किन्तु गतेषु बहुदिवसेषु सा स्वयमपि गृहमाजगाम। विद्यामती किमिति पठितुं न याति—इति ज्ञात मातामह्या। तया गृहस्थितिर्दृष्टा, विद्यामत्याश्च शिरसि करं धृत्वा निगदितम्- 'इमां स्वकीयां सुतामह पाठयिष्यामि। परीक्षा प्रत्यासीदति अस्या अध्ययने विघ्नं मा कुरु अद्यप्रभृत्यस्या: चिन्ता मयि परिहर्तव्यास्ति।'

सा महाभागा तं प्रतिदिवसं पाठयतिस्म, अपेक्षितानि वस्तूनि चापि पूरयतिस्म। सर्वविधं साहाय्यं तया विहितम्। परीक्षाकालाद् मासपूर्वकालात् प्रारभ्य विद्यामती रात्रौ सार्धवादनं यावत्तस्या गृहे स्थित्वा पपाठ सा निशायां गृहमागत्य तां विसर्जयामास

परीक्षायां विद्यामती समुत्तीर्णाभूत् हाजरामहाभागा गृहमाजगाम, मम मातामहीमब्रवीत् 'भगिनि! नर्मदे! तव विद्यामती उत्तीर्णाभवत् खलु? गृहाण मुखे मिष्टान्नम्' इत्यभिधाय सहैवानीतं पिण्डस्य समुद्गकमग्रे निदधौ। मातामह्या नयनयोरश्रूणि उदितानि, अवादीच्च सा— 'भगिनि! एतावत् सर्वं भवितुं न शक्नोति। एकत: त्वया सा पाठिता, साहाय्यं च बहुशो लब्धवती, ततश्च परत: मिष्टान्नमिदम् इदं न भविष्यति' 'किमत्राभूत्। मम पुत्री अस्ति नूनम्' इति मध्ये आक्षिप्य हाजरामहाभागा अवोचत मम मातामही मनसि हि तां ववन्दे। (कल्याणत:)

[वर्तमानकाले यद्यपि केचन शिक्षकाः काश्चन च शिक्षिका अपि वैयक्तिकाध्यापनार्थलोभान्नैव सम्यक् पाठयन्ति पाठशालासु विद्यालयेषु महाविद्यालयेषु चापि, तथापि समग्रशिक्षकवर्गस्तथा न वर्तते। उपरि लिखिता वास्तविकी घटनात्र प्रमाणमस्ति। मन्ये — अस्माकमध्यापकसमाजः सम्भूय नवशिक्षानीतौ परिश्रमेण चरित्रेण च तथाविधं नूतनं भारतं संरचयिष्यति, येन प्रत्येकं क्षेत्रेषु वयं भारतीयाः सततं अग्रमिष्यामः, स्वराष्ट्रं स्वसंस्कृतिं तदुत्सभूतां सुरभारतीं च संवर्धयिष्याम ।]

रा. इ. का. सितारगञ्जः, नैनीतालम्

## विश्वविख्यातविदुषां डा० सत्यव्रतशास्त्रिणां सम्पादकाय पत्रमेकम्

सम्प्राप्य भवतां पत्रं स्नेहपूरेण पूरितम् ।
अमन्दानन्दसन्दोहमन्वविन्दमहं ध्रुवम् ॥१॥

भवतां कुशलोदन्तश्चिरेणाधिगतो मया ।
प्राणयत्यन्तरङ्गं मे नवां स्फूर्तिं ददाति च ॥२॥

भारत्या यादृशी सेवा क्रियते भवताऽधुना ।
न बहुभिस्तादृशी दृष्टा क्रियतेऽस्मिन्निरन्तरम् ॥३॥

माध्वीकमाधुर्यधरा धरायां गीर्वाणगीर्वर्धिष्यतेऽधुनाऽपि ।
सदा तदर्थं विहिताभियोगा, भवादृशा एव निबन्धनानि ॥४॥

सिताम्बरस्य मासस्य सप्ताहेऽन्त्ये प्रवर्त्स्यति ।
सौन्दर्यशास्त्रविषये चर्चागोष्ठी (सेमिनार) विपश्चिताम् ॥५॥

उत्कलेषु पुरे श्रेष्ठे भुवनेश्वरसंज्ञके ।
निमन्त्रितोऽहं यदर्थं तत्रत्यैर्विदुषाम्वरैः ॥६॥

इति वृत्तं निवेद्याहं सप्तश्लोक्या समासतः ।
प्रणम्य चाचार्यवरान् स्वां वाचमुपसंहरे ॥७॥

— भवद्गुणगणावर्जितहृदयः
सत्यव्रतः शास्त्री, दिल्ली

# भगवती

न जाने कासा वै मधुरमधुमत्ता भगवती ।
यया रुद्राक्षाणाममलधवला सौम्यमाला ।
धृता स्वीये कण्ठे निखिल—जनतापापहर्त्री ।
मया दृष्टा शम्भोर्निखिलसेवायाम् प्रवृत्ता ॥

जना: नित्यं तां वै सकलजनमातां हि धन्याम्
विभिन्नै: मन्त्रै: स्तोत्रै: सततफलदां पूजनपरा: ।
शिरांसि तस्याश्च चरणकमलेष्वेव सततम्
सुखं संस्थाप्यैव विगतभवबाधा: भवन्ति ॥

— श्री सुदेश गौतम आचार्य, एम. ए. प्रभाकर,
प्रवक्ता - त्रिगर्त संस्कृत कालेज
चामुण्डाधाम, कांगड़ा (हि. प्र.)

# 'शरत्कालिकं वर्णनम्'

प्रस्थिते वृष्टिकालेऽस्मिन् सर्वं भाति मनोहरम् ।
नभोऽपि निर्मलं जातं बहुतारासमन्वितम् ।
नदीनां क्षीणतां याति प्रवाहः खलु दुस्तरः ।
काशपुष्पान्विता: सन्ति सर्वत्र तटिनी—तटा: ॥
स्वच्छेन पयसा युक्तान् श्वेतहंसैश्च राजितान् ।
जलाशयान् विलोक्याद्य प्रसन्नं जनमानसम् ॥
निशायां श्वेतपद्मानां विकासश्च मनोहर:
विलोक्यते प्रफुल्लानां पद्मानां महती छटा ॥
पङ्कोऽपि शोषतां याति मार्गा: सन्ति सुनिर्मला:
पथिकाश्च समायान्ति रुद्धमार्गा गृहं प्रति ।
निशा मनोहरा यस्मिन् शशिज्योत्स्नासमन्विता
मुदान्विताश्चकोराश्च चन्द्रिकापानकर्मणि ।
शरत्कालस्य नैपुण्यं शक्यते केन लेखितुम् ।
तथाप्ययं विशेषेण सर्वलोकस्य रञ्जक: ॥

# स्वराज्यविजये स्वराज्यम्

डा० सुरेन्द्र अज्ञात

स्वराज्यविजयनामकौ द्वौ ग्रन्थौ संस्कृतसाहित्ये दृश्येते—एको द्विजेन्द्रनाथशास्त्रिरचितः, अपरश्च पण्डितया क्षमाराव महोदयया विरचितः। पंडितया एकोनपंचाशदुत्तरेष्वेकोनविंशतौ ख्रिष्टाब्दशतेष्वरचि ग्रन्थोऽसौ।

संस्कृतसाहित्यकारेषु पुरुष-प्राधान्यम्। तत्र स्त्रिय उपसर्जनम्। परं क्षमारावमहोदयाया न केवलं स्त्रीष्वपितु पुरुषेष्वपि स्वीयमनन्यसाधारण स्थानम्। कथासाहित्य—महाकाव्य—जीवनचरितादिरचनाप्रसंगे तस्या नाम चिरस्मरणीयं स्थास्यति।

तस्य स्वराज्यविजयस्य नायको गान्धिमहोदयो यो हि स्वराज्यप्राप्त्यर्थमनवरतं यत्नांश्चकार। तस्य स्वराज्यविषयकाः विचारा अपि यदा कदा प्रकाशं जग्मुः। तेन तस्य चरितवर्णनप्रसंगे तेषां सद्भावः स्वाभाविकः।

पर यदा कविः काव्यं करोति तदा स न केवलं स्वीयचरितनायकस्य विचारान् व्यनक्त्यपितु तेषां परिष्करणं परिमार्जनञ्चापि करोति। सार्धमेव स स्वीयान् विचारानपि चरितनायकत्वेन मुखरितान् करोति।

तेन स्वराज्यविजये स्वराज्यविषयका ये विचारा दृग्पथपथिका भवन्ति, तेष्वपि नायक-लेखिकयोर्विचारा मिश्रितरूपेण विद्यन्ते इत्युक्तौ नात्युक्तिरिति।

सत्याग्रह गीतातः प्रारब्धं, उत्तरसत्याग्रहगीतामार्गेण वृद्धं, स्वराज्यविजये च पूर्णतां गत काव्यं गान्धि चरितात्मकम्। तत्र सत्याग्रहगीतायां स्वातन्त्र्यस्य माहात्म्यं प्रतिपादयन्ती कवयित्री लिखति--

स्वातन्त्र्याद्धिकं मनुष्याणां प्रियमन्यन्न विद्यते (सत्याग्रहगीता, १-३४)

स्वातन्त्र्यं विना देशस्य श्रेयो न भवतीत्यतो देशवासिनां शुभोदर्काय स्वातन्त्र्यं प्राप्तव्यमेव। अतः कवयित्री कथयति—

> पारतन्त्र्याभिभूतस्य देशस्याभ्युदयः कुतः।
> अतः स्वातन्त्र्यमाप्तव्यम् ॥ (तत्रैव, ९-४)

स्वातन्त्र्यं कथं प्राप्तव्यम् ? केन साधनेनेति जिज्ञासा सहजा । कवयित्री निश्चलां तितिक्षामेव साधनमाह—

सारं सत्यव्रतस्येदं तितिक्षा नाम निश्चला ।
स्वातन्त्र्यमनयैव स्याद् ॥

(तत्रैव, १८-१)

स्वातन्त्र्यं प्राप्ते देशे कीदृशी शासनव्यवस्था भविष्यति ? जनैस्सह किंविधो व्यवहारो भविष्यतीत्यत्र विषये कवयित्री कथयति यद् स्वतन्त्रे भारते रामराज्यं भविष्यति— यत्र नीति— अर्थ— धर्मदृशा सर्वविधं स्वातन्त्र्यं भविष्यति । न तत्र कश्चित् कनिष्ठो न च कश्चित् श्रेष्ठो ज्येष्ठो वा भविष्यति । सर्वे जना नैतिकतानियन्त्रिताः स्वयमेव सन्मार्गानुसरणं करिष्यन्ति, न त्वारक्षिगणैर्भीतास्तथा करिष्यन्ति, स्वतन्त्रे भारते सेनाया अत्यधिकत्वं न भविष्यति । कवयित्र्या नायकः कथयति—

व्याख्यातुं बहुभिर्लोकैराहूतोऽस्मि स्वतन्त्रताम् ।
रामराज्यदशा सेति व्याचक्षेऽद्य समासतः ॥
तस्मात्स्वातन्त्र्यमेष्टव्यं नैतिकार्थिकधार्मिकम् :
स्वातन्त्र्यं नैतिकं सिद्ध्येदांग्लसेनाव्यपोहतः ॥
कनिष्ठश्रेष्ठयोर्मध्ये तदा हि समता भवेत् ।
स्वातन्त्र्यं धार्मिकं सिद्ध्येद्रक्षासैन्यविवर्जनात् ।

(स्वराज्यविजये ३ अ० श्लो० २, ५, ६)

स्वतन्त्रदेशे सेनाया आत्यन्तिकाभावो भविष्यतीत्यमुं विचारं दृढं प्रतिपादयन्ती सा कथयति यदांग्लसैन्यस्थाने भारतीयसैन्यस्थापनं नोचितम्, यतस्तेन दुर्बलजनस्योन्नतेर्मार्गोऽवरुद्धो भवति —

आंग्लसैन्यस्थले राष्ट्रसेना यदि नियुज्यते ।
स्वायत्तो न भवेद्देशः स्वसैन्येनाध्यधिष्ठितः ॥

स्वसैन्यदमिते राष्ट्रो न शक्नोत्यतिदुर्बलः ।
क्रमेणापि समारोढुमाध्यात्मिकसमुन्नतिम् ॥

(तत्रैव, २३-७-८)

यदि श्वेतांगाः स्वातन्त्र्यप्रसंगे कूटप्रयोगं कुर्वन्ति, तदा भारतेनाधिष्ठितं सैन्यं स्थापनीयमेवेत्यपि सा प्रतिपादयत्यापद्धर्मरूपेणेति—

यद्यांग्लमन्त्रिणो कूटः स्वातन्त्र्यं प्रतिपादयेत् ।
तदा भारतमधिष्ठं स्थापयेत्सैन्यमात्मनः ॥

(तत्रैव, २३-११)

परं सामान्यस्थितौ अहिंसाया नीतिरेव पालनीया । तथैव राष्ट्रं भुवि सम्मानमभ्युदयञ्च प्राप्नुयाद्—

अहिंसानीतिमेवाग्रे विदध्याच्छुद्धिमत्तराम् ।
क्रमेण चाग्रिमं राष्ट्रं भूत्वा सम्मानमाप्नुयात् ।

(तत्रैव, २३-१३)

सप्तचत्वारिंशदुत्तरैकोनविंशतौ खिष्टाब्दशतकस्य पञ्चदश्यां देशः स्वराज्यं लेभे । देशस्य खण्डद्वयं बभूव—भारतं, पाकिस्थानम् । तथापि स्वभावतः सर्वत्र जना आनन्दमग्नाः स्वातन्त्र्यं प्राप्य । सर्वत्र भारते त्रिवर्णो ध्वजश्शोभते स्म जना जयघोषं कुर्वन्ति स्म, वन्दे मातरमिति राष्ट्रगीतं च गायन्ति स्म—

अथाब्दस्याष्टमे मासि शुभे पंचदशेऽहनि ।
पूर्णस्वराज्यमार्तण्डः समुदैद् भारताम्बरे ॥
देशांगच्छेददतो राष्ट्रयुगलं समजायत ।
पाकिस्थानाभिधं ह्येकमन्यत् संयुक्तभारतम् ॥
सिन्धुपश्चिमपञ्चाम्बुप्राच्यबंगीयभूमयः ।
पश्चिमोत्तरदेशाः च पाकिस्थाने निवेशिताः ॥
अवशिष्टं विहायैतान् विशालावनिमण्डलम् ।
अवतस्थे यथापूर्वं विषयो भारतांकितः ॥

(स्वराज्यविजये, ४८-१:४)

एवं स्वराज्यप्राप्तेर्वर्णनं कृत्वा कवयित्री जनानन्दं वर्णयन्ती कथयति—

मंगले सर्वतस्तस्मिन् स्वातन्त्र्यप्राप्तिवासरे ।
आसेतोरातुषाराद्रि व्यजृम्भन्त महोत्सवाः ॥

(तत्रैव, ४८-५)

परं देशविभाजनाज्जना असह्यान्यवर्णनीयानि च कष्टान्यापुः । हिन्दु-मुसलिमशत्रुता चरमभूमिं जगाम, अन्योन्यप्राणहर्तारो बभूवुस्ते । भवनानि भस्मसात् चक्रिरे । अनेन स्वराज्यप्राप्तिर्दूषिता जज्ञे । स्वराज्यस्य, पुरोधाः स्वराज्यविजयकाव्यस्य च नायको गान्धिमहोदयः स्वराज्यप्राप्तेः पश्चादागते दीपावलिमहोत्सवे महता दुःखेन पूरितः सन्नुवाच—अस्माभी रामराज्यमत्र स्थापितं भवेदितीच्छितमासीत् । परमधुना या स्थितिर्दृग्पथ-पथिका भवति तया स्पष्टं यन्नात्र रामराज्यम् अतो दीपावलिमहोत्सवोऽपि नात्र कार्यः, तस्य रामराज्य एव सद्भावादिति—

रामराज्यमिदानीं तु भारते न हि विद्यते ।।
निर्वर्त्येत कथं तस्मादस्माभिर्विजयोत्सवः ।
स एव ह्युत्सवं कुर्याद् यस्य रामो हृदि स्थितः ।।

(तत्रैव, ५०-१८- ९)

येषां कुटुम्बानां सदस्याः अस्मिन् हिन्दुमुस्लिमद्वेषाग्नौ नेशुः, येषां च चलमचलं च धनमपलुण्ठितम्, ये यथातथा स्वीयान् प्राणान् धर्मान्धेभ्यो रक्षणपरा एव कालयापनं कुर्वन्ति स्म, ये निराहाराः निर्वस्त्राश्चानिश्चितभविष्या यत्र तत्र पान्थागारेषु, रेलयानस्थानेषु, राजमार्गमभितश्च स्थिता बभूवुः स्वीयेभ्यो गृहेभ्यो बलान्निः--सारिताः, तेभ्यः स्वराज्यविजयः स्वपराजय इव भासते स्म । स्वीयायै दुखस्थायै स्वेतरधर्मस्यानुयायिन एव कारणं मन्यते स्म । क्रोधनिर्भरास्ते तेषां सर्वं स्वमपहरणाय सर्वस्वविनाशाय च प्रयतन्ते स्म : अतः स्वराज्यविजयस्य नायको वदति दुःखम् —

विलुप्तमानुषत्वास्ते संवृत्ता श्वपदोपमाः ।
मदेते न प्रमोदन्ते स्वातन्त्र्योदयवैभवात् ।।

(तत्रैव, ४६-२५)

तानुपदिदेश नायको गान्धि महोदयो यत् तै सर्वैः मिलित्वा परस्परं प्रेम्णा स्थातव्यम् । सिक्खा हिन्दवश्च पाकिस्थाने स्वीयं स्थानं प्राप्स्यन्ति, भारते च मुस्लिमाः सुखेन तिष्ठ तु —

सोदरानिव मन्यध्वं जातिभेदनिरादराः ।
परः सहस्रलोकास्तानत्यार्तान्मन्दभागिनः
निर्भयाश्च पुनर्यान्त्वायास्यन्त्यत्र मुस्लिमा ।
दीपावल्युत्सवस्तावत्सर्वथा न हि शोभते ।
न च यावत्पुनर्यान्ति स्वगृहान् सिक्खहिन्दव ।
न पाकिस्थानभूस्तावत्समृद्धिमुपयास्यति ।

(तत्रव, -२३. २५, २६)

परमनेन न किञ्चिदपि सौख्यं जातं कस्यचित् स्थितिरुत्तरोत्तरं दूषिताबभूव । हिन्दवो गान्धिमहोदयस्य मनसि मुस्लिमपक्षपातो विद्यत इति मन्यते स्म । यूनैकेन तस्योपरि वैभास्त्रं क्षिप्तमुक्तञ्च अस्ति शत्रुरसौ गान्धिर्हिन्दुधर्मस्य वस्तुत ।

(५२-१३)

अस्मिन्नवसरे गान्धिमहोदयोऽकस्मात् संरक्षितोऽवर्त्तत । परं तस्य विनाशाय प्रयत्नः पुनर्बभूव । नाथुरामाख्य एको युवाऽन्ततस्तं गुलिकामेणेण घातितवान् । एवं स्वराज्यस्य पुरोधाः स्वराज्यप्राप्त्यवसरे जातया स्थित्या कवलितो बभूव ।

एवं स्वराज्यविजयमहाकाव्यं स्वराज्यप्राप्तेः समकालमेव समाप्तिं गच्छति। स्वराज्यप्राप्तेः पश्चाद् काले कीदृशी स्थितिर्जाता ? स्वराज्यं सुराज्यमपि सिद्धं न वा ? स्वराज्यं २ (स्वं=धन) कथमभवत् ? का च चिकित्सा ? इत्यादयो बहवः प्रश्ना उदयन्ते, परं न किमप्युक्तमत्र विषये ग्रन्थकर्त्र्या यतो यत्रैषां प्रश्नानामुद्भवभूमिस्तत्र काव्यमिदं तिरोभावं भजते स्वराज्यस्य प्राप्तिरेवात्र विजयत्वेन वर्णिता तत्र च वृत्तस्यैव प्राधान्यं न तूद्भावनस्येति।

तयाऽन्यदपि काव्यमेवंविधं रचितंस्यात् तत्र च प्रश्ना उत्तरिताः स्युरिति मन्यते ; परन्तु शीघ्रमेव तस्या इहलोकलीला संहृता बभूवेति दूयते चेतः। तेनानुत्तरिता एव सन्ति प्रश्ना अमी स्वराज्यविषयका

३-५६, अज्ञातवास बंगा-१४४५०५ पंजाब

## निवेदनम्

कृपया वा० शुल्कं शीघ्रतया प्रेषयित्वा अस्माकं साहाय्यं विधेयम्।

सम्पादकः

## प्रकाशने विलम्ब

जनवरी मासांकप्रकाशने शीतबाहुल्याद् विलम्बः समजनि फर्वरी-मार्चमासयोः अङ्कौ सहैवाग्रिममासे प्रहेष्येते असुविधायै क्षन्तव्याः।

— केशव शर्मा

शशि कान्त शर्मा
साहित्य शास्त्री, ओ. टी.
रिसर्च स्कालर

शिक्षक: — पंकज, गान्धी महोदयस्य विषयं प्रकाशय ।
पंकज -- श्रीमन्, अद्य नैव श्वः प्रकाशयामि ।
शिक्षक: किमर्थम् ? अद्य किं कारणम् ।
पंकज अद्य मम पार्श्वे कौमुदी न विद्यते ।

★ ★ ★

एकदा रक्षकपुरुषस्य गृहे चौराः प्रविष्टाः ।
तस्य भार्या उक्तवती श्रीमन् ! उत्तिष्ठ !
गृहे चौराः प्रविष्टाः ।
रक्षक पुरुषः मौनं भूत्वा कथं न स्वपिषि,
अस्मिन् समये नाहं रक्षकः।
अद्य अवकाशो विद्यते ।

★ ★ ★

रुग्ण : वैद्यराज ! कियन्तं कालं माम् इमानि कटुतीक्ष्णकषायक्वाथान्
पाययसि भवान्, कदाहं सुस्वादुमधुर भोजनं भक्ष्ये ?
वैद्य: ... यावदिमं अशेष शुल्कं न दास्यति !

★ ★ ★

लता ... सखि ? मे भर्त्ता यत् लिखति अन्यो न वाचयति ।
शशि .. लता ? ते भर्त्ता स्वयमपि लिखितं स्वयं न वाचयति ॥

गीत द्वयी—

# चाटुकारितायाः महिमा

सन्तोष वर्मा

विततलब्धविस्तरो तवास्ति देवि !
न गणयसि विद्यां बुद्धिबलं वा
न चेतयसि कुलीनतां शालीनतां वा
विचित्रा गतिस्ते विशालाश्च दासाः :

सर्वस्थानेषु पूजास्पदामसि त्वं देवि !
सर्वलोकेषु तिष्ठन्ती सुप्रतिष्ठिता
न खलु जगति किमप्यस्ति
यदस्ति त्वमिव वीर्यवत् ।

सर्वे प्रपन्नास्तु त्वदेव शरणम् ।
सर्वे विपन्नाः शरणान्तरेण ।
शून्याश्च मन्दाश्च भवन्ति प्रसन्नाः
त्वत्प्रसादात् खलु त्वत्प्रसादात्
निखिलाश्च देशाः कृताः त्वया स्वदेशाः
जय देवि ! चाटुकारिते जयदेवि ! चाटुकारिते !

सर्वे सम्पन्नाः शरणं प्रपन्नाः ।
विषीदन्ति नात्र म्लायन्ति नैव
विश्लिश्यन्ति नैव भ्रंश्यन्ति नैव
सुकला भवन्ति सुफला भवन्ति
विकला भवन्ति शरणे च रिक्ते ।
व्याप्नोषि सर्वं प्रभवन्ती सततम्
नमस्ते पुरस्तात् नमस्ते समन्तात् ।

# अध्यवसायस्य महत्त्वम

ये न चलन्ति ते न पतन्ति ।
ये न पतन्ति ते नाप्नुवन्ति ।
ये न विरमन्ति सततं चलन्ति
ते सर्वदा सफला अग्रगण्याः
आप्ता भवन्ति सफलाश्च सिद्धाः
निर्मापयन्ति उत्थापयन्ति
उद्धारयन्ति सबला अभिरामाः,
लक्ष्यं तु लब्ध्वा प्रबुद्धाः महान्तः
कुर्वन्ति यावत् सुयशाः भवन्ति ।
परोपकारे जीवनं यापयन्ति ।
सततं चलन्ति सततं चलन्ति ।

अध्यक्ष - संस्कृत विभाग गान्धी आदर्श कालेज
समालखा (करनाल) हरियाणा

# मानवोऽपि दानवः

आगच्छ, भ्रातः उपविश । कुत आगच्छसि ? कुत्र च गमिष्यसि ?
किमहं भवतो नाम्नः वर्णैः परिचितो भवितु शक्नोमि ? किमिति न वदसि ?
किं कारणम् ? भवतो नयने रक्ते ? अस्तव्यस्तः प्रतिभासि मे त्वम् ?
का वार्ता ! अत्र उपविश सुख-दुःखे समे कुर्वः
हुं ! अज्ञातबन्धो ! अहं एकः मानवोऽजाये परमहो ! अद्य दानवो जातः ।
आर्यावर्तस्य राजधानीतः दिल्लीतः, आगमम् ।
पीडितोऽस्मि पीडादायकोऽपि च ।
नरहरि इति अक्षराणि मया कलङ्कितानि कृतानि ।
प्रभु नाम जपस्थाने पापकर्म समाचरम् ।
मातृ-पितृ-पुत्री स्वसृ-स्नुषा-सत्कारस्थाने रक्तं तेषां समापिबम् ।
मन्दिरे वा गुरुद्वारे वा अंगणे चत्वरे वा दानव रूपम् ।
मर्यादा तेषां पालनस्थाने तत्र पापकर्म समाचरम् ।
अथ भवान् एव उत्तरयतु कोऽहम् अस्मि ? बन्धो ! अहं मानवो भवितु कामः
दानवः समजाये

आचार्य, शुकदेव 'मुनि'
प्राचार्य–सरकारी संस्कृत कालेज नाभा

# भावनात्मक एकता

आज राष्ट्र को सब से बड़ी आवश्यकता यदि किसी वस्तु की है तो वह भावनात्मक एकता की है। विकास की सभी सीढ़ियों का आधार भावनात्मक एकता है। इसलिये हरेक देश भक्त का कर्तव्य हो जाता है कि वह उन सभी मार्गों का सहारा ले जो एकता की स्थापना में सहायक सिद्ध होते हैं। भारतीय शास्त्रों और महर्षियों ने इस एकता की स्थापना के लिये एक सीधा सिद्धान्त अपनाया था जिसका वे प्रात: काल स्नान के समय हर रोज चिन्तन किया करते थे :

गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥

जब वे लोग स्नान करने के लिये पात्र में पानी लेते थे तो गङ्गा-यमुना - गोदावरी - सरस्वती - नर्मदा और कावेरी के जल का एक पात्र के जल में एकीकरण कर भारत के सभी प्रान्तों को एकता व अखण्डता के सूत्र में पिरो कर चिन्तन करते थे। आज भी हमारे देश में यह परम्परा प्रचलित हैं। यह तो रही प्राचीन परम्परा की बात किन्तु इसके पश्चात् हिन्दी साहित्य के युग में भी सभी युगस्रष्टा कवियों का सारे देश को एक स्वरूप में देखने का भाव रहा है। उन्होंने न केवल मनुष्य को ही एकता के रूप में देखना चाहा बल्कि पशु-पक्षियों, पेड़ - पौधे, फूल - पत्ते, तक से प्यार भरा सम्बन्ध स्थापित किया है। यदि हम हिन्दी साहित्य के भक्तिकाल को ही लें तो हमें पता चलेगा कि जिस कार्य को पूरा करने में राजनीति असफल रही है उस कार्य को झोंपड़ी में बठे लेखनी के उपासकों ने पूरा किया। भक्ति की गंगा में यदि एक ओर हिन्दू डुबकी लगाते हुए दिखाई देते हैं तो वहां मुसलमान भाई भी भक्तिरस का पान करते हैं। जहां एक ओर जायसी, कुतुबन, मंझन आदि प्रेम की पीर से व्याकुल है तो काशी में बैठा हुआ सन्त कबीर भी हरेक वर्ग को मनुष्यता की ओर ले जाता हुआ देखने में आता है। मथुरा के

गाय घाट पर बैठे हुए तानपूरा लेकर यदि सूरदास यह गाते हुए झूमते दिखाई देते हैं:

ऊधो मोहि ब्रज बिसरत नाहीं ।
हंससुता को सुन्दर कगरी:
अरु कुंजनि की छांही ।।

तो रस खान का हृदय ब्रज भूमि के प्रेम में कुछ कम आकुल नहीं है । नट नागर की बांकी सलोनी मूर्ति ने उन्हें कुछ कम मुग्ध नहीं किया है। उनकी एकान्त इच्छा हैं : –

मानुष हों तो वही रसखानि,
बसौं ब्रज गोकुल गांव के ग्वारन ।।

काशी के घाटों पर बैठे रामानन्दी तिलक लगाए तुलसी बाबा जाप करते हैं –

बारि मथे घृत होय बरु, सिकता ते बरु तेल ।
बिनु हरि भजन न भव तरहिं, यह सिद्धान्त अपेल ।।

इसी प्रकार यदि राजस्थान में प्रेम दिवानी मीरा की "मेरे तो गिरिधर गोपाल, दूसरा न कोई" की प्यारी टेर सुनाई पड़ती है तो दूसरी ओर मुसलमान पुजारिन भी कम हठीली नहीं है :

नन्द के कुमार कुरबान तेरी सूरत पै,
हों तो मुगलानी हिन्दवानी हो रहूंगी मै ।।

यह है भक्ति का जादू जो सबके सिर पर चढ़ कर बोल रहा है।

हमारे राष्ट्र कवि गुप्त ने जहां राम, कृष्ण, बुद्ध की महिमा का बखान किया है वहीं उन्होंने सिखों के गुरुओं के चरणों पर भी श्रद्धा के पुष्प चढ़ाए ।

साहित्य ने सदा से ही अनेकता का नहीं एकता का, खण्ड का नहीं अखण्डता का स्वर ऊंचा किया है।

आज के हिन्दी साहित्य में और भी विशेष रूप से एकता के स्वर गूंज रहे हैं।

अनुभव किया जाता है कि धर्म प्रधान भारत में शंकरमठों और अध्ययन केन्द्रों के माध्यम से उत्तर भारत दक्षिण से उस समय से पूर्ण रूप में एक है, जब आने जाने के इतने सुगम एवं वढ़िया साधन न थे। संस्कृत और संस्कृति की केन्द्र काशी ने दक्षिण को उत्तर से मिलाने में बहुत महत्त्व पूर्ण कार्य किया है। उत्तर और दक्षिण का यह मिलन भाषाई दृष्टि से हिन्दी द्वारा ही हुआ। इसी के परिणाम स्वरूप कांचीवरम् रामेश्वर, और त्रिवेन्द्रम् के दाक्षिणात्य ब्राह्मण हिन्दी भाषा को अच्छी तरह बोल व समझ सकते हैं।

इसके अलावा भावनात्मक एकता में प्रेम, सहिष्णुता और सेवा भी कारण है। परिवार या समाज में जब तक आपसी मित्रता का भाव मजबूत नहीं हो पाता तव तक अशान्ति का वातावरण वना रहता है। प्रेम सहिष्णुता और सेवा यह तो एकता के तागे हैं जिन्होंने समूचे समाज को एक दूसरे से बांधा हुआ है। इसीलिये हमारे पूर्वज परिवार को त्याग कर संसार के जीव मात्र से परिवारिक सम्बन्ध जोड़ने के लिये छोटे परिवार को छोड़ कर वड़े परिवार में प्रवेश पाते थे। पहले तो यही देखने को लगता है कि इन्होंने परिवार को छोड़ दिया, नेह बन्धन को तोड दिया किन्तु असली रूप में उनका अपनत्व या ममत्व १०-२० व्यक्तियों में ही सीमित न रह हजारों लाखों और करोड़ों में व्याप्त हो गया है। शास्त्रों में कहा गया है।

अयं निजः परो वेति गणना लघुचेतसाम्।
उदारचरितानां तु वसुधैव कुटुम्बकम्॥

सत्पुरुष के लिये पहले टुकुम्ब का सम्वन्ध छूट कर अन्त में सारा विश्व ही अपना कुटुम्ब परिवार वन जाता है। इस प्रकार कीं एकता की भावना से यह तेरा यह मेरा की क्षुद्र भावना समाप्त हो जाती है और विश्व प्रेम की भावना सुदृढ़ बन जाती है।

# संस्कृत काव्य

"धर्म ब्रह्मणी वेदैकवेद्ये" मीमांसा दर्शन के इस सूत्र के अनुसार सब से प्राचीन ग्रन्थ वेदों में धर्म और ब्रह्म का विषय विशेष रूप से प्रतिपादित हुआ है, वह भी काव्यमयी भाषा में। संसार में किसी भी भाषा का साहित्य इस प्रकार का उपलब्ध न होगा जिस में छन्दोवद्ध रचना में धर्म और ब्रह्म जैसे नीरस विषय को प्रतिपादित किया गया हो। यह श्रेय संस्कृतवाङ्मय को ही है। सब से प्राचीन संस्कृत में ऋग्वेद है। जहां से विश्व भर में काव्य सरिता का आविर्भाव हुआ है। वेदों में अलंकार और शब्दों का बहुत अच्छी तरह प्रयोग हुआ है। जिनका कवि सर्वव्यापी ब्रह्म है। यही विश्वास सभी विद्वानों का है। इसीलिये वेद अपौरुषेय तथा भगवद्वाणी माने जाते हैं। लौकिक काव्यों में वाल्मीकि रामायण तथा जय काव्य-महाभारत बहुत पुराने हैं। यूनान में काव्य रचना महाभारत के पश्चात् हुई यह इतिहास सिद्ध है। रोम एवं ईरान के काव्य तो यूनानी काव्यों के बाद के हैं। मिस्र, चीन आदि में काव्यों की सृष्टि पुरानी अनुमान की जाती है किन्तु जब तक कोई काव्य वहां का न मिले तब तक इस अनुमान का कुछ आधार नहीं। अतः अन्य कलाओं के समान काव्यकला की जन्म भूमि भारत को ही मानना पड़ेगा। अरबी - फारसी काव्य भी यूनानी काव्यों से पुराने नहीं पाये जाते तो संस्कृत से पुराने क्या हो सकते हैं। व्यास के पश्चात् कविता का प्रवाह कुछ रुका रहा। इस काल में सूत्र ग्रन्थों का जोर रहा। पुनः गुप्त काल में संस्कृत काव्यों का वसन्त काल आरम्भ होता है, जैन, बौद्ध, वैदिक धर्मियों ने इस काल में सैंकड़ों ही काव्य नाटक चम्पू आदि लिखे प्राकृत भाषा में भी नाटक कथादि लिखे गये।

राजपूत राजाओं के समय में फिर संस्कृत काव्यों की गति मन्द पड़ गयी और प्राकृत (डिंगल) ने जोर पकड़ा और आदर्श भी बदल गया। अपने आश्रयदाताओं की प्रशंसामात्र इन लौकिक भाषाओं के कवियों का उद्देश्य था। संस्कृत कवियों की दृष्टि में कविता का जो आदर्श था, उसे मम्मटाचार्य ने इस प्रकार वर्णन किया है :—

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यः परनिर्वृत्तये कान्तासम्मिततयोपदेश युजे ॥

—:—

HIMACHAL PRADESH STATE FOREST CORPORATION LIMITED FOREST WORKING DIVISION, SUNDERNAGAR.

# AUCTION NOTICE

An open auction for the sale of about 400 qtls. of conifer/chil charcoal extracted from various lots private sale lots of Nachan Forest Division will be hold in the office of the Divisional Manager. Forest working Division Sundernagar on **18th Feb. 1987** at 1 P. M The charceal is lying on the following road side depot/sale depots:-

| Sr. No. | Mame of Depet | App. qty. of charcoal. Chil | Conifer |
|---|---|---|---|
| 1. | Himkashth Sale Depot Dhanotu | -- | 300 qtis. |
| 2 | Road side depot Pandoh (near Towa Raffi) | 100 qtls. | -- |

Every bidder will have to deposit Rs. 1000 (one thousand) only before the start of the bidding. This amount will be returned after the bidding is over to the unsuccessful bidders and will be adjusted towards S. M. D. in case of succesful bidders 10% of the highest bid which can even be raised upto 25% will be realised at the fall of hammer as earnest money, purchasers may inspect the material before bidding Detailed sale conditions will be announced on spot.

S. S NEGI) IFS
Divisional Manager,
Forest working Division.
Sundernagar.

# हिमाचल पूरे हुए सोलह साल

सन् १९७१ में जब हिमाचल प्रदेश भारतीय संघ में एक पूर्ण राज्य रूप में उदय हुआ तब से प्रदेश के सीधे-सादे, ईमानदार, शांतिप्रिय और परिश्रमी लोगों ने बेहतर जीवन-स्तर प्राप्ति के लिये की गई अपनी यात्रा में अनेक मील-पत्थरों को पार किया है।

प्रधान मंत्री
श्री राजीव गाँधी

हम पंडित नेहरू, श्रीमती इन्दिरा गांधी और अपने अग्रदर्शी प्रधान मंत्री श्री राजीव गांधी के विशेष आभारी हैं कि अपनी यात्रा में कभी भी पीछे मुड़ कर नहीं देखना पड़ा है।

## निम्न तथ्य इसका प्रमाण है :

| ★ | १९७१ | १९८७ |
|---|---|---|
| फलोत्पादन | १.७८ लाख टन | ३.९१ लाख टन |
| खाद्योत्पादन | ९.३४ लाख टन | १३.२० लाख टन |
| सड़कें | ७.७४६ कि. मी. | १६ ००० कि. मी. |
| नलों द्वारा पेयजल प्राप्त गांव | २.२३६ | १३.६३२ (कुल गांव का ८० प्रतिशत) |
| बिजली प्राप्त गांव | ४०८५ | १५.७७६ (९३ प्रतिशत) |
| स्वास्थ्य संस्थान | ६२० | २१८४ |

## शिक्षा

| | | |
|---|---|---|
| साक्षरता प्रतिशत | ३१.९६ | ४५ (अनुमानित) |
| स्कूल | ४.६४५ | ९.६०० |
| कालेज | १७ | ३० |
| विश्व विद्यालय | १ | ३ |

## परिवहन

| | | |
|---|---|---|
| बस (संख्या) | ५२५ | १३०८ |
| रूट (संख्या) | २१४ | १०६० |
| रूट (कि. मी.) | ६० लाख | ८.४४ करोड़ |
| प्रति व्यक्ति आय | ६७८ ०१ रुपये | २३१६ रुपये (१९८४-८५) |
| वार्षिक योजना परिव्यय | १७.२८ करोड़ रुपये | २०५ करोड़ रुपये (१९८६-८७) |
| वार्षिक बजट | ९८.३२ करोड़ रुपये | ६०२.८७ करोड़ रुपये ( १९८६-८७) |

वीर भद्र सिंह, मुख्य मन्त्री, हि. प्र.

आज हम पूर्ण राज्यत्व के १६ सफल वर्ष पूरा करने पर राष्ट्र की एकता व आवश्यकता तथा विकास व सुरक्षा के प्रति अपने आपको पुन: समर्पित करते हैं तथा धर्मनिष्पक्षता एवं समाजवाद के प्रति अपनी प्रतिबद्धता को दोहराते हैं :

— हिम लोक सम्पर्क

# आशा निराशा कथम् ?

स्वतन्त्रता संघर्षं संस्कृतबलेन कृतः भारतमनीषिभिः । यतोहि येऽपि देशस्वातन्त्र्याय संघर्षमकार्षुस्ते संस्कृतभाषायामुपनिबद्धेन साहित्येनानुप्राणिता आसन् । एतादृशः देशस्वतन्त्रतायै विचारविमर्शश्चापि स्वल्पसामूहिकरूपेण वम्बईनगरस्थे संस्कृतमहाविद्यालये एव कृतोऽभूत् । देशपिता महात्मागान्धी गीतायाः कियान् पुजारी विद्यते स्म तदपि सर्वे जानन्ति । शनैः २ सर्वेऽपि संस्कृतसमर्थका लोकसभायां राज्यसभायां, प्रान्तीयविधानसभासु च क्षीणतामुपगता अतो न तत्र कापि चर्चा संस्कृतस्याद्य श्रूयते दृश्यते वा । अत एव शिक्षातः शनैः २ संस्कृतस्य वहिष्कारः जायमानः अस्ति ।

एतस्य सर्वस्य कारणमस्ति संस्कृतज्ञानां संस्कृतं प्रति औदासीन्य, निष्कर्मण्यता पारस्परिककलहश्च । संस्कृत-अध्यापकाः, लेखकाः, कवयः पत्रकाराश्च कथं-अद्य संकटापन्नाः । तथापि स्व भविष्यं न सामूहिकरूपेणविचारयन्ति । संस्कृतज्ञाः संस्कृतसाहित्यं न पठन्ति न चापि तत्समृद्धये किमपि कुर्वन्ति संस्कृतपत्रस्य एक ग्राहक यदि वर्षे निर्मीयते असौ द्वितीयं न निर्मास्यति अपितु स्वयमपि दर्शन्ति ग्राहकत्वं त्यक्ष्यति । इत्यस्ति संस्कृतसेवकानां दशा वयं संस्कृतपत्रसम्पादकाः अर्थाभावेऽपि-शुभकामनाभिः द्विगुणितो साहा भवामः । एतत्कृत इव प्रकाशित डा० श्री सत्यव्रतस्य पत्रम् । तैरपि वयं बन्धुवर्याणां पत्रैं - अद्य जीवामः ।

अथ स्वल्पातिस्वल्पाः स्युस्तथापि सन्ति केचन जना एवं विधा अपि ये आर्थिकरूपेणापि प्रोत्साहयन्ति । एतादृशः एव वर्तते डा० ओंप्रकाश शर्मा नाभायाः संस्कृतकालेजस्य प्राध्यापकः (पंजाब) १९८६ ख्रीष्ठाब्दे तेन नवसंख्यका नवीनाः ग्राहकाः निर्मिताः पञ्चसंख्यकाश्च संरक्षका येषां नामांकनमधस्तात् क्रियते :—

| संख्या | नाम | परिचयः | संरक्षकाः | राशिः |
|---|---|---|---|---|
| १. | आचार्य श्री शुकदेव , | प्राचार्यः, रा. सं. कालेज नाभा पञ्जाब | | १००-०० |
| २. | श्री देवराज कश्यपः, प्रवक्ता | ,, | ,, | १००-०० |
| ३. | श्री सत्यप्रसाद नौटियालः | ,, | ,, | १००-०० |
| ४. | श्री तरसेम लाल गुप्तः ,, | ,, | ,, | १००-०० |
| ५. | श्री गोपालकृष्णभारद्वाज ,, | ,, | ,, | १००-०० |
| | | | ग्राहकाः | |
| १. | श्री मनोहरलाल शर्मा | दलद्दीगेट नाभा. पंजाब | | २०-०० |
| २. | श्री मदनसिंह शास्त्री | संगरूर | ,, | २०-०० |
| ३. | श्री कर्मजीतसिह रटोल | ,, | , | २०-०० |
| ४. | श्री अनूप शर्मा बरनाला | ,, | ,, | २०-०० |
| ५ | श्री मुकुन्दसिंह गण्डा | पटियाला | | २०-०० |
| ६. | श्री मनजीत सिंह चहल | ,, | | २०-०० |
| ७. | महन्त श्री सन्तरामदास जी | ,, | | २०-०० |
| ८. | श्री साधुराम जी शास्त्री | ,, | | २०-०० |
| ९ | श्री भूषण प्रभाकर | नाभा | | १०-०० |

वयमेतेषां सर्वेषामेवातीव कृतज्ञाः स्म । किमाशाकर्तुं शक्यते यदन्येऽपि संस्कृत-महाविद्यालयाः संस्कृताध्यापकाश्च [illegible]

# सृजन

क्या था कवि तब जब गम्भीर नीर ही था ?
परितः बस लहराता नीर क्षीर ही था ।।

सदसत् कुछ भी तो उस समय नहीं शेष था
अन्तरीक्ष स्वर्गादिक भी क्या अवशेष था ।
मृत्यु, अमरता, न रात दिन का ही ज्ञान था
माया के साथ ब्रह्म केवल स्थितिमान था ।।

जो कुछ भी दृश्यमान है, यह था तमनिलीन
पय में जैसे पय देखो रहता है विलीन ।
तुच्छ अविद्या से चेतन भी तो था मीलित
हुआ विश्व उसकी विद्या से फिर उन्मीलित ।

तरुणतरणि तरुणाई के समान छाया जब
वह वितान ऊपर नीचे कैसे जाने कब ?
तब अगणित भूतग्राम कर्मों में व्यस्त हुए
स्वर्णिम-संकल्प-कुम्भ-शकल सकल ध्वस्त हुए ।।

किस निमित्त किस कारण से प्रकटी बिविधसृष्टि
कौन कहे, किसकी गतिमान है वहां सुदृष्टि ।।
सुरासुर सभी पैदा हुए साथ साथ ही
इस कारण ही रहस्य हमको तो ज्ञात नहीं ।।

जिसने इस जग का विस्तार किया है इतना
वह ही इसका धारक हारक जो कुछ जितना ।
परम व्योमवासी है जो परमेश्वर धाता
सृजन के रहस्य का भी वह ही है ज्ञाता ।।

—:o:—

# अनुताप

रात अंधेरी है फिर भी देखो तारों को
क्यों उदास होते हो देखो इन प्यारों को ।।

जग हंसता ये हंसते जग रोता ये रोते
जग जगता ये जगते जग सोता ये सोते ।
पर फिर भी जब इनकी पीड़ा अति बढ़ जाती
गिर कर या टूट कर गहते भुवि की छाती ।।

घना अन्धकार है फिर भी मत घबराओ
देखी देखो उजले दिन सतत सहारों को ।।
रात अन्धेरी ... ... ...

उमड़े हैं घन काले सुभयंकर है बयार
निर्मलनभ मलिन मलिन उड़ता है वाष्पतार।
धूमिल धूमिल नभ है औ पर्वत-मालाएं
क्या जग में बस धूम की ही हैं शालाएं ।।

पर काले मेघों को ही क्या तुम देख रहे
देखो इनके इन चमकीले किनारों को ।।
रात अंधेरी ... ... ...

पथ है अतिकंटकमय और अकेला भी
गहन गहन महासिन्धु प्रलयंकर बेला भी ।
हो पीड़ित भार से कांटों की धार से
पाषाणों के आघातों की बौछार से ।।

तो भी तुम सहमो मत सोचो भी तो जरा
देखो तो सही इन कदुष्ण अश्रुखारों को ।।
रात अंधेरी है ... ... ...

लहरों के तूफानों से है नौका जर्जर
प्रखर प्रखर मंजधारा भी करती है झर्झर ।।
क्या टकराना है इसको चट्टानों से ही
क्या बुझेगी प्रबल तृषा विषपानों से ही ।।

गाओ मन मृदुल मृदुल कुछ तो तुम गाओ
मत देखो इन टूटी फूटी सितारों को ।।
रात अंधेरी ... ...

—:०:—

## मेघदूत

श्यामल घन! ठहरो ठहरो सुन तो लो विनती ।।

तुम समझोगे कि कालिदासने बताया
सन्देश मेघ भी है ले जाता मनुजों का ।
जो कुछ भी समझो पर ठहरो हे श्यामल घन
पूज्य मान ही लेते आग्रह अनुजों का ।

जब तुम पहुंचोगे पूर्वोत्तर की नगरी में
टूटी फूटी झोंपड़ियां तुमको दीखेंगी ।
ऊबड़ खाबड़ रस्ते दुर्गन्धान्वित नाली
काली नागिन सम लेटी सी दीखेंगी ।।

भीषणतम गर्मी सूखी सब सरिताएं
पनघट सब सूने, सूखे खेतों की पांते ।
धान रहा दूर हरा घास नहीं दीखेगा
तरुवर सब नंगे वर्षा विहीन रातें ।।

पतझड़ सूखा सूखा सा जिसकी क्या गिनती ।।
श्यामल घन ... ... ...

भोली गांवों की वधुओं ने है छोड़ दिया
लचकती कमर पर गागर को ले जाना ।
कूप और बावलियां सभी सूख सूख गये
पनघट पर कहां वहां कामिनियों का गाना ?

है हाहाकार मचा जलाभाव के कारण
फिर भी पानी की तो कोई भी आस नहीं ।
सभ्य - जगत् सपने में भी क्यों देखे यह सब
देश शासकों को नगरों से अवकाश नहीं ।।

- :o: -

## विजयमन्त्र

विजय के बीजमन्त्र गाओ !
कि प्रतिपद बढ़ते ही जाओ ।

घोर निराशामयी निशा गई ।
मधुर मधुमयी उषा आ गई ।।
साहस - सरिता में सुस्नान कर ।
बलि होते जाओ ।।

# महत्वपूर्णाः प्राप्याः विशेषाङ्काः

१. विश्व संस्कृत सम्मेलनाङ्कः
२. नवशब्द निर्माणाङ्कः
३. नवकथानिकाविशेषाङ्कः
४. संस्कृतचलचित्रविशेषाङ्कः
५ श्री शङ्कराचार्य विशेषाङ्कः

## मूल्यम

एकस्य मासाङ्कस्य मूल्यं रुप्यकचतुष्टयं विशेषाङ्कस्य मूल्य अष्टौ रुप्यकाणि । पूर्वं मूल्यप्राप्तावेव अङ्का प्रेषयिष्यन्त ।

— प्रधान सम्पादकः

# संस्कृतशोधछात्राणां कृते उपयोगिनः

दिव्यज्योतिष प्राप्या गताङ्का

| सन् | वर्षम् | अङ्काः | सन् | वर्षम् | अङ्काः |
|---|---|---|---|---|---|
| । | । | । | । | | |
| १९५६ | १ | १ | १९७४ | १९ | २ ३, ४, ५ ६ |
| १९५७ | २ | २ | | | ७. ८, ९, १०, |
| १९५८ | ३ | १२ | | | ११, १२, |
| १९५९ | ४ | ८ | १९७५ | २० | १, ३, ४ ५, |
| १९६० | ५ | ८ | | | ६, ७, ८, ९. |
| १९ १ | ६ | ७ | | | १०, १ . १२ |
| १९६२ | ७ | १ २, ३ | १९७६ | २१ | २ ३, ४, ५, ६, |
| १९६४ | ९ | २, ६. | | | ८, ९, १०, ११, १२ |
| १९६६ | ११ | ४. ८, ९, ११ | १९७७ | २२ | २ ३, ४, ५, |
| १९६७ | १२ | ५ | | | ९ १०. ११, १२, |
| १९६८ | १३ | ४. | १९७८ | २३ | १, २. ३, ८ |
| १९६९ | ४ | ४. ६, | १९७९ | .४ | १, ३, ४, ५, ६. |
| १९.० | १५ | १ ४. १० | | | ७ ८ ९. १०, |
| १९७१ | १६ | १. २, ४, ५, ६ | | | ११, १२, |
| १९७२ | ७ | . ५, ६, ७, ८. | १९८० | २५ | ' से १२ तक |
| | | ९ १०, ११, १२, | १९८५ | २९ | १ से १२ तक |
| १९७३ | १. | १ २. ८, ९. १० | १९८६ | ३० | १ से १२ तक |

★ —

R. N. 6384/57 Registered No. 10

# संस्कृतशोधसंस्थानस्य अभिनवप्रकाशनानि

## सूनृता

### ( सं० गीत काव्य )

दिव्यज्योतिष: प्रधानसम्पादकेन श्रीमदाचार्यकेशवशर्मणा प्रणीतं सचित्रं पञ्चचत्वारिंशत्सुललितपद्य- गद्यगीतग्रथितं पुरीस्थश्रीजगन्नाथ सं० वि० विद्यालय-कुलपतिचरस्यश्रीमदाचार्यऽवर डा० सत्यव्रतऽ।वकथन समुपेतं संस्कृत जगति महत्वपूर्णं खण्डकाव्यम् ।

— मूल्यम् २५ रु० डाक व्यय: पृथक् —

★

## पथ्यापथ्य विनिर्णयः

हिमाचलप्रदेशस्य सुविख्यातराजवैद्य स्व० पञ्चाननशर्मणा महाविदुषा १०५ वर्ष पूर्वं प्रणीत: सं० टाका सहितस्तथा हिन्दीटीकया समुपेत -दुर्लभो ग्रन्थः ।

- मूल्यम् २० रु० डाक व्यय: पृथक् —

## हिमाचलप्रदेशे तप्रसारो विकासश्च

स्वातन्त्र्यात्परं हिमाचलप्रदेशे संस्कृतप्रसारविकासविषये यदायोजनादिकं जातं तस्य सचित्रं विवरणं दिव्यज्योतिष: प्रधानसम्पादकेन श्रीमदाचार्यकेशव—शर्मणाऽस्मिन् ग्रन्थे ग्रथितम् ।

— मूल्यम् ५० रु० डाक व्यय: पृथक् —

★

त्वर्यताम् त्वर्यताम् त्वर्यताम्

प्रतय: स्वल्पा एव सन्ति

युगपत् पुस्तकत्रयं, अशीतिरुप्यकै: प्राप्यते

— प्राप्तिस्थानम् —

संस्कृत-शोध संस्थानम्, भारती विहार मशोवरा, शिमला-७

## संस्कृतस्य परमोपासकः

शास्त्रि लालबहादूरः- दूरस्थोऽद्य न भूतले ।
तथापि भारतीयान् स स्वर्गादपि समीक्षते ।।
तस्य तोषाय देशस्य जनैरविरतं मुदा ।
पठनीया सेवनीया मधुरा सुर-भारती ।।

# दिव्यज्योतिः

संस्कृतस्य सचित्रमासिकम्

शिमला,
फर्वरी, १९८७,
वर्षम् ३१ - अङ्कः - ५

### जर्मनस्य वाइमर नगरम्

जर्मनीये जन्म लेभे मोक्षमूलर-सञ्ज्ञकः ।
संस्कृतस्य तु ज्ञानेन स्वात्मानं समतोषयत् ।।
परं नासौ तदानीं वै भारतं दृष्टवानिति ।
तस्य खेदावहं जातं लोकलीलान्तिमे क्षणे ।।
इदं तु नगरं तस्य सदा संस्कृतसेविनः ।
मनोहरा परा नित्या भारती यत्र सेव्यते ।।

# विषयानुक्रमः



## दिव्यज्योतिः,


हिमाचलप्रदेश — पंजाब- हरियाणा-जम्मूकश्मीरमध्यप्रदेश - राजस्थान—महाराष्ट्र
उत्तरप्रदेशशासन-स्वीकृतं केन्द्रशासनपुरस्कृतं सचित्रं सस्कृतमासिकम् ।


### पत्रस्य उद्देश्यानि तथा नियमाः

सरल-सरस-सुबोध-साधनैः सर्वस्मिन् संसारे संस्कृतस्य प्रसारः, साहित्यान्तर्गताना सकलकलानां समन्वेषणं, ससारस्य हितसम्पादनम् , एव लौकिक— अलौकिकस्वातन्त्र्यस्य प्राप्तिः ।

"दिव्यज्योतिः" प्रतिमास पञ्चदशतारिकायाम् (आङ्गलमानेन) प्रकाशित भवति ।

पत्रस्य वार्षिक मूल्य २० रु० अर्धवार्षिकं १५ रु० एकस्याङ्कस्य च रु० १-७५ भवति ।

वर्षारम्भ आश्विन—मासतः भवति । ग्राहकः कस्मादपि मासाद् भवितुं शक्नोति ।

ग्राहकैः, "सम्पादक, दिव्यज्योतिः, भारती विहार, मशोबरा, शिमला-१७१००७ हि. प्र." इति संकेते धनादेशेन वा शु. प्रेषणीयम ।

निदर्शन-अङ्कस्य (नमूना) प्राप्तये २/- रु० मूल्यं प्रेषणीयम् ।

"दिव्यज्योतिः" प्रतिमासं सम्यक् - निरीक्ष्य प्रेष्यते । यदि कश्चित् अपि ग्राहकः पञ्चविंशति-दिन यावत् पत्रं न प्राप्नुयात् तर्हि स पत्रालयात् तत कारणं जानीयात् । उत्तरपत्रम (जवाबी कार्ड) प्रेषणीयम यदि कार्यालयात किमपि ज्ञातव्यं भवेत

कस्या अपि रचनायाः प्रकाशनाप्रकाशनयोः तथा सक्षेपसम्बर्धनादि-अधिकारः सम्पादकाधीनः । प्रकाशनार्थं प्रेषिताः रचनाः कर्गलस्य एकभागे सुस्पष्टाक्षरैर्विलिख्य प्रेष्याः । — — —

### परिचयः


संस्थापकाः तथा आद्यसम्पादकाः आचार्यश्रीदिवाकरदत्त शर्माणः. दूरभाष : 3859 8-200
प्रधानसम्पादकः— प्रा० केशव शर्मा म. ए., एम. फिल. साहित्यरत्नम,
दिव्यज्योतिः कार्यालय भारती विहारः, मशोबरा, शिमला-७ (हि.प्र.)

मुद्रकः प्रकाशकः—
भारतीमुद्रणालय भारती विहार, मशोबरा-१७१००७ शिमला (हि.प्र.)
स्वामी :—श्रीमती आचार्य रत्नकुमारी शर्मा

फर्वरी, १९८७ फाल्गुण २०४३ — वर्षम्-३१ अङ्कः ५
वार्षिक मूल्यम् २० रु०

# झञ्झा

(शैक्सपीयरप्रणीतस्य टैम्पेस्ट नाटकस्य संस्कृतरूपान्तरम्)

## पात्रपरिचय

एलोन्सो...नेपलेस देशाधिपः ।
सेवास्टेनः अस्य भ्राता ।
प्रोस्पैरो मिलनदेशस्य वास्तविकोऽधिपः ।
एन्टोनियो · अस्यानुजः मिलनस्य कृत्रिमो राजा ।
फर्डीनन्दः — नैप्लेसाधिपस्यात्मजः ।
गोञ्जेलो एकः सज्जनो वृद्धोऽमात्य. ।
एड्रियनः }
फ्रान्सिस्को } अधीश्वरौ
कलिबान् — दैत्यः, विकलाङ्गभृत्यः ।
ट्रिन्क्यूलो विदूषकः ।
स्टेफानो — मद्यपानेमत्तः मद्यरक्षकः ।
पोताध्यक्षः — पोतस्य
मुख्यनाविकः— ,,
मिराण्डा - प्रोस्पेरोराज्ञः पुत्री
नाविकाश्च — पोतस्य
एरियल — वायुमयो वेतालः
आईरिस }
केरस }
जूनो } वेतालोद्भाविताः ।
देव्यः }
लवितारः —
अपरे वेतालाः— प्रोस्पेरो-सेवारताः ।

# प्रथमोऽङ्कः

अपटी १

१. जलमध्ये पोतः २. एको द्वीपः ।

समुद्रस्थिते, पवनाहते, जलपोते घनगर्जनं विद्युत्तर्जनञ्च संश्रूयते, पोतस्वामी मुख्यनाविकश्च प्रविशतः ।

स्वामी – मुख्यनाविक ?

मुख्यनाविकः– एषोऽस्मि स्वामिन्, कीदृशोऽस्ति भवान् ?

स्वामी - स्वस्थोऽस्मि । समादिश नाविकान् त्वरयितुं नोचेत् सङ्कटापन्नं नो जीवनम् । यतस्व, प्रयतस्व ।

प्रस्थानम्

नाविकानां प्रवेशः

मुख्यनाविकः- अहो ! मम सुहृदः ? बन्धवः ? सानन्दं सोत्साहं प्रयतध्वम् प्रयतध्वम् । नामयन्तु सर्वोच्चं वातवसनम् । स्वामिनः शीश् शब्दमवधीयताम् । वायो ! यथेच्छं प्रवह । नास्ति कापि भीति यद्यपि तटं दूरे ।

अथ प्रविशन्ति एलोन्सो, सेवास्टेनः एन्टोनियो, फर्डी नन्दः, गोन्जेलो–आदयोऽन्यैः सह ।

एलोन्सो—साधु मुख्यनाविक ? सावधानम् । क्वास्ते पोतस्वामी ? प्रदर्शयन्तु शौर्यम् ।

मुख्यनाविक : प्रार्थयाम्यधुना नीचैर्गम्यताम् ।

एन्टोनियो : क्वास्ते स्वामी मुख्यनाविक ?

मुख्यनाविक :- किं भवद्भिर्न श्रूयते सः, केवलमस्माकं प्रयासा बाध्यन्ते । सनाथयन्तु स्वप्रकोष्ठम् । सनिश्चयमेव श्रीमद्भिः पवनाहतेः सहयोगो विधीयते ।

गोन्जेलो :-नहि सज्जन, धैर्यमावह ।

मुख्यनाविक :- यदा सिन्धुरावह्निष्यति । अपसरन्तु । शब्दायमानाः मधुव्रतरङ्गा न राज्ञो नामचिन्तां कुर्वन्ति । स्वप्रकोष्ठं समलङ्क्रियताम् । मौनम् । मास्मान् बाधयध्वम् ।

गोञ्जेलो :- साधुपुरुष ! कं नयसीति स्वयं विचारय ।

मुख्यनाविक :- नहि तादृशं कमपि यमहं स्वजीवनादधिकं मन्ये । त्वमप्यमात्योऽसि । चेत्त्वदादेशेन तरङ्गाः शान्ताः भवन्ति वायुमण्डलञ्च प्रकृतिस्थं भवति तु न वयमेकमपि रज्जुं स्पृशामः । स्वाधिकारप्रयोगं कुरु । अथ चेदशक्तोऽसि तर्हि धन्यवादान् देहि यदिदानीं यावत् जीवितोऽसि । स्वप्रकोष्ठे स्वात्मानं कालस्य कामपि दुर्घटनां द्रष्टुं सज्जं कुरु, चेत्तथा भवेत् सोत्साहं प्रियसुहृदः । अपसरन्तु नो मार्गात् । कथयाम्यहमपसरन्तु ।

## प्रस्थानम्

गोञ्जेलो :- महत्सन्तोषकारणमेषो जनो मे । नायं समुद्रे निमज्जनस्य कमपि चिन्हं धारयति । अस्याकृति नूनमेवास्य पाशदण्ड-मृत्युं प्रदर्शयति । विधातरस्य पाशदण्डमृत्युविषये सुदृढो भव । विरचयास्य पाशरज्जुं, तदेवात्मानपि रक्षयिष्यति । पोतरज्जवस्तु व्यर्थतामेव प्रदर्शयन्ति । अथ चेदयं न पाशमृत्युना म्रियेत तदा नूनमेवास्माकं जीवितं संशयारूढम् ।

## प्रस्थानम्

### पुनः प्रविशति मुख्यनाविकः

मुख्यनाविक :- नामयथ सर्वोच्चं वातवसनम् । नामयन्तु, नामयन्तु । मुख्यवातवसनेन समाच्छादयैनम् । (पोताभ्यन्तरे चीत्कारः) गर्हास्पदोऽयम् चीत्कारः । ऋतुवैपरीत्यादपि, अस्माकमादेशशब्दाच्चापि ते समुच्चतराः कोलाहलपूर्णाश्च सन्ति ।

सेवास्टेनः- गोञ्जेलो एन्टोनियो एते पुनः प्रविशन्ति ।

पुनरपि पुनः, किं प्रयोजनमत्र ? किमस्माभिरप्रयतद्भिरेव निमज्जितव्यं ? अपि प्लावनमेव भवतां प्रियम् ?

सेवास्टेन :- गर्हाहींऽयं त्वदीयकण्ठः, विक्रोशितनास्तिक, क्रूरकुक्कुर ?

मुख्यनाविक :- तर्हि चालय पोतम् ।

एन्टोनियो :- वध्योऽसि क्रूरखल, वध्योऽसि, निर्लज्ज, गर्वोद्धत ? वयं त्वदपेक्षया निमज्जनात् स्वल्पं भीताः स्मः ।

गोञ्जेलो :-यद्यपि वायुप्रवाहपतितोऽयं पोतोऽत्र नास्ति अक्षोटत्वचः द्रढीयांस्तथापि सुनिश्चितमिदं यन्नायं निमङ्क्ष्यति ।

मुख्यनाविक :- समाच्छादयन्त्वेन वायोः समाच्छादयन्तु । मुख्याग्रिमवातवमनेन सिन्धौ स्थलाद् दूरे स्थापयन्तु ।

## क्लिन्ननाविका प्रविशन्ति

नाविका :- सर्वं प्रणष्टम् । प्रार्थयन्तु सर्वशक्तिमन्तम्, प्रार्थयन्तु, नास्ति कापि आशा ।

मुख्यनाविक :- किमाह नूनमेव प्रणष्टाः वयम् ?

गोञ्जेलो :-सराजकुमारो महाराजो प्रार्थयते । अस्माभिरपि तथैवानुष्ठेयम् । यतो हि नोऽपि सैव गतिः ।

सेबास्टेन :-नास्ति धृतिर्मे ।

एन्टोनियो :-केवलं दुष्टनाविकैर्वयं स्वामूल्यजीवनात् प्रतारिताः । एष विशालमुखो राक्षसः । अयं नूनमेव निमज्जेत् । अस्य शवश्च सिन्धुजलप्रवाहेण दशवारं यावत् तटे न प्रक्षिप्तो भवति तावदस्मिन्नेव स्थितो भवेत् ।

गोञ्जेलो :- नैवायं तु लम्बायितो भविष्यति । यद्यपि प्रत्येकजलविन्दुरस्य जीवनप्रतिकूलं स्वमुखञ्चास्य प्लवनायोद्घाटयति ।

## पोताभ्यन्तरे भयमिश्रः कोलाहलश्चीत्कारश्च

दयस्वास्मासु दयस्व । प्रणष्टाः वयं प्रणष्टा :-कल्याणमस्तु मम प्रिये ! प्रणष्टाः वयं प्रणष्टा :-कल्याणमस्तु भ्रातरः-प्रणष्टाः वयम् ।

एन्टोनियो.-सर्वैरेवास्माभिः महाराजेन सहैव निमज्जितव्यम् सेबास्टेनः तस्मादस्माभिरवकाशो गृहीतव्यः ।

एंटोनियो सेबास्टेनश्च गच्छतः

गोञ्जेलो इदानीमहं वनप्रदेशस्य - एकैकड़भूमिक्रते-कीदृश्यपि वनभूमिः सर्वसामान्यभूमिः, प्रचुरकण्टकपीतपुष्पसदाहरितवर्णगुल्म भूमिः सहस्रशो नल्वान् समुद्रस्य दित्सामि । तथापीश्वरेच्छा बलीयसी परमहन्तु जले मरणापेक्षया निर्जलभूमौ मुमूर्षामि।

प्रस्थितो भवति

अपटी २

प्रोस्पेरो महाशयस्य गुहाया अग्रे द्वीपः । प्रोस्पेरो मिराण्डा च प्रविशतः ।

मिराण्डा - प्रिय तात ! चेद् भवता स्वशक्त्या एवैषा पवनाहतिः सिन्धौ समुद्भाविता तु नाशयैनाम् । एवं प्रतीयते यथाकाशो दुर्गन्धितकृष्णजलं वर्षयिष्यति । एताश्च सिन्धुजलोर्मयः आकाशं चुम्बन्ति ताश्च तत्राग्निमपि शमयितुं शक्ताः । ये हि सङ्कटे निमग्ना तैः सह किलाहमप्यस्मि सङ्कटापन्ना । एकमतिसुन्दरं जलपोतमहं खण्डशः प्रस्फुटन्तमपश्यम् निःसन्देहं तत्र केचन निरपराधाः प्राणिनः आसन् तेषां चीत्कारो मम चित्ते शूकशिखेव प्रविष्टः । संकटापन्नास्ते सर्वे मृताः । चेदहं काचिद् देवताऽभविष्य तु समुद्रं पृथिव्यां पर्यवर्तयिष्यम् पूर्वमेवाप्या दुर्घटनाया र्नम् ।

प्रोस्पेरो - शान्ता भव नाधुना कापि वातहतिः ।

स्वीयं कृपालुचित्तं कथय यन्न कापि हानिस्तेषां जाता ।

मिराण्डा: अहो नु खलु दुर्दिनम् ।

प्रोस्पेरो :- न कस्यापि कापि हानि: । मया न किमपि कृतम् । यत् किमपि च कृतं तद्केवलं त्वदर्थमेव मत्पुत्री त्वदर्थम् । या त्वमिदमपि न जानासि यत् कासि त्वम् ? कश्चास्म्यहम् । त्वदर्थन्तु केवलमहं त्वत्पिता गुहाया अस्या: स्वामी । नातोऽधिकं त्वं किमपि मामकीनं महत्वं जानासि ।

मिराण्डा – नाहं बहुना ज्ञातेन स्वात्मानं पीड़यितुमिच्छामि ।

प्रोस्पेरो समुचितोऽयमवसर: सर्वमिदं ज्ञातुम् । अहं त्वां सर्वं संसूचयितुमिच्छामि । मदीयस्यास्य मायावसनस्यावतारणे मामकीनं साहाय्यं कुरु । एवम्

(मायावसनं समवतार्य संस्थापयति)

अत्रैव तिष्ठत्विदं मायावसनं मायाजालविद्या चेयं मदीया । प्रोञ्छय स्वीयाश्रूणि । स्व-स्थचित्ता भव यद्यपि त्वया भयङ्करा पोतविघटनघटना समालोकिता । तथापि मम विद्याप्रभावेण सा घटना तथाऽभूद्यथा पोतस्य पोतस्थितानाम्वा जनानां कापि काचिदपि स्वल्पतराऽपि हानिर्नाभूत् । समुपाविश यतोहि त्वया सर्वमपि वृत्तमामूलचूलं ज्ञातव्यमस्ति ।

मिराण्डा - भवता बहुवारं "कोऽहंमिति" वक्तुमिच्छ्नापि न प्रकटितोऽयं विषय: । यदा चाहं विषयममुं जिज्ञासमाना कानपि प्रश्नान्-अपृच्छम् तदा नायं समुचितोऽवसर: प्रतीक्षस्वेति प्रत्युत्तरमाप्नुवम् ।

प्रोस्पेरो - एवम् । अवसरोऽयं समायात: । अधुना स्वकर्णौ सम्यगुद्घाट्य शृणु । सावधाना भव । अपि स्मरसि किमपि गुहायामस्यामागमनात् पूर्वकालीनं वृत्तम् ? परं नाहं विश्वसिमि यत्त्वं किमपि तात्कालीनं स्मरसि यतोहि तदा त्व केवलं वर्षत्रयदेशीया आसी: ।

मिराण्डा- चिरानुवृत्तमिदम् । स्वप्नायितमेवेदं मत्कृते कदाचित् चतस्त्र: पञ्च वा स्त्रियो नासन् मम सेवायां तदा ?

प्रोस्पेरो- आसन्नधिका अपि मिराण्डे ! परमाश्चर्यकरमेवेदं यत्त्वं स्मरसि । कालस्य निराधारकृष्णपृष्ठभूमौ अपि किमप्यन्यत् पश्यसि ? चेदत्रागमनात् पूर्वं किमपि स्मरसि तर्हि कथय कथमत्रायाताऽसि ?

मिराण्डाः- तन्नाहं स्मरामि ।

प्रोस्पेरोः- द्वादशवर्षाणि पूर्वं मिराण्डे, पूर्णानि द्वादशवर्षाणि पूर्वं तव पिता मिलनदेश य प्रशासकः शक्तिशालिराजा चासीत् ।

मिराण्डाः- तात, किं तर्हि न भवान् मम पिता ?

प्रोस्पेरोः तव माता पूणतः पतिव्रतासीत् । सैवावोचद्यत् त्वं मम सुतासि । एषस्तव पिता मिलनस्य प्रशासकस्तस्य च रिक्तभाक् तद्वीर्यजा राजकन्या त्वम् ।

मिराण्डाः- प्रभो ? कीदृशीं प्रवञ्चनां वयमाप्ताः । यद्वय ततः समायाताः । अथवा एष प्रसाद एवासीत् ?

प्रोस्पेरो :-उभावेवेमौ मम सुते ! यां त्वं प्रवञ्चनेति कथयसि तयैव वयं ततो निष्कासिता परमेवं प्रसादेनैव केनचित् प्रकारेण कुशलपूर्वकं प्राप्ताः ।

मिराण्डाः पुरा यत्कष्टकारणमहं भवतेऽभवं तेषां स्मृतिमात्रेणैव भृशं व्याकुलास्मि । पुनश्च तान्नेवाहं व्यस्मरम् । कृपया कथय किमग्रे सञ्जातम् ।

प्रोस्पेरोः - एन्टोनियो नाम ममानुजः आसीत् तव चासौ पितृव्यः । त्वदतिरिक्तं सर्वस्मिन् संसारे तमहं सर्वप्रियमन्वभवम् । सावधानतया शृणु । अपि कश्चिदपि भ्राता तादृशो विश्वासघाती भवति ? तमेवाहं स्वपूर्णप्रतिनिधित्वेन राज्यप्रशासने न्ययुञ्जम् । तदा किल सर्वेषु राज्येषु मदीयं राज्यं सर्वप्रधानमासीत् । तथैवाहमपि बुद्धिवैभवादिवैशिष्ट्येन सर्वप्रधानोऽभवम् । इत्थमहं स्वाध्यायशीलो भूत्वा सर्वमपि राज्यप्रशासनं स्व भ्रातरि न्यक्षिपम् । एवमहं त्यक्त सर्वराज्यकार्यकलापः इन्द्रजालसाधने व्यस्तोऽभूवं स च त्वदीयः पितृव्यः --

अपि, श्रृणोषि मद् वचांसि ?

मिराण्डा : तात ! सर्वथा सावधानतया च ।

प्रोस्पेरो : केऽभियोगाः कथं चास्वीकार्या एवं सर्वमपि प्राशासनिकनैपुण्यमासाद्य, कोहि समुन्नेतव्यः कश्चाधः करणीय, इति सर्वं ज्ञात्वा मयि समनुरक्तान् अधः कृतवान् सर्वानपि वा परिवर्तितवान्। स हि सर्वशक्तिमत्तया सर्वान् लोकान् स्वाधीनान् चक्रे सर्वस्मिन् राज्ये। स मदर्थं किल तादृशा तरुरोहिणी सम्वृत्ता यया मदीयानि राजकीयाङ्गानि सर्वथा समाच्छादितानि सर्वतत्वञ्च पीतम्। अपि न श्रृणोषि ?

मिराण्डा :-किं नहि नूनमेव श्रृणोमि सर्वम् ।

प्रोस्पेरो :-सावधानतया श्रृणु माम् । निखिलमपि सांसारिकवस्तुजातं परित्यज्य अहममूल्ये मस्तिष्कज्ञानसाधने निमग्नोऽभवम् । मदीयमिदमौदासीन्यं मम भ्रातुर्मनसि विश्वासघातनमुत्पादयाञ्चक्रे । यथा पितरौ स्वकीयायां सुयोग्यसन्ततौ विश्वसन्ति तथैवाहं तस्मिन् सुदृढविश्वासोऽभवम् । परं यावानधिको मम विश्वासस्तस्मिन् आसीत् तावानेवाधिको विश्वासघाती स बभूव। इत्थं स न केवलं राज्यस्य सर्वसत्तासम्पन्नः प्रभुरेवाभूत् माञ्च सर्वथा व्यस्मरत् यस्मात् स शासनशक्तिमधिगतवान् परं स हि सत्यं समाच्छादयितुं स्वीयस्यासत्यस्य पुनः पुनस्तथा समुद्घोषणं कृतवान् येनासत्यमेव सत्यं प्रतीयेत । एवं च तस्य लिप्सा क्रमशो ववृधे । अपि श्रृणोषि ?

मिराण्डाः- वधिरोऽपि भवदीयगाथायां रसवान् भवेत् ।

प्रोस्पेरोः- शनैः २ स तथा व्यवहृतवान् येन तस्मिन् कार्यवाहके राजनि वास्तविकशासके च न कोऽपि भेदः प्रतीयेत मिलनदेशस्य वास्तविको भूपतिः । अहञ्च दुर्भाग्यायत्तः स्वपुस्तकालयमेव विशालमिलनराज्यं मेने । मदीयो भ्राता मामिदानीं राज्यस्य कस्यापि कार्यकरणस्यायोग्यं ज्ञातवान् । तस्य राज्याप्तिपिपासा तीव्रतरा बभूव । नेपलेसदेशस्य राज्ञा सह मिलित्वा मद् विरुद्धं षड्यन्त्रमरचयत् । तस्मै किल वार्षिककरप्रदानमपि

वीचक्रे तदधीनताञ्च । स हि मिलनराज य सर्वतन्त्र वतन्त्र-
-य थिति तथा कृत्वा शो नीयाञ्चकार । अहो दैन्यं
मिलनराज्यस्य ? सर्वथा सम्मानजनकमधीनत्वम् ।

मिराण्डा :-अहो दुर्दैवम् ।

प्रोस्पेरो : विचारय तत्कर्म । अपि तादृश एव भवति भ्रातृ-आदर्शः ?

मिराण्डा : चेतमभ्रातरं कथयेयं तु मदीया पितामही असाध्वी स्यात् ।
तच्चिन्तनमपि पापावहं मे । परं पतिव्रतास्वपि कदाचित्
कुलकलङ्काः समुत्पद्यन्ते ।

प्रोस्पेरो :-शृणु चाधुनात्र प्रवन्धम् ?

नेपलेस-प्रशासको मदीयो घोररिपुरासीत् । स मम भ्रातुरिच्छां
श्रवणमात्रेणैव स्वीचक्रे । स चैवमैच्छत् "मिलनराज्यं नेपले-
सराज्यस्याधीनं भविष्यति अधीनताकरञ्च दास्यति ।"
करस्य कियान् राशिर्निश्चितः तन्नाहं जाने । "तत्पुरस्का-
ररूपे नेपलेसाधिपः मिलनस्य विशुद्धराजानं रिक्थग्राहिणीञ्च
कन्यां रा यात् दूरे नेष्यति । मिलनाधिपस्यानुजञ्च सर्वशक्ति-
सत्ता-सम्पन्नं मिलनाधिपं विधास्यति ।"

एवं निश्चित्य-एकदा मध्यनिशायां एका षड्यन्त्रकारिणां
सेना समायाता राजधान्याम् । एन्टोनियो मुख्यद्वाराणि
समुद्घाटयत् ।

निशाया घोरेऽन्धकारे ते षड्यन्त्रकारिणस्त्वां रुदन्तीं माञ्च
निःसहायं तस्मात् स्थानात् यथा शीघ्रं निष्कासयन् ।

मिराण्डा :-अहो कारुण्यम् । नाहं स्मरामि तदाऽहं कथमिव रुदिता ।
इदानीं मम मनस्तथैव रुरोदयिषति । कथानकमिदं मां वलादिव
रोदितुं प्रेरयति ।

प्रोस्पेरो : किमित्यन्यच्छृणु, तदनन्तरमहं प्रवर्तमानविषयमुपवर्ण-
यिष्यामि । विनाऽनेनेदं सर्वं व्यर्थमेव ।

मिराण्डा :-अथ किमर्थं न तेऽस्मान् तदैवामारयन् ?

प्रोस्पेरो :-सामयिकोऽयं सुताप्रश्नः। ममेदं कथानकमेव वा तादृशमिदं प्रश्नं समुद्भावयति। प्रियसुते? तेऽस्मान् हन्तुमशक्ता आसन्। यतोहि मदीया प्रजा मयि नितान्तमनुरक्तासीत्। अत एव मम शत्रवस्तथा षड्यन्त्रं चक्रुः येन लोकाः रहस्यं न जानीयुः। संक्षेपतस्ते त्वरयाऽमाम् जलपोतेन स्थलात् किञ्चिद्दूरे समुद्र-जले एकस्यां सर्वतः प्रस्फुटितायां नौकायामस्थापयन्। इयं नौका नाविक-परिच्छद-वातवसन-रज्ज्वादिभिः सर्वथा हीनासीत्। वराका मूषका अपि नौकामिमां निमज्जनयोग्यां ज्ञात्वाऽत्यजन्। तेऽस्मान् समुद्रे य कोपप्रस्फुरितधारासु नैराश्यतया सहयोगार्थं रोदितुं त्यक्तवन्तः। सिन्धुवातप्रवाहः आवयोः शोकोच्छ्वासान् श्रुत्वा जातकरुणः स्वमुखात् वहिः। प्राक्षिपत्।

मिराण्डा :-दुर्दैवम्। कियद्दुःखकारणमभवमहं तदा भवत्कृते।

प्रोस्पेरो :-शिशुदेवदूत इव त्वमेव मां तदा समरक्षः। यदाहं दैवदुर्विपाकात् स्वाश्रुप्रवाहेण समुद्रं न्यपूरयं तदा त्वं मन्दं मन्दं स्मयमानाऽतिष्ठः सा च त्वदीया स्मिति मत्कृते दैवप्रेरणैवासीत्। तया चाहं सर्वदुःखसहनशक्तिमाप्नुवम्।

मिराण्डा :-तत्कथमिवावामत्र तटं प्राप्तौ?

प्रोस्पेरो :-ईश्वरेच्छयैव। किञ्चिद्भोज्यं तरुणञ्च पानीयमावयोः पार्श्वेऽविद्यत। तद्धि जातकरुणः नेपलेसजनो गोञ्जेलो नामधेयोऽस्मत्कृते समस्थापयत्। स हि सर्वस्यास्य षड्यन्त्रस्याध्यक्ष्ये नियुक्तः आसीत्। स हि अस्मत् कृते महार्हाणि परिधानानि, वहुमूल्यानि च वसनानि अन्यच्चावश्यकानि वस्तूनि संस्थापितवान् यानि कालान्तरेऽपि अस्मत् साहाय्यसाधकानि बभूवुः। मत् पुस्तकालयात् स तानि पुस्तकान्यपि दत्तवान् यान्यहं स्वराज्यादपि वहुमूल्यानि अगणयम्।

मिराण्डा : किं कदाचिदहं तं द्रष्टुं प्रभवेयम्।

प्रोस्पेरो :-समस्थातव्यं मयेदानीम्।

भाया वसनं पुनर्धारयति

समुपविष्टैव भव, शृणु चावयोरन्तिमं परिणामं सिन्धु-संकटस्य । आवामत्रागच्छाव: । अत्र चाहं तवाध्यापकत्वेन तत् सर्वमपाठयमशिक्षयञ्च यज्ज्ञातुमन्या राजकुमार्योऽशक्ता: ता: किल स्वीयममूल्य-समयं व्यर्थमेव क्षपयन्ति न चापि तासामध्यापका एव तथा सावधानतया ता: पाठयन्ति यथाहं त्वामपाठयम् ।

मिराण्डा :-तदर्थं किलेश्वर एव भवतां धन्यवादानर्पयेत् । इदानीमहं पुनर्भवत: पिपृच्छिषामि यत् किमासीद्रहस्यं सिन्धुक्षोभस्य ?

प्रोस्पेरो : जानीहि एतावदेव । मम भाग्योदयं वलात् ईश्वरेच्छया एव मम शत्रवोऽत्रायाता: मया च मायावलेनेदं ज्ञातं यदिदानीं कश्चिद् ग्रहो ममातीव साहाय्यं करोति । अपगते च तद्द-शाकाले नूनमेव मम भाग्यभास्करस्यास्तो भविष्यति चेदहमस्य कालस्योपयोगं न कुर्याम् ।

अथालमिदानीं प्रश्नोत्तरै: । त्वां पुनरपि निद्रा बाधते । शोभनमेवेदमालस्यम् स्वपिहि नाधुना निद्रां जेतुं शक्नोसि ।

(मिराण्डा स्वपिति)

प्रोस्पेरो :-आयाहि सेवक ! समायाहि, सज्जोऽस्म्यहमधुना समागच्छ एरियल, समायाहि ।

(एरियल: प्रविशति)

एरियल :-प्रोस्पेरो सर्वतोऽभिनन्दनं महाप्रभावस्य स्वामिनः। प्रणमामि शक्त्याधार ? समायातोऽस्मि त्वदीयमादेशमुद्बोढुम्। येन त्वं प्रसन्नो भवेस्तत् सर्वं चिकीर्षामि, समुड्डयनं, सन्तरणं, वन्हौ निमज्जनं, कुण्डलाकारमेघमण्डलेषु समारोहणं तवाज्ञानुरूपं सर्वमपि स्वसेवकैः सह करिष्यामि।

प्रोस्पेरो :-अपि त्वमुत्पादयः सिन्धुक्षोभं यथाहमादिष्टवानासम् पूर्वम् ?

एरियल :-प्रत्यक्षरं स्वामिन् ? प्रथममहं राज्ञः पोतमारूढः। कदाचिदग्रभागे, कदाचिन्मध्ये, ततश्चोपरिभागे सर्वेषु प्रकोष्ठेषु च। अहमात्मना बहुषु स्थानेषु-अग्निमुत्पादयम्। यथा सर्वोपरिवातवसने। वसनदण्डे, पोताग्रवहिः, प्रलम्बे गुणवृक्षके। ततोऽहमकारो भूत्वा विद्युतां मेघानाञ्च निर्घोषं तथा समुत्पादयं येन सिन्धुः पूर्णतया संक्षुब्धोऽभवत्। एवं प्रतीयते म यत् मेघगर्जनेन विद्युतः प्रताड़नेन च, सिन्धुरेव धृतो भवेत्। तस्य दृढ़ा ऊर्मयश्च भयेन भृशं चकम्पिरे। न केवलमियदेवापितु वरुणदेवस्य त्रिशूलोऽप्यवेपत्।

प्रोस्पेरो :-मम वीरवर ! क आसीदेतादृशो यो हि नानेन भयाकुलोऽभूत् !

एरियल :-नासीत् कश्चिदपि योहि भयार्तः निराशश्च नाभूत्। केवलं नाविकाः पोतं परित्यज्य समुद्रस्य संक्षुब्धे पानीये प्रविष्टाः यतोहि पोतोऽग्निसादभवत्। राज्ञः पुत्रश्च फर्डीनन्दः शर इवोर्ध्वकेशो भयाकुलः सर्वप्रथमं समुद्रे चुकूर्द। स हि चीत्कुर्वन्नाह "पिशाचमयमिदं स्थानम्। नरक-तैर्विहीनः।

प्रोस्पेरो :-त्वया स्वानुरूपमनुष्ठितं सर्वं मम वीरवर, परं किमिदं सर्वं समुद्रस्य तीर एव नाभूत् ?

एरियल :-सिन्धोरुपतटं श्रीमन्।

प्रोस्पेरो :-एरियल, अपि ते सर्वे कुशलिनः ?

एरियल :-न तेषामत्पीयसी हानिरपि सम्भवा। तेषां वसनेषु न क्वापि किमपि चिन्हमात्रमपि द्रष्टुं शक्यतेऽपितु पूर्वस्मात् स्वच्छान्येव

तानि सन्ति । भवदादेशानुसारमहस्तान् समुद्रस्य तटे यत्र तत्र लघुसमूहेषु प्राक्षिपम् । राजपुत्र एव केवलमेकल: सिन्धुतीरं प्रापित: । तमहं तीरमार्गस्यैकभागे नववायुग्रहणार्थमत्यजम् ।

स च तत्र हस्तौ संहतौ कृत्वा शोकाकुल: समुपाविशत् ।

प्रोस्पेरो : अथ राज्ञो नाविकानामन्येषां च यात्रिणां का दशा ?

एरियल :-राज्ञ पोतो नौरक्षणस्थाने सुस्थितोऽस्ति । स हि तत्र गहन-खाते संस्थापितोऽस्ति यस्मात् सुधामानेतुमाज्ञप्तोऽहं निशार्धे तत्रानयम् । नाविका: पोतोदरे संस्थापिता:, ते तत्र प्रसुप्ता: कमपि दर्शनीयदृश्यमुद्भावयन्ति । केचनान्ये ये हि यत्र तत्र विकीर्णा आसन् पुनर्मिलिता: । तेषां विश्वासोऽस्ति यदसौ राज्ञ: पोत: सर्वथा सपरिवारो नष्टस्ते च नेपलेसं जिगमिषन्ति सिन्धुतीरे स्थिता: ।

प्रोस्पेरो :-नूनमेव त्वं प्रतिपदं स्वकर्तव्यमपालय: तथाप्यन्यदवशिष्यते । कियान् कालोऽस्ति ?

एरियल :-मध्यान्ह: ।

प्रोस्पेरो :-होराद्वयी । अधुना षड्वादनं यावदावाभ्यां महत्वपूर्णं सर्वमपि करणीयमस्ति ।

एरियल :-अपि पुनरपि कठिनतमं कार्यं कर्तुमवशिष्यते ? यदाहं भवता सर्वमपीदं कठिनकार्यं सम्पादयितुमादिष्ट आसम् तदा किं प्रतिज्ञातमासीत् ? तत् स्मारयामि । तदिदानीमपि न पूर्णम् ?

प्रोस्पेरो :-किमाशयस्तव ? पुनरपि दुष्टतामनुगच्छसि ? किं याचसे ?

एरियल :-स्वातन्त्र्यम् ।

प्रोस्पेरो : असामयिकी याचना । अलमत्र बहुभाषितेन ।

एरियल : अहं भवन्तं सविनयं प्रार्थये स्मर्तुं यदहं भवत् कृते बहुमूल्यं कार्यमकुर्वम् । न कदापि मिथ्या भाषणमकुर्वम् । न कामपि त्रुटिमकुर्वम् । निश्छलेन प्रसन्नभावेन च सर्वदाऽसेवे । भवांश्च मदीये सेवाकाले पूर्णस्याब्दस्य न्यूनतामकरोत् ।

प्रोस्पेरो :-किमिदानीं न स्मरसि कस्मात् कष्टादहं त्वाममोचयम् ।

एरियल :-नूनमहं स्मरामि ।

प्रोस्पेरो :-नैव, क्षारसिन्धुसन्तरणं, शीतलस्थानेषु भ्रमणं, पृथिव्यन्तरे तुषाराच्छन्ने मदर्थं गमनमिदं त्वं बहु मन्यसे ?

एरियल :-नैव श्रीमन् नाहमिदं बहु मन्ये ।

प्रोस्पेरो :-असत्यमिदम् क्षुद्रजीव, किं त्वया वार्धक्येन दुष्टतया च द्विधा नमिता साइकोरैक्स नामिका मायाविनी विस्मृता ? किमिदं सत्यम् ?

एरियल :-नैव नैव श्रीमन् न तथा ।

प्रोस्पेरो :-नहि विस्मृतैव त्वया । कथय सा कस्मिन् देशे समुत्पन्ना ? वद, कथय माम् ।

एरियल :-एल्जियर्सदेशे ।

प्रोस्पेरो :-अहो, एवं खलु । प्रतिमासं मयेदं सर्वमपि त्वदीयपूर्वदशा-जातं स्मारयितव्यं भवति यतोहि त्वमचिरादेव सर्वं विस्मरसि अपि त्वं जानासि यत् सा साइकोरैक्स नामिका पिशाचिनी

पिशाचकर्मणि नितरां प्रसिद्धाऽभूत् । सर्वेऽपि अस्याः सकाशात् भीता आसन् । एतदर्थमेव सा स्वदेशतः प्रवासिताऽभूत् । न च सा तद्देशवासिभिर्मारिता । किमिदं न सत्यम् ?

एरियल :-सत्यमिदं श्रीमन् !

प्रोस्पेरो :-इयं हि कुरूपा, नीलाक्षी, सपुत्रा नाविकैः समानीयास्मिन् द्वीपखण्डे प्रक्षिप्ता त्वञ्च यो हीदानीं मम सेवकोऽसि तदानीं तस्याः भृत्यः आसीः । तदा त्वं सर्वमपि घृणास्पद पापकर्म तस्या आदेशानुसारमकरोः सर्वात्मना श्रद्धया च । एकदा त्व तस्या आदेशपालनं नाकरोस्तत् प्रतिफलस्वरूपं सा त्वां कारायां न्यक्षिपत् । स्वाधिकशक्तिशालिपिशाचसाहाय्येन सा त्वां वृक्षस्यैकस्य मध्ये संस्थापितवती । तत्र त्वं द्वादशाब्द-कालं घोरपीड़ायां व्यतीयाय । एतन्मध्य एव सा मृता तदा त्वं वृक्षाभ्यन्तर एव आसीः । तदा त्वदीयं करुणक्रन्दनं घरट्ट-चक्रमिवासीत् । तस्याः पुत्रं विहाय द्वीपेऽस्मिन् न कश्चिदपि जनः आसीत् । स एव क्रूरकुक्कुर - पुत्रः शरीरे कुरूप-चिन्हवान् कुरूपाया मायाविन्याः सन्ततिः ।

एरियल :-एवम् स कलिवानः, तस्याः सूनुः ।

प्रोस्पेरो :-असावेव मूर्खः । स एव कलिवानः यमहं स्वभृत्यपदे न्ययु-ञ्जम् । त्वं सम्यक् जानासि यत् कियत् कष्टं त्वया तत्रानुभूयते स्म । त्वदीयं क्रन्दनं तदा वृकगर्जनादप्यधिकमा-सीत् ऋक्षस्य च भल्लूकस्यापि चित्तं तेन करुणायते स्म । इयं किल पीड़ा केवलमाज्ञोल्लंघनदोषादेव प्रदत्ता याञ्चापा-कर्तुं सा मायाविनी स्वयमप्यशक्ताऽसीत् । यदाहमत्रागच्छम्, मदीयैव सा मायाशक्तिरासीत् या देवदारुवृक्षं दारयामास ।

एरियल :-तदर्थमहं कृतज्ञोऽस्मि स्वामिन् ।

प्रोस्पेरो :-चेत्त्वं पुनरप्यनुचितमालपिष्यसि तु पुनरहं सिन्दूरवृक्षमुद्-घाटयामि । त्वाञ्चाभ्यन्तरे संस्थापयामि तदुद्घाटनञ्च न तावत् करिष्यते यावत्त्वं पुनर्द्वादशवर्षाणि घोरपीड़ायां न हि यापयिष्यसि ।

एरियल :-क्षमस्व स्वामिन् । अहं सनिश्चयमेव भवदाज्ञां पालयिष्ये आज्ञापालकपिशाचवत्, न च पुनर्विवदिष्ये ।

प्रोस्पेरो : तथा कुरु । द्वाभ्यामेव दिनाभ्यामहं त्वां मोक्षयिष्ये ।

एरियल :-इदं किल मम महतः स्वामिनोऽनुरूपमेव । किमनुष्टेयं मयेदानीम् ? आज्ञापय । किमस्ति कर्तव्यम् ?

प्रोस्पेरो :-समुद्रदेवता भव । केवलं मदन्तरा न कश्चिदपि त्वां द्रष्टुमर्हेत । सर्वेषामदृश्यो भव । याहि पुनरस्मिन् नेपथ्ये च ममाग्रतो भव । याहि त्वरया ।

(एरियलः गच्छति)

मिराण्डा :-भवत् कथावैचित्र्येण सालसाऽस्मि सञ्जाता ।

प्रोस्पेरो :-प्रक्षिपालस्यम् । समायाहि मया सह । आवां कलिवानं द्रक्ष्यावो यो हि कदाचिदप्यस्माभिः सह साधुतया न संलपति ।

मिराण्डा :-राक्षसोऽसौ । नाहं तं द्रष्टुमीहे ।

प्रोस्पेरो :-सत्यपि एवं नास्माकं कार्यं तेन विना प्रचलति । असावेवाग्निं प्रज्वालयति, काष्ठान्याहरति सर्वमपि चान्यदादेशमस्मदर्थं पालयति ।

क्वासि भूभारभूत - सेवक कलिवान ? प्रत्युत्तरं देहि ।

कालिबान :-आभ्यन्तरात् प्रभूतानि काष्ठ·याहृतानि सन्ति ।

प्रोस्पेरो :-आयाहि किमप्यन्यत् कार्यं त्वया कर्तव्यमस्ति । त्वरया आयाहि, कच्छपगतेरायाहि किमर्थं विलम्बसे ?

(जलदेवतारूपेण एरियलस्य प्रवेशः)

सौन्दर्यराशेः, ममाश्च - र्यकर एरियल, श्रुणु किमपि कर्णं कथयामि ।

एरियल :-प्रभो ! करिष्यामि सर्वमिदम् ।

(प्रस्थानम्)

प्रोस्पेरो :-आयाहि दुष्टसेवक, पिशाचस्य मायाविन्याश्च कुपुत्र, समायाहि ।

(कलिबानः प्रविशति)

कलिबान :-तुषारस्य कुकणाः, यान् मम मातास्वास्थ्यकरेभ्योऽन्येभ्यो द्रोणकाकपक्षेणानीतवती युवयोः विनाशं कुर्युः। दक्षिणपश्चिमवायवो युष्यासु प्रवहेयुस्त्वक्स्फोटं च कुर्युः।

प्रोस्पेरो :-चेदेव तु एतदर्थमेव त्वमद्य निशायां तादृशीं पीडां प्राप्स्यसि यया तव श्वासावरोधो भवेत्। रात्रिञ्चराः शल्लक्यश्च त्वां निखिलायामपि निशायां पीडयेयुः। त्वं सर्वथा क्षतविक्षतो भविष्यसि येन तव शरीरं मधुमक्षिका छत्रवदनन्तच्छिद्रान्वितं भविष्यति। प्रत्येकदंशनं च मधुमक्षिकादंशनादप्यधिकपीडाकरं भविष्यति।

कलिबान :-इदानीं मया भोक्तव्यम्। सर्वोऽप्ययं द्वीपो मदीयः। मम माता द्वीपमेनं मदर्थमर्जितवती। त्वमिदं मत्तो गृहीतवानसि। यदा त्वमत्रागच्छः त्वं मां प्रेमपूर्वकं रक्षितवान् मदर्थमुष्णपत्रिकां पानार्थमप्रयच्छः। इत्थञ्च मत्तस्त्वया वहुलाभः प्राप्तः। च द्रसूर्ययोः नामनि त्वयाऽहं शिक्षितः यौ रात्रिन्दिवं च प्रज्वलतः। परिणामस्वरूपमहं त्वयि स्नेहवानभवम्। द्वीपस्य सर्वाण्याश्चर्याणि मया तुभ्यं दर्शितानि। स्वादुजलस्रोतांसि क्षार स्रोतांसि मरुस्थलानि, उर्वरभूमयश्च। दुर्भाग्यपूर्णमेव तद्दिनं मदर्थं यदाहं सर्वमिदं त्वामदर्शयम्। मम मातुर्मायाजनिताः स्थूलमण्डूकाः, भ्रमराः, जतुकाश्च तवोपरि निपतन्तु। यतोहि त्वयाहं द्वीपस्यास्य स्वतन्त्रो राजापि भृत्यतां नीतः। इदानीं त्वं मां शूकर इवास्यां गुहायां संस्थापयसि। नेदानीमहमस्यान्यभागेषु गन्तुं स्वतन्त्रोऽस्मि।

प्रोस्पेरो :-नितान्तमिथ्याभाषिन् भृत्य, नैव कृपापूर्णोऽपितु कठोरव्यवहार एव त्वां साधयितुं समर्थो भवति अहं किल त्वया दुष्टजीवेनापि सह स्नेहसहानुभूतिपूर्वकं व्यवहारमकुर्वम्। अहं तव निवासप्रबन्धमपि स्वगुहायामेवाकुर्वम्। तत्रापि त्वं मम सुतापमानं कर्तुमुद्यतः।

कलिबानः-अहो, अहो, नूनमेवाहं तत्कर्तुमैच्छम् ।

त्वं मां ततो बाधितवान् नोचेदहं सर्वमपि द्वीपमिमं स्वसन्तत्याः पूर्णमकरिष्यम् ।

प्रोस्पेरो :-घृणास्पददास ! प्रवञ्चनापिण्ड ! न हि कश्चिदपि प्रभावस्त्वयि सज्जनतायाः पतति । कृपाकृष्टोऽहं तव मूकत्वविनाशायानेकान् प्रयासानकुर्वम् । मया सर्वमपि इदमित्थमिति शिक्षितम् । यस्त्वं पूर्वं पशुरिव किमपि स्पष्टतया कथयितुमशक्तः आसीः स मनुष्यवत् स्वानुभूतिप्रकाशनयोग्यतां नीतः । यद्यपीत्थं मया त्वं शिक्षितस्तथापि नहि कोऽपि सुप्रभावस्त्वयि दृश्यते । अतएव मया त्वमस्यां गुहायां कठिनकारावासयोग्यः सन्नपि संस्थापितोऽसि ।

कलिबान :-त्वं मां भाषणमशिक्षयस्तस्यायमेव मत्कृते महीयान् लाभो यदहमिदानीं तुभ्यं यथेच्छमपशब्दान् वक्तुं शक्तोऽस्मि भयङ्करा महामारी त्वां नाशयतु । यतोहि त्वं मामशिक्षयः ।

प्रोस्पेरो :-मायाविनी-सुत, दूरमपसर । त्वरया काष्ठान्याहर । शीघ्रातिशीघ्रागमनेन तवैव लाभोऽस्ति येनान्यदावश्यककर्मणि तव नियोगो विधीयेत । दुष्टराड्, किमिदं न चिकीर्षति ? चेदेवमस्ति अथ चेत्त्वमन्यमनस्कतया कार्यमिदं करिष्यसि तु तादृशीं वेदनां प्राप्स्यसि यया तवाङ्गानि त्रुटितानि भवेयुस्तव पीडाजनितचीत्कारैश्च वन्याः अपि भीतभीताः भवेयुः ।

कलिबान : प्रार्थये, मा कुरु एवम् । क्षमां याचे । (स्वं प्रति) मयाज्ञापालनं विधेयमेव । अयं प्रभूतां मायाशक्ति धारयति । मम जनन्या गुरुं दैत्यमपि स स्वदासीकर्तुमलम् ।

प्रोस्पेरो :-अचिरं दूरमपसर दास !

(कलिबानो गच्छति)

(एरियलः पुनः प्रविशति अदृश्यः क्रीडन् गायन् च फर्दीनन्दः-एरियलस्य गीतमनुसरति)

## गीतम्

समायान्तु स्वर्णिमभूमौ या स्वर्णवालुकाभिर्व्याप्ता ।
विनमनचुम्बनकरस्पर्शनै र्भूमिरियं स्यादभिव्याप्ता ।
सिन्धु-तरंगाः भयङ्कराः मौनाः शान्ताः यावत् सन्ति,
नृत्यन्तु सुजीवाः समागत्य भवदीयां धुरं वहिष्यन्ति ।
श्रयताम् श्रूयताम् अन्तिमचरणम् ।

(इतस्ततो भौ भौ)

एरियल :-प्रहरिकुक्कुराः वुक्कन्ते (अन्तिमचरणम्) (इतस्ततः भौ भौ) श्रूयताम् श्रूयताम् अहमिदं गर्वान्वितस्य कुक्कुटस्य शब्दं श्रृणोमि ।

(गर्वान्वितकुक्कुटध्वनिरायाति)

फर्दीनन्द :-कुत इदं सङ्गीतकम् ? वायौ पृथिव्याम्बा ? इदानीमिदं न श्रूयते । मन्ये केषाञ्चिद्द्वीपदेवानां प्रतीक्षा । अहं सिन्धुतटवर्ती सन् स्वपितुः पोतनाशशोकाकुलः आसम् । तत्क्षणमेवेदं सङ्गीतकं सिन्धुवातेनैव सह श्रुतिपथमगात् । सिन्धुक्षोभशान्त्या सहैव च मामकीनं शोकमपि स्वमाधुर्येण लघ्वकरोत् ।

तत एव मयास्यानुसरणं क्रियते समाकृष्टो वा भवाम्यनेना-
हमपि । परं नेदं पुनः श्रूयते । अये पुनरिदं प्रारब्धम् ।

(एरियलो गायति)

प्रसुप्तोऽस्ति तले सिन्धोः पञ्चयामेषु ते पिता,
अस्थिखण्डाश्च तस्यैव प्रवाले परिवर्तिताः ।
तल्लोचने हि सौम्ये ते सिन्धौ मौक्तिकतां गते,
नास्ति यत्तस्य देहस्य नष्टं स्याद्य जलोदरे,
सर्वं हि तस्य देहस्य समुद्रे परिवर्तितम्
वहुमूल्यपदार्थेषु नात्र कार्या विचारणा ।
प्रतिहोरासु वाद्यन्ते घन्टास्तन्मृत्युसूचकाः ।
दिव्याभिर्देवताभिर्वे या नूनं शक्तिसंयुता ।
विरामः टन् टन् टन् ... ... ... ... ।

फर्दीनन्द :-संगीतिकेयमपि मदीयं जलमग्नं पितरं स्मरति । नेदं भावगीतम् । न चालौकिकं यदिदानीं ममोपरितः संश्रूयते ।

प्रोस्पेरो :-निद्रां जहीहि, समुद्घाटय स्वलोचने पश्य च किमिदमूर्ध्वम् ।

मिराण्डा :-अहो नु खलु किमिदम् ? अपि देवदूतोऽयम् ? प्रभो कथमेषः परितोऽवलोकयति ? विश्वसिहि मयि, सत्यं वदामि यदतिसुन्दरोऽयं न कश्चिदपि देवदूतादपरः ।

प्रोस्पेरो :-सुते, न तथा एषः स्वपिति, भक्षति सर्वाणीन्द्रियाणि चास्यास्मदिव सन्ति ।

अयमपि पोतदुर्घटनायामासीद्यं सुन्दरयुवानं त्वं पश्यसि । परमिदानीं दुःखसन्तप्तो ऽय तत एव किञ्चित्पीतः कृश इव लक्ष्यते । त्वमेनं सुन्दरोऽयमिति कथयितुं शक्नोसि । अयं किल स्वसुहृद्भ्यो वियुक्तस्तान् समन्विष्यति ।

फर्दीनन्द :-निश्चयेनेदं संगीतकमेनामेव देवीं प्रतीक्षते ।

सविनयं प्रार्थये, कृपया कथय किं नूनमेव त्वमस्य द्वीपस्य देवतासि ? कृपया देहि मे ह्युत्तरम्। मम पथप्रदर्शनं कुरु मया केन प्रकारेणात्र व्यवहर्तव्यमस्तीति । अन्तिमा इयं मेऽभ्यर्थना जिज्ञासा च यद् भवती परिणीता ऽपरिणीता वेति ?

मिराण्डा : नाहं काप्याश्चर्यकरी श्रीमन्। अस्मि चापरिणीता ।

फर्दीनन्द :-अहो मदीया भाषा। प्रभो ? अस्या भाषाया भाषिष्वहं श्रेष्ठतमोऽस्मि ।

प्रोस्पेरो : केनेदम् ? चेन्नेपलेसाधिपस्त्वामेवं भाषमाणं शृणुयात्तदा का गतिस्ते भवेत् ?

फर्दीनन्द :-सोऽहमेकलः पितृविहीनः । भवांश्च नेपलेसराज्ञो विषये कथयति । स तु सनिश्चयं मदीयां वाणीं शृणोति । तदर्थमेवाहं रोदिमि पिता मे नेपलेसाधिपः पोतदुर्घटनायां विनष्टः । ममाश्रुपूर्णे लोचनेऽधुनापि क्लिन्नप्राये । अत एकलोऽहमिदानीं नेपलेसाधिपतिरस्मि ।

मिराण्डा :-अहो, कियत् कष्टकारकम् ?

फर्दीनन्द :-विश्वसन्तु मयि । स किल सर्वेण : वीयमर्ा त्रवर्गेण सहैव पञ्चत्वमुपागतः । सपुत्रो मिलनाधिपोऽपि मृतकेष्विदानीम् ।

प्रोस्पेरो :-(एकतः) मिलनाधिपस्तस्य च सुन्दरी राजकन्या त्वां प्रशासितुमिदानीमेव समर्थावास्तां परं नायमुदितावसरो हीदानीम् । (कथं प्रथमाक्षिपात एवेमौ परस्परं प्रेमपाशबद्धौ-ग्रभवताम् )

प्रिय एरियल, इदमेव तु तत्सर्वमस्ति येन तव निरीक्षणं भविष्यति ।

फर्दीनन्दं प्रति) श्रीमन् शब्दमेकमहं कथयामि ग्रहमस्माद् बिभेमि यत्त्वया मिलनाधिपविषये कथितम् । मन्ये इदमसत्यं स्यात् ।

मिराण्डा :-न जाने कथं मे पिता तं प्रति एवं कठोरः । प्रथमोऽयमवसरः यदा मया कश्चित्तृतीयपुरुषोऽवालोकि । एनमहं मनसा कामये । मम पिताऽपि मामिवैमं प्रति कृपापूर्णो भवेत् ।

फर्दीनन्द :-ग्रहो ! चेत्त्वमिदानीं यावत् कन्यासि, न च त्वया चेदपरः कोऽपि काम्यते तदा त्वामहं सनिश्चयमेव नेपलेससाम्राज्ञीं करिष्यामि ।

प्रोस्पेरो :-ग्रलमित्थं भाषणेन । शृणु वाक्यान्तरम् ।

(एकत :-परस्परं प्रेमवशगौ । ततोऽपि सुलभं कार्यं स्वल्पमूल्यम् । ग्रतः कथञ्चिद् बाधनीयाविमौ ।)

(फर्दीनन्दं प्रति) :-वाक्यान्तरं शृणु — ग्रहं त्वामाज्ञापयामि पालय च ममाज्ञाम् यत्त्वमात्मनो विषये प्रख्यापयसि स तु त्वमस्येव नहि । त्वन्त्वत्र रहस्येन प्रवञ्चनया च प्रविष्टोऽसि मम सुतां त्वमित्थमपहर्तु मिच्छसि ।

फर्दीनन्द :-मैवम् । ग्रहमपि मानवोऽस्मि ।

मिराण्डा :-यथा किल मन्दिरे न किमपि पापं तथैव सुन्दरेऽस्मिन् युवके नासत्यम् । चेत् कदाचित् देवमन्दिरे भूतावासो भवेदपि तु देवास्तान् निष्कासयिष्यन्ति एव ।

प्रोस्पेरो :-आयाहि मया साकम् । तद्विषये शब्दो ऽप्येको न वक्तव्यः । असौ हि प्रवञ्चकोऽस्ति । आयाहि प्रवञ्चक, अहं तव कण्ठ-पादयोर्निगड़नं करोमि । त्वं मत्स्यत्वक्‌चूर्णस्य वृक्षाणां शुष्कमूलानां भक्षणेन सह पानार्थं क्षारं सिन्धु-जलमवाप्स्यसि ।

फर्दीनन्द :-तादृशं व्यवहारमहं तावत् सर्वथा प्रतिरोत्स्यामि यावन्मदीयः शत्रुर्मां न जयेत् ।

(स्वीयं कृपाणमाकर्षति परं मायाबलेन जड़ीभूतो भवति)

मिराण्डा :-प्रिय तात ! मैवं व्यवहर वराकेनानेन सह । सज्जनोऽयं निरपराधश्च ।

प्रोस्पेरो :-किमुच्यते । अपि मदीया एव चरणधूलिर्मम शिरसि समारोढुं समीहते । ऊर्ध्वमुत्थापय स्वकृपाणम् । केवलं प्रदर्शनं करोषि । कृपाणचालनमपि न जानासि । त्वं स्वयमेव स्वीयामसमर्थतां जानासि । अहं त्वां केवलमनया स्वयष्टिकयैव निश्शस्त्रीं कर्तुं समर्थोऽस्मि ।

मिराण्डा :-क्षमस्व पितः ? क्षमस्वैनम् ।

प्रोस्पेरो :-दूरमपसर । मम वसनस्पर्शनमपि मा कुरु ।

मिराण्डा :-श्रीमन् क्षमस्वैनम् । अहमस्य पूर्णोत्तरदायित्वं गृह्णामि ।

प्रोस्पेरो :-मौनम् । एकोऽप्यधिकः शब्दः मम कोपवर्धिष्णुः स्यात् । आश्चर्यं महदाश्चर्यं त्वं किलास्य प्रवञ्चकस्य प्राड्विवाकत्वं कर्तुमुद्यतासि । मौनम् । त्वन्तु कलिबानमपि सुन्दरातिसुन्दरं मन्ये बालिशबाले ! ये किल लोकेऽत्र सुन्दराः सन्ति तेषां समक्षेऽयं केवलं कलिबान एव ते चास्याग्रे देवदूता इव ।

मिराण्डा :-असाधारणाऽपरिवर्तनीया च मामकीना प्रीतिः । नाहं कमपीतरं सुन्दरतमं कामये ।

प्रोस्पेरो :-(फर्दीनन्दं प्रति) आयाहि, पालयादेशम् । त्वद्धमिन्यः शिशुरिव निर्बलाः । नास्ति कापि शक्तिस्तासु ।

फर्दीनन्द :-तथ्यमिदम् । स्वप्नवदिव जड़ायिता मदीया शक्तिः । चेदेकवारमपि दिवसेऽहं दिव्यामिमां बालामवलोकनार्हो

भवेयं तु मम पितुर्विनाशः, मदीयमिदमनुभूयमानमसामर्थ्यं, मम मित्रनाशः अस्य दुर्धर्षस्य च कठोरभाषणं सर्वमपीदं सुखकरमेव। स्वतन्त्रो लोकः सर्वं विश्वं भ्रमेत परं मदर्थमियं गुहेव बन्धनमेव वा विस्तृतस्थानमस्ति चेदहं स्वप्रेयसीं द्रष्टुं स्वतन्त्रो भवेयम्।

प्रोस्पेरो :-(एकतः) मम योजनानुकूलमिदम्। (एरियलं प्रति) आयाहि, शोभनमाचरितं त्वया एरियल, (फर्दीनन्दं प्रति) मामनुसर (एरियलं प्रति) शृणु तद्यदन्यत्त्वया मदर्थं करणीयमस्ति।

मिराण्डा :-धैर्यमावह। श्रीमन् मम पिताऽयं यथा वचसा कठोरस्तथा न प्रकृत्या नायमस्य व्यवहारः प्राकृतिकः।

प्रोस्पेरो :-त्वं किलाचिरेणैव वायुरिव स्वतन्त्रो भविष्यसि। परं पूर्वमितो ममादेशं पूर्णतया परिपालय।

एरियल :-अक्षरशः।

प्रोस्पेरो :-समायाहि, मामनुसर नास्य पक्षे किमपि भण।

इति प्रथमोऽङ्कः।

# द्वितीयोऽङ्कः

## १ अपटी

### द्वीपस्य द्वितीयभागः

(एलोन्सो :-सेबास्टेन एन्टोनियो-गोन्जेलो-एड्रिन फ्रांन्सिस्को तथापरे प्रविशन्ति)

गोन्जेलो :-प्रार्थये, कृपया प्रीतो भव। अस्माकं भवताञ्च प्रसन्नताकारणं समानमेव। यतोहि यदप्यस्माभिर्नाशितमस्माकं जीवनं ततोऽप्यधिकमस्ति। एवमेव समानञ्चास्माकं दुःखकारणम्। नाविकपत्न्यः, व्यापारपोतस्वामिनो व्यापारिणो वाऽस्मदिव प्रतिदिनं दुःखमाप्नुवन्ति। परमस्माकं जीवनरक्षणं नूनमेवविलक्षणम्। लक्षेष्वेक एव कश्चित् अस्माकमिव स्वदुःखगाथां कथयितुं रक्षितो भवति अतः श्रीमन्, दुःखावसरेऽप्यस्मिन् धैर्यधारणमेव युक्तम्।

विदुषां परिचयः-

# पण्डितवर्यो रामकृष्णशास्त्री 'अव्ययः'

डा० रूपनारायणपाण्डेय रा. इ. का. सितारगञ्जः,
नैनीतालम्, उ. प्र.

वर्तमानसमये संस्कृतजगति अनेके महनीया विद्वांसो विलसन्ति तेषां संक्षिप्तोऽपि परिचयोऽस्माभिर्न ज्ञायते। परिचयाभावात् तेषां वैदुष्यं कृतित्वं गुणान् च वयं सम्यक् जानीमः-इति मनसि कृत्वा मया एका लेखमाला प्रारभ्यते, यस्यां शनैः २ तेषां परिचयं स्वमत्या संक्षिप्तं विस्तृतं वा लेखितुं कामये। अत्र प्रथमं मया पण्डितवर्यस्य रामकृष्ण शास्त्रिमहोदयस्य परिचयः प्रस्तूयते। विद्वांसोऽत्र मयि प्रसीदन्तु।

'सुप्रभातम्' इति संस्कृतमासिकपत्रस्य सम्पादकचरोविविधग्रन्थानां प्रणेता मान्यः शास्त्रिवर्यो जम्मूनगरे १९८० तमे विक्रमाब्दे कार्तिके मासे कृष्णे पक्षे चतुर्दश्यां बुधवासरे पण्डितवर्य परशुरामवेदाचार्यस्य सुपुत्रत्वेन समजायत।

जन्मलग्नचक्रम्

मेषलग्ने तुलाराशौ सञ्जातस्यास्य बालकस्य शिक्षा प्रथमं जम्मूनगरे, ततः च काश्यां समद्यत स्वर्णपदकेन साकं शास्त्रिपरीक्षामुत्तीर्य श्रीमता श्रीरणवीरसंस्कृतानुसन्धानपुस्तकालयस्य जम्मूस्थितस्य ग्रन्थपालपदं विभूषितम्।

तत्रभवतां जन्मपत्रे लग्नेशो भौमः षष्ठे भावे विद्यते, षष्ठाधिपतिर्बुधः सप्तमगतो लग्नं पश्यति रोगेशबुधस्य प्रभावाच्छरीरस्य रुग्णत्वात्, श्रीमता परिणयविचारोऽपि परित्यक्तः, स्वकीयं जीवितं समग्रं सुरभारतीसमाराधनायां समर्पितम्।

हिन्दीसंस्कृतडोगरीभाषासु शास्त्रिवर्येण बहवो ग्रन्थाः प्रणीताः। तेषु केचनाधो लिख्यन्ते—

१. कृष्णलीला— बालानां कृते हिन्दीभाषया लिखितं कृष्णचरितम्।

२. कादम्बरीसंक्षिप्तकथा — महाकविबाणभट्टस्य कृतिः 'कादम्बरी' विश्वविख्यात कथास्ति। तस्याः संक्षिप्तकथा देववाण्या लिखिता।

३. श्री गुरुसिद्धान्तपारिजात - सुरवाण्यां सिक्खसिद्धान्तो प्रायशो नैव लिखितम्। मान्यशास्त्रिमहाभागेन श्री गुरुसिद्धान्त पारिजातस्य हिन्दुत्वप्रबोधिनीति नाम टीका प्रणीता। ग्रन्थेऽस्मिन् दशसिक्खगुरूणां मनोरम इतिहासः प्रतिपादितोऽस्ति।

४. नवग्रहदर्शनम् – ग्रन्थेऽस्मिन् ज्योतिषस्य संक्षिप्तः परिचयो वर्तते।

५. चण्डदेवचरितम् – संस्कृतभाषया समुद्भासिते खण्डकाव्येऽस्मिन् महावीरहमीरप्रपौत्रस्य चण्डदेवस्य चरित चित्रितम्। लक्षसिंहस्य पुत्रो चण्डो युवा सञ्जातः। रणमल्लदेवो नृपनीतियुत सन् तस्मै स्वकीयां युवतीं कन्यां दातुं चकमे। चण्डे प्रयाते लक्षसिंहेन वाग्दानपत्रं गृहीतम्। रणमल्लदेवस्य कुनीतिं विज्ञाय समागतेन चण्डदेवेन कथितम्-तत्पाणिग्रहणं पितैव करोतु। पित्रोक्तम् - त्वं मम राज्याधिकारी न भविष्यसि अस्यां मम यः पुत्र उत्पत्स्यते स एव राज्यपदं लभेत। तां कन्यां परिणीय राज्ञा लक्षसिंहेन तस्यां मुकुल इति नाम पुत्र उत्पादितः। यदा मुकुलः पञ्चवर्षीय एवासीत्, तदा तज्जनको गयायां समरे युध्यमानः पञ्चत्वमवाप। पित्रा यथोक्तं तथैव मुकुलाय राज्यं प्रदाय सः चण्डदेवः तस्य मन्त्री बभूव। रणमल्लदेवाय चण्डदेवस्य सुनीतिर्नारोचत तेन मुकुलस्य माता चण्डविरोधिनी कृता। विमातुर्भ्रातुश्च विरोधमवगम्य चण्डदेवो मण्दार राज्यं गतवान्। मेवाडराज्ये सुतेन सार्धं मुकुलस्य जननी न्यवसत्। स्वल्पे काले गते तु दुहितृराज्ये रणमल्लदेवो सहसा गत्वा स्वयमेव सत्ताधिकारं लेभे। प्रवृद्धा मुकुलस्य धात्री वृद्धा सर्वं गृहदूषणं चण्डाय निवेदितवती। चण्डेन विमातुर्मतं विज्ञाय मेवाडराज्यं च समागम्य रणमल्लदेवं हत्वा पुनः तत्र मुकुलं नृपं कृत्वा यथापूर्वं राज्यं रक्षितम्। पितुर्निदेशं पालयन् चण्डः पृथिव्यां विख्यातोऽभूत्। कालप्रभावात् पुनः मुकुलं कूटनीत्या वशीकृत्य तस्य मातुलः चण्डस्य पुत्रौ हत्वा मन्दारराज्यं गृहीतवान्। मुकुलस्य विपरीतभावं विज्ञाय चण्ड सर्वं विहाय यतिर्बभूव। इत्थं भीष्मसदृशस्य पितृभक्तस्य चण्डस्य चरितं खण्डकाव्येऽस्मिन् वर्णितमस्ति।

६. कल्किचरित्रम् - कल्किपुराणमाश्रित्य हिन्दीभाषया लिखितं प्रशस्तं काव्यम्।

७. तारादेवीचरितम् — संस्कृतभाषया लिखितमप्रकाशितं खण्डकाव्यम्।

८ संगीतगीता — हिन्दीभाषया लिखितमप्रकाशितं गीतायाः तात्पर्यम् ।

९. देवीगीता · हिन्दीभाषयानूदिता दुर्गासप्तशती सुरम्याप्रकाशिता च ।

१०. श्रीरणवीरशकुनावली — हिन्दीभाषाया प्रकाशितरचना ।

११. श्री शालग्रामः ।

१२. अनुसन्धानोपाख्यानम् ।

१३. जपयज्ञ ।

१४. दुर्गरोद्धारः (एकाङ्किरूपकम्)

१५. विधातुरागीरणवीरः ।

१६. इन्दिराशतकम् ।

१७. शेखशतकम् ।

१८ दुर्गरोद्धारः ।

एते सर्वे प्रकाशिताः ग्रन्थाः सन्ति लोककल्याण राष्ट्रभवितसंवर्धनार्थं च सरलया सशक्तया भाषया गम्भीरभावोपेता अपि माधुर्ययुताः तस्य विचाराः सर्वः चिन्तनीया सन्ति गद्ये पद्ये च सर्वत्रः तस्य भाषा पाठकानां चित्तं बलादपहरति, स्मारयति च भासस्य नैसर्गिकताम्

श्रीशास्त्रिवर्येण प्रणीता अन्येऽपि बहवो ग्रन्था अप्रकाशिताः सीदन्ति। श्रीमता वर्षचतुष्टयं यावत् 'सुप्रभातम्' इति संस्कृतमासिकस्य सम्पादन विहितम्

दुर्गरोद्धार इति रूपके शास्त्रिवर्यस्य पात्राणां मननीयानि सन्ति कानिचन वचनानि—

'अन्यभाषासमं सम्मानं कथं न लभन्ते वर्तमाना अपि संस्कृत-हिन्दीरचना रचनाकाराश्च कथं न रोचते भवते अद्यापि स्वाधीनभारतस्य सद्भावसंवधिता भारतभारती ?'

'तत्तु मया बहुशः स्वयमपि संप्रबोधितं मुख्यमन्त्रिणे, यदिह जम्मूकाश्मीरि-कमेमात्रं संस्कृतमासिकपत्रं "सुप्रभातम्" समुदेति तत्सर्वथाऽभिवन्द्य पुरस्कार्यम् परं तत्र तु केवलं कपटमुनिव्रतं कृत्रिमं मौनमेव समालम्बितं समनुभूयते ।'

'एवं वर्तते चेत्तेषां दुराग्रहः, तदा सर्वै संस्कृतसमर्थकै सम्भूय संसाधितं स्यात् पुनरिह नवीनं जनान्दोलनम् ।'

'लिजवतां संङ्घशक्तिः समारभतां क्रान्तिः । सं लभतां शान्तिः ...
स्वाधीने नवभारते मतिमतां नीत्या प्रतुष्टाः प्रजाः ।
संपुष्टाश्च भवन्तु सर्वजगतां सम्बन्धसंवर्धिताः ।
प्रान्तेषूत्कटकूटभ्रान्तिहरणे केन्द्रो वितन्द्रो भवेत् ।
वाग्देवीविभवं विभाव्य विदुषां विद्यावृतिर्वर्धताम् ॥'

संस्कृतस्य प्रगतये शास्त्रिमहाभागेनानेकानि कार्याणि सतत कृतानि किन्तु दैवदुर्योगेन तेनेष्टः तादृशः सम्मानो न लब्धः समाजेन सर्वकारेण च, पुन स संस्कृत भाषाया गौरवमतितरां वर्धयेत् । साहित्यसाधनाया यथोचितं प्रतिफलं विरला एव लभन्ते ।

ग्रन्थपालपदभारान्मुक्तः सम्प्रति सोऽर्थाभावाच्छोकपूर्णं जीवितं कथमपि निर्वाहयति, शरीरं च तस्य स्वस्थतां न वहति विद्यते वत्सरे ते नैकेन पत्रेण सूचितम्—मया स्वकीयां परिस्थितिमुद्दिश्य शताधिकानि पत्राणि संस्कृतसमाराधनरतेभ्यो विद्वद्भ्यो लिखितानि, किन्तु द्वित्रान् विहाय केनचिदपि न प्रत्युत्तर प्रदत्तम् ।

आवासपरिचयः—

आतुरालयः, १२२, श्रीरघुनाथपुरम्

जम्मु १८ ००१

मन्ये—संस्कृतसमाजः शास्त्रिवर्यस्य यथाशक्ति साहाय्यमवश्य विधास्यति । परमेश्वरः संस्कृतसमाजस्य समुन्नत्यै तस्मै चिरायुः समृद्धिं च सम्प्रयच्छतु ।



## निवेदनम्

कृपया वा० शुल्कं शीघ्रतया प्रेषयित्वा अस्माकं साहाय्यं विधेयम् ।

सम्पादकः

# सम्पादकीयम्

## एकतासूत्रं संस्कृतम् ।

संस्कृत भाषा विश्वभाषासु श्रेष्ठतमा इयं देवभाषा इति भारतीयानामस्माकं विश्वासः । अस्माकं देशः- भाषानुसारिप्रान्तेषु विभक्तः । विभाजनकाले सम्भवतः- देशनेतृभिः भाषानुसारिप्रान्तनिर्माण समये इदं चिन्तितं न स्यात् यत् — क एषां निर्माणे दोषः ? परन्तु - इदानीं सर्वेषां समक्षमिदं स्पष्टमस्ति यत् अनेन कथं देशस्य खण्डनं जायमानमस्ति । भाषासंस्कृतिश्राधारं गृहीत्वा भारतस्य खण्डद्वयं जातम् । हिन्दुस्थानम्, पाकस्थानम् च । तत्पश्चात् बांगलादेशः संजातः ।

परन्तु किमियदेवासीत् ? विशालभारते विभिन्न प्रान्ताः सन्ति सर्वेषां भाषा भूषा च पृथक् पृथक् । पञ्चाम्बु प्रान्ते अद्य किं जायमानमस्ति ? एवमेवान्य भारतस्य सर्वेषु सीमावर्तिप्रान्तेषु - विभिन्नविवादाः हिंसा घटनाश्चोदीयमानाः प्रतिदिनं शासनस्य शिरोवेदना सञ्जाताः । राजनैतिक दलेषु प्रान्तीयदलानां विजयं दृष्टिपथमवतरति केन्द्रीय दलानि चान्तरिक संघर्षेण विघटमानानि सन्ति अधुना यावत्तु संस्कृतस्य प्राधान्य यथा कथञ्चिदासीत् पुराणाः देशनेतारः, प्राड्विवाका, अध्यापकाः प्राध्यापकाश्च संस्कृतेन यथाकथञ्चित् स्वल्पाधिकमात्रायां परिचिताः आसन् । परन्तु इदानीं नवीना सन्ततिः शनैः २ संस्कृतसम्पर्केण रहिता जायमानास्ते । प्रथमं तु प्रान्तीयभाषानिर्माणे संस्कृतज्ञा एवाग्रे सराः आसन् तैः आसां भाषाणां व्याकरणानि निर्मितानि शब्दकोशाः संकलिताः । साहित्यमपि च वर्धितम् । एतत्सर्वं संस्कृतविद्भिः कृतम् । परन्तु इदानीं नवीनजनाः संस्कृतं न जानन्ति । अतः भारतस्य संस्कृति - सम्बद्धा अपि न ते सन्ति । इदमेव कारणमस्ति यत् पञ्चाम्बुप्रान्तस्य युवकाः संस्कृतसम्पर्कहीना एव स्वात्मानं किमपि भारतात् - पृथगेव मन्यन्ते । एवमेव यदि सर्वप्रान्तीयजना अनयैव दृष्ट्या विचारयिष्यन्ति तु देशस्य किं भविष्यति ।

एतत्सर्वं विचार्य एव अनेन संस्कृतसंस्थानेन संस्कृतस्य प्रसार विकास-कार्यमेव स्वहस्ते गृहीतम् दिव्यज्योतिः संस्कृतमासिकं - अस्मिन्नेव कर्मणि सतत संलग्नम् । अत्र पुनरपि सर्वेषां सकाशात् सहयोगं वाञ्छामः

---

## सूचना

अनेक असुविधाओं के कारण अभी आपको फर्वरी मास का ही अङ्क भेज रहे हैं । पूर्व सूचना के अनुसार प्रतिज्ञात मार्च का अंक अभी पूर्ण नहीं हुआ है । मार्च और अप्रैल के अंक आपको एक साथ भेज सकेंगे, असुविधा के लिए क्षमा चाहते हैं ।

– सम्पादक

R N. 6384/57 Registered No. 10

# फार्म ४

१. प्रकाशन स्थान ... भारती विहार मशोबरा

२. प्रकाशन अवधि ... मासिक

३. मुद्रक का नाम ... केशव शर्मा
(क्या भारत का नागरिक है ?) ... भारतीय
(यदि विदेशी है तो मूल देश) ... पूर्ववत्

४. प्रकाशक का नाम ... केशव शर्मा
(क्या भारत का नागरिक है ?) ... भारतीय
पता ... ... पूर्ववत्

५. सम्पादक का नाम ... केशव शर्मा
(क्या भारत का नागरिक है ?) ... भारतीय
(यदि विदेशी है तो मूल देश) ... भारतीय
पता ... ... पूर्ववत्

६. उन व्यक्तियों के नाम व पते जो समाचार—पत्र के स्वामी हों तथा जो समस्त पूंजी के एक प्रतिशत में अधिक के सांझेदार या हिस्सेदार हों ... आचार्य रत्नकुमारी शर्मा
... केशव शर्मा

मैं, केशव शर्मा एतद् द्वारा घोषित करता हूं कि मेरी अधिकतम जानकारी एवं विश्वास के अनुसार ऊपर दिए गए विवरण सत्य है।

प्रकाशक के हस्ताक्षर
केशव शर्मा

दिनांक १५-२-८७

संस्कृतस्य सचित्रमासिकम्

शिमला, मार्च, १९८७,

वर्षम् ३१ — अङ्कः — ६

होलिका - रंग रंगैः सदा रञ्जितः
सर्वजीवैश्च नित्यं तथा वन्दितः ।
पातु नः पातु वः होलिका–उत्सवे
राधिकाकृष्णयोरैकरूपो ह्यसौ ॥

# विषयानुक्रमः





## दिव्यज्योतिः

हिमाचलप्रदेश — पंजाब-हरियाणा-जम्मूकश्मीर मध्यप्रदेश — राजस्थान—महाराष्ट्र उत्तरप्रदेशशासन-स्वीकृतं केन्द्रशासनपुरस्कृतं सचित्रं संस्कृतमासिकम् ।

### पत्रस्य उद्देश्यानि तथा नियमाः

सरल–सरस–सुबोध–साधनैः सर्वस्मिन् संसारे संस्कृतस्य प्रसारः, साहित्यान्तर्गतानां सकलकला समन्वेषणं, ससारस्य हितसम्पादनम्, एवं लौकिक—अलौकिकस्वातन्त्र्यस्य प्राप्तिः ।

"दिव्यज्योतिः" प्रतिमास पञ्चदशतारिकायाम् (आङ्ग्लमानेन) प्रकाशितं भवति ।

पत्रस्य वार्षिक मूल्य २० रु० अर्धवार्षिकं १५ रु० एकस्याङ्कस्य च रु० १-७५ भवति ।

वर्षारम्भ आश्विन—मासतः भवति । ग्राहकः कस्मादपि मासाद् भवितु शक्नोति

ग्राहकः, "सम्पादक, दिव्यज्योतिः, भारती विहार, मशोबरा, शिमला—१७१००७ हि.प्र." इति संकेते धनादेशेन वा शु. प्रेषणीयम् ।

निदर्शन–अङ्कस्य (नमूना) प्राप्तये २/- रु० मूल्य प्रेषणीयम् ।

"दिव्यज्योतिः" प्रतिमासं सम्यक्-निरीक्ष्य प्रेष्यते । यदि कश्चित् अपि ग्राहकः पञ्चविंशति-दिन यावत् पत्रं न प्राप्नुयात् तर्हि स पत्रालयात् तत कारणं जानीयात् । उत्तरपत्रम् (जवाबी कार्ड) प्रेषणीयम् यदि कार्यालयात् किमपि ज्ञातव्यं भवेत

कस्या अपि रचनाया प्रकाशनाप्रकाशनयोः तथा संक्षेपसम्वर्धनादि–अधिकारः सम्पादकाधीनः । प्रकाशनार्थं प्रेषिताः रचनाः कर्गलस्य एकभागे सुस्पष्टाक्षरैर्विलिख्य प्रेष्याः । ———

## परिचय


संस्थापकाः तथा आद्यसम्पादकाः आचार्यश्रीदिवाकरदत्त शर्माणः । दूरभाषः 3859 / 8-200

प्रधानसम्पादकः— प्रा० केशव शर्मा एम. ए., एम. फिल. साहित्यरत्नम्,

दिव्यज्योतिः कार्यालय भारती विहारः, मशोबरा, शिमला-७ (हि.प्र.)

मुद्रकः प्रकाशकः—

भारतीमुद्रणालय भारती विहार, मशोबरा-१७१००७ शिमला (हि.प्र.)

स्वामी :—श्रीमती आचार्य रत्नकुमारी शर्मा

मार्च, १९८७ चैत २०४३ – वर्षम्-३१ अङ्कः ६

वार्षिक मूल्यम् २० रु०

# झञ्झा

(शैक्सपीयरप्रणीतस्य टैम्पेस्ट नाटकस्य संस्कृतरूपान्तरम्)

एलोन्सो :-प्रार्थयेऽहम् । मौनम् ।

सेबास्टेन :-धैर्यवचांसि त्वेनं शीतलयूषमिवासह्यानि ।

एन्टोनियो :-परमयं पुरोधा यो ह्येनं धैर्यं दातुं समायातोऽस्ति नैनमेकलं त्यक्ष्यति ।

सेबास्टेन :-पश्य, असौ स्वघटिकां वायुयुतां करोति यथा वयं स्वघटिकां वायुयुतां कुर्मः । क्रमशो वादनं भविष्यति ।

गोञ्जेलो : श्रीमन् ?

सेबास्टेन :-एकः, गणय ।

गोञ्जेलो :-चेद्दुःखिताय दुःखा येवायान्ति तु तान्यप्यानन्देन स्वीकार्याणि ततश्चानन्दमयानि - भवन्ति ।

सेबास्टेन :-एको दोलरः ।

गोञ्जेलो :-सनिश्चयमेव दोलरस्तमभिभवति । इत्थञ्च भवान् ततोऽप्यधिकसत्यं भणितवानस्ति यद् भवता चिन्तितमासीत् ।

सेबास्टेन :-त्वं मद्वाक्यं योग्यतया व्याख्यातवानसि ज्ञातवानसि च ममाशयं ततोऽप्यधिकं यावदहमचिन्तयम् ।

गोञ्जेलो :-तदर्थमेव, स्वामिन् ।

एन्टोनियो :-धिगस्तु सर्वं मिथ्या व्यर्थञ्च तत् प्रजल्पितम् ।

एलोन्सो :-प्रार्थयाम्यहं मौनम् ।

गोञ्जेलो :-साधु, समाप्यते मया, तथापि

सेबास्टेन :-नासौ मौनो भविष्यति ।

एन्टोनियो :-तर्हि पणायितव्यं—कः प्रथमं ब्रूते एड्रियनोऽथवायम् ?

सेबास्टेन : वृद्ध कुक्कुट एव । (गोञ्जेलो)

एन्टोनियो :-नैव, युवा कुक्कुटः । (एड्रियनः)

सेबास्टेन :-स्वीक्रियते, किं पणायते ?

एन्टोनियो :-केवलमुपहासः ।

सेबास्टेन :-स्वीकृतम् ।

एड्रियन :-यद्यपि द्वीपोऽयं मरुस्थलायते—

सेबास्टेन :-हा हा – हा...
त्वमेव पणं जितवानसि।

एड्रियन :-निर्मक्षिकोऽयं द्वीपो गुप्तश्च ।

सेबास्टेन : तथापि ।

एड्रियन :-तथापि ।

एन्टोनियो :-नायं शब्दमेनं विस्मर्तुं शक्नोति ।

एड्रियन : अत्रत्यस्तापरमोऽर्थात् प्रकृतिर्मोहिका, प्रिया, कोमला च भवितव्या ।

एन्टोनियो : तापरस (Temprance) इति नामधेयास्त्वेका कन्यकासीत् ।

सेबास्टेन :-एवम्, मोहिका शब्दस्य प्रयोगोऽत्र विद्वत्तापूर्णः ।

एड्रियन :-अस्य द्वीपस्य वायुरतीव सुखावहः ।

सेबास्टेन : यथाऽस्य फुफ्फुसाः गलिताः ।

एन्टोनियो : यथा चैष पङ्कदुर्गन्धान्वितो भवेत् ।

गोञ्जेलो :-जीवनार्थं यदप्यावश्यकं तत्सर्वमत्र सुलभम् ।

एन्टोनियो :-त्वं सत्यं भणसि । अत्र केवलं निवासार्थं न किमपि विद्यते ।

सेबास्टेन :-एवम् । नास्ति किमपि, स्वल्पतरमपि वेति वक्तव्यम् ।

गोञ्जेलो :-कीदृशं तरुणं श्यामलं च शष्पं प्रतीयते ।

एन्टोनियो :-भूमिः सत्यमेव श्याववर्णा ।

सेबास्टेन :-श्यामलवर्णमिश्रा श्यावा ।

एन्टोनियो :-नेदमधिकं यदनेन नावलोक्यते ।

सेबास्टेन :-नैवासौ तु सत्यमेव पूर्णतयोपेक्षते ।

गोञ्जेलो :-परमत्र यद् बहुमूल्यमस्ति तदविश्वसनीयमस्ति ।

सेबास्टेन :-संस्थापितान्याश्चर्यान्वित - वस्तुवत् ।

गोञ्जेलो : तदिदं यदस्माकं वसनानि यद्यपि क्षारजलेन सर्वथा क्लिन्नानि - आसन्, तथापि तानि नवीनानि प्रकाशमानानि,

धौतानीव च लक्ष्यन्ते। सिन्धुक्षारजलजा मलिनता न क्वापि प्रतीयते।

एन्टोनियो :-चेदस्यैकोऽपि वसनस्थकोषो वक्तुमर्होऽभविष्यत्तु नूनमेवासावस्यासत्यत्वमप्रकाशयिष्यत्।

सेबास्टेन : अथवाऽयं स्ववक्तव्यं स्ववसनकोषे ऽस्थापयिष्यत्।

गोन्ज़ेलो :-अस्माकं वसनानि तथैव नवानि प्रकाशमानानि च सन्ति यथैतानि अफ्रिकायां राज्ञः सुकन्यायाः ट्यूनिस राज्ञा सह विवाहकाले आसन्।

सेबास्टेन :-अतीव सुखदोऽयं विवाह आसीत्। प्रत्यागमनकाले सिन्धु-यात्रायामस्माभिर्बहु आनन्दानुभवो विहितः।

एड्रियन :-इतः पूर्वं ट्यूनिसदेशस्तादृक् सौन्दर्यमूर्त्या नालंकृतः।

गोन्जेलो :-विडोडिडो समयप्रभृति।

एन्टोनियो :-किं विडो-विधवा-इत्याशयस्तव ? धिगीदृशीं शब्दावलीम्। कथमयं विधवाशब्दोऽस्य मस्तिष्के व्यचरत् किं डिडो विधवासीत् ?

सेबास्टेन :-अयं किल विधुरः एन्यास' इत्यपि वक्तुमुद्यतोऽभविष्यत्। अतोऽनेन सावधानतया व्यवहर श्रीमन् !

एड्रियन :-अयं किमाह विधवा डिडो ? मयेदं श्रुतं परं न सा ट्यूनिस-देशीयापितु कार्थेजदेशीयासीत्।

गोन्जेलो : कार्थेजः, ट्यूनिसस्यैवापरनामधेयम् श्रीमन्।

एड्रियन :-कार्थेजः ?

गोन्जेलो : सनिश्चयमिदं ब्रवीमि कार्थेज इति।

एन्टोनियो : अस्य शब्दाः किल मायातन्त्र्या अपि विचित्राः।

सेबास्टेन : अयमाकाशे भित्तिका गृहाणि च निर्ममे।

एन्टोनियो :-किमन्यदसम्भवंकार्यमसावग्रे सम्भवं करिष्यति।

सेबास्टेन : अहमनुभवामि यदयमग्रे द्वीपमिमं स्वकञ्चुककोषे संस्थाप्य

स्वगृहं नेष्यति तत्र च सेवफलस्थाने इममेव स्वपुत्राय दास्यति ।

एन्टोनियो :-अथ चायं द्वीपस्यास्यान्तरिकभागं सिन्धौ निक्षिप्य द्वीपान्तराणि समुत्पादयिष्यति ।

गोञ्जेलो :-किमाह ?

एन्टोनियो :-एव किल समये-एव करिष्यते ।

गोञ्जेलो :-श्रीमन् अस्माभिस्तु स्व वसनानां विषये वार्ता क्रियते स्म यदेतानि ततोऽपि नूत्नानि लगन्ति यथा तदाऽसन् यदास्माभिर्भवतां कन्यायाः परिणयकाले ट्यूनिसे धारितान्यासन् । सा चेदानीं साम्राज्ञी वर्तते ।

एन्टोनियो : सर्वाभ्योऽपि च ट्यूनिस साम्राज्ञीभ्योऽति सुन्दरी ।

सेबास्टेन : प्रार्थये, विडोडिडो नामिकां विहाय ।

एन्टोनियो :-अहो ? विडो डिडो, सनिश्चयं विडो डिडो ।

गोञ्जेलो :-श्रीमन् । किं मदीयं प्रावरकं नास्ति तादृशमेव शोभाकरं यादृशमहमेनं प्रथममधारयम्- ममाशयोऽस्य प्रकारे ।

एन्टोनियो :-प्रकारे-इति शोभना पदरचना ।

गोञ्जेलो : यदाहमेनं भवतां सुताया विवाहेऽधारयम् ?

एलोंसो :-त्व किल ममेच्छाप्रतिकूलमेतान् शब्दान् मम कर्णयोः प्रवेशयसि । किमर्थमहं तथाऽनुभवामि यथा मया स्वपुत्री तत्र न विवाहिता । अथवा ज्ञातमिदमस्ति कारणं यत्तस्मात् स्थानात् प्रत्यागमनवेलायां अहं स्वपुत्रमेवानाशयम् तद्वदेव च पुत्री अपि विनष्टा एव या किल इटली देशतोऽतिदूरेऽस्ति । नालमहं तां द्रष्टुमिदानीमहो मम पुत्रक, नेपलेस मिलनदेशयोरेकमात्राधिकारिन् नाहं जाने केन भयङ्करमत्स्येन ग्रासीकृतोऽसि ।

फ्रांसिस्को :-श्रीमन् ! सम्भावये यथासौ जीवति । अहं तं समुद्रवीचिभिः सह युद्ध्यमानं तासामुपरि सन्तरणशीलं चालोकयम् ।

स हि शौर्येण वीचीनां सन्तरणमकरोत् । स समुद्रं वशो कृतवान् । स हि स्वकीयशिरस्तासां लहरीणामुपरि कृत्वा स्वभुजाभ्यामाभिः सह घोरयुद्धमकरोत् । इत्थंच पृथिव्यास्तं भागं प्रत्यगच्छत् यो हि वीचिभिर्भृशं खण्डितः आसीत् । इत्थं प्रतीयते स्म यथा स नतो भूप्रदेशस्तद् ग्रहणायेव तादृशो जातः । अतो नाहं स्वल्पमपि सन्दिह्यामि यदसौ जीवित एव तटं प्राप्तः ।

एलोन्सो :-नैव नैव, मृतोऽसौ ।

सेबास्टेन :-श्रीमन् भवान् स्वयमेवेतदर्थमुत्तरदायी भवान् स्वकन्यकायाः पाणिपीड़नं युवरूपीयेण । European) सह नैच्छत् । अत एव तामफ्रीकीययुवकेन सह परिणीतवान् । सा सर्वदैव तत्र सनिश्चयमेवेतस्योपरि - अश्रूणि मोक्षयिष्यति ।

एलोन्सो :-त्वामहं मौनं धारयितुं प्रार्थये ।

सेबास्टेन :-अस्माभिर्नतमस्तकैर्भवानेतद् विधातुं प्रतिषेधितः । सा चापि सर्वथाऽज्ञापालनाज्ञोल्लंघनमितिद्विविधाचक्रचूर्णिता सती किं कर्तव्यविमूढाऽवसत् । भीतोऽस्मि यद्भवतां पुत्रोऽपि पञ्चत्व-मुपागत एव । मिलननेपलेसद्देशयोर्विधवासंख्यां वृद्धिमेष्यति घटनयानया । अस्माकं कर्तव्य-इदं आसीद्यत् सर्वेऽपि तत्र प्राप्ता अभविष्यन् ताः सान्त्वयितुम् । सर्वश्चाप्ययमपराधो भवतामेव ।

एलोन्सो :-स्वपुत्रनाशरूपा या हि महती हानिस्तदर्थमपि अहमेवोत्त-रदायी ?

गोञ्जेलो :-स्वामिन्, नैषः काल- कटुसत्यभाषणस्य यथा भवान् वक्ति । नैषा व्याख्याऽभीष्टा भवान् क्षतोपरि पीडाविनाशकौषधोपले प थाने क्षारं विकिरति ।

सेबास्टेन :-तथास्तु ।

एन्टोनियो :-अयञ्च चिकित्सकायते ।

गोञ्जेलो :-श्रीमन् भवति शोकाकुलेऽशोभनोऽयं कालः सवभ्यो-ऽप्यस्मभ्यः ।

सेबास्टेन :-कुसमयः स्मारितः ?

एन्टोनियो :-सर्वथा कुत्सितः समयः ।

गोञ्जेलो :-स्वामिन् ! चेदहमस्य प्रदेशस्यावासव्यवस्थापने नियुक्तोऽभविष्यं स्तु ।

एन्टोनियो :-तदायमत्र पीतपर्ण्याः बीजान्यारोपयिष्यति ।

सेबास्टेन :-लोलिकाः वा ।

गोञ्जेलो :-अथ चेदहमस्य द्वीपस्य राजाऽभविष्यन्तु किमकरिष्यम् ?

सेबास्टेन :-सुरापायी त्वं मदिराभावे तदर्थमितस्ततोऽभ्रमिष्यत् ।

गोञ्जेलो :-अस्य देशस्य राजत्वमापन्नोऽहं सर्वमपि विपरीतप्रशासनमकरिष्यम् । मम शासने न यातायातः न च कश्चिन्न्यायाधीशोऽभविष्यत् न चापि पठन, सम्पत्तिः, दारिद्र्यं न च राज्ये भृत्यप्रयोगः । नैव च पणः दायाधिकारः, सीमाङ्कनं, कृषिः द्राक्षोद्यानानि वा चापि धात्वन्नासवतैलादिप्रयोगाश्चाभविष्यत् । न किमपि कार्यजातं मम राज्येऽभविष्यत् । सर्वेऽलसाः, स्त्रियोऽपि सर्वा स्तथैव । तथा सत्यपि सर्वे विमलमनसः मावनाश्चाभविष्यन् । तत्र न कापि प्रभुसत्ता राज्यत्वम्वाभविष्यत् ।

सेबास्टेन :-ततोऽपि चायं राजाऽभविष्यत् ।

एन्टोनियो :-प्रथमं त्वयं प्रजातन्त्रं प्रलपति तदेव चान्ते विस्मरति ।

गोञ्जेलो :-सर्वमपि प्रकृत्या भविष्यति विनायासं विना प्रयासम्वा । तत्र न कापि प्रवञ्चनाऽपराधो वा खड्गानां लघुच्छुरिकाणां भुशुण्डीनां शूलानाञ्च प्रयोगप्रतिषेधः । प्रकृतिः स्वयमेव मम प्रजातन्त्रस्य निश्छललोकानां भोजनव्यवस्थां करिष्यति ।

सेबास्टेन :-न चापि विवाहप्रथा तव प्रजासु ?

एन्टोनियो :-नैव मित्र ! तत्र तु सर्वे गृहसम्पद्विहीना सर्वथाऽसमर्थाः प्रवञ्चयितारो भवेयुः ।

गोञ्जेलो :-तथाहमशासयिष्यं येन स्वर्णयुगमहत्वनाशो भवेत् ।

सेबास्टेन :-चिरञ्जीवतु महाराजः। (गोञ्जेलो)

एन्टोनियो :-चिरञ्जीव गोञ्जेलो।

गोञ्जेलो :-तथा चाहमिदमपि करिष्यामि। शृणु महाराज।

एलोंसो :-मौनार्थं प्रार्थये। त्वम् व्यर्थमेव भाषसे।

गोञ्जेलो :-सत्यमाह भवान्। अहं तु केवलमेतान् सज्जनान् ये किलैतेऽत्यन्तभावुकाः सन्ति, उपहासावसरं दातुं व्यर्थमेव ऐच्छं यतोहि तेऽभ्यस्ताः सन्ति।

एन्टोनियो : अस्माभिस्तु भवानेवोपहसितः।

गोञ्जेलो :-खपुष्पमुपहसितवताम् युष्माकं मध्ये मदीया का गणना ? अतः पुनरपि समुपहसन्तु शशशृंगायिते।

एन्टोनियो :-कीदृशं लक्ष्यमयं लक्ष्यी कृतवान् ?

सेबास्टेन :-चेदिदं तथा भ्रष्टं नाभविष्यत्।

गोञ्जेलो :-नूनमेव भवतां शक्तिमत्ताऽनिर्वाच्या। चेदिन्दुः स्वगतिं न परिवर्तयेत्तु सोऽपि पञ्चसप्ताहैरेव भवतां प्रभावेण स्वकक्षातः प्रभ्रष्टो भवेत्।

(एरियलो ऽदृश्यः गम्भीरार्थगीतं गायन् प्रविशति)

सेबास्टेन :-वयं तथैव करिष्यामो रात्रौ च पक्षिणः गृहीष्यामः।

एन्टोनियो :-नहि, नहि, मम प्रिय स्वामिन्, क्रुद्धो मा भूः।

गोञ्जेलो :-नहि, सनिश्चयं वच्मि, नाहं सारल्येन स्वख्यातिं स्वेन्द्रियाणां कृते संकटे निपातयिष्यामि। किमनेन परिहासेन यूयं मां सष्वापयिषथः ? मां निद्रा बाधते।

एन्टोनियो :-निद्रस्व शृणु चास्मान्।

सर्वे निद्रामुपागच्छन्ति केवलं एलोन्सो सेबास्टेन स्तथा एन्टोनियो अप्रसुप्तास्तिष्ठन्ति)

एलोन्सो :-किमेते सर्वे प्रसुप्ताः ? मदीये लोचनेऽपि बुद्ध्या सहैव निद्रापूर्णे। मन्ये तैरपि प्रथमं मामिवानुभूतम् ।

सेबास्टेन :-श्रीमन् ? त्वां शयनाय प्रार्थये। निद्राया स्वागत क्रियताम्। जातुचिदेव दुःखिताय समायाति। यदा च समायाति तदा दुःखमपाकरोति।

एन्टोनियो :-श्रीमन् उभावपि आवां भवतां सुरक्षार्थं जागृतौ भवावः प्रहरित्वञ्च कुर्वः

एलोन्सो :-धन्यवादः। विचित्रोऽयं निद्राप्रभावः।

(एलोन्सो स्वपिति, एरियलश्च गच्छति)

सेबास्टेन :-किदृशीयं निद्रा एतान् वशी करोति।

एन्टोनियो :-एषस्तु अत्रत्यः प्रकृतिप्रभावः।

सेबास्टेन : चेदेवं तर्हि कथं नास्मास्वपि तथाऽस्य प्रभावः। अहन्त्वाल-स्यमपि नानुभवामि।

एन्टोनियो : न चाप्यहम् । मम सर्वाण्यपि इन्द्रियाणि सर्वथा स्वस्थानि। एवं प्रतीयते यदेते मिथो विचार्य एव साकमेव प्रसुप्ताः। मेघगर्जनतर्जिता इव विनतास्ते। सुयोग्यसेबास्टेन, त्वया साक किं भविष्यति, किं भविष्यति ? नाहमधिक वक्तुमिच्छामि ? किंतु तथापि प्रत्यक्षमवलोकयामि तवाकारे यत्त्वया किं भवितव्यमासीत् स्वर्णावसरोऽयं त्वत्कृते समवलोकयामि चाहं यथा राजमुकुटस्तव शिरोपरि निपतति।

सेबास्टेन : अपि विनिद्रितोऽसि ?

एन्टोनियो : किं न शृणोसि यदहं वच्मि।

सेबास्टेन : शृणोमि। त्वं किल स्वप्नभाषां वदसि यथा प्रायेण स्वप्नेषु भवत्येव। यत्त्वं भाषसे तस्य कोऽर्थः ? आश्चर्यकरोऽयं स्वापः। प्रसुप्तस्यापि नयने ऽनिमीलिते इव। त्वं किल उत्थितो भवसि वदसि, चलसि, तथाप्यनुभवामि यथा त्वं गाढं प्रसुप्तोऽसि।

एन्टोनियो :-भद्र सेवास्टेन, त्वं सनिश्चयमेव स्वशुभोदयं विनाशयसि। न चानेन स्वर्णिमावसरेण लाभान्वितो भवसि। जागृतोऽपि त्वं स्वलोचने निमीलयसीव।

सेबास्टेन :-स्पष्टतया स शब्दश्वासान् गृह्णाति ये किल सनिश्चयं सार्थकाः।

एन्टोनियो :-स्वप्रकृत्या अप्यधिकोऽहं गम्भीरोऽस्मि सञ्जातः। त्वमपि तथैव भवितासि चेन्मामकीनं शृणोसि। त्वं किल यदिदानीमसि तस्मात् त्रिगुणमात्मानं करिष्यसि।

सेबास्टेन :-साधु, स्थिरजलमिव स्थितोऽस्म्यधुना श्रोतुञ्च तावकीनं सज्जोऽस्मि सम्वृत्तः।

एन्टोनियो : अहं त्वां कर्तव्यं शिक्षयिष्यामि।

सेबास्टेन :-कृपया शीघ्रं तथा कुरु नोचेदिदं कुलागतमालस्यं ममागतभाग्याय पलायनावसरं दास्यति।

एन्टोनियो :-ओः ? चेत्त्वदीया एतावती रुचिरत्रासीत्ततः किमर्थमस्य विषयस्योपहासं करोषि। एकतो भाग्यदत्तमिद सर्वं त्वमुपेक्षसेऽपरतश्च तदेव तीव्रतयेच्छसि। इदमपि च नूनमेव सत्यं यद्भाग्यं नश्यति पलायते वा यतोहि लोकाः प्रायेणालसाः भीरवोऽपि वा भवन्ति।

सेबास्टेन :-श्रीमन्, कथ्यतां, कथ्यताम्। त्वदीयलोचने कपोलौ च तथा प्रतीयेते यथा त्वं किमपि विशिष्टं महत्त्वपूर्णं कथयितुमिच्छसि यत्प्रकाशयता च त्वया महत्कष्टानुभवो विधीयते।

एन्टोनियो :-एवमेवेदम् श्रीमन् ? यद्यप्येषोऽल्पस्मृतिवान् फ्रांसिस्को, यस्य भूमिनिखननानन्तरं न किमपि स्मरणं भविष्यति, राजानमिति विश्वासदानं करोति यत्तव सुतो जीवितोऽस्ति परमस्य पुत्रस्य जीवनं तदिवासम्भवं यदीत्थं कथितं भवेद्यदत्रसुप्तो जनः समुद्रे तरति।

सेबास्टेन :-नाहमपि विश्वसिमि यदसौ जीवति न निमग्नो वेति।

एन्टोनियो :-चेदेवं तर्हि त्वदीयेयं निराशा बह्वाशाकरी। या कापि चाशाभवितुमर्हति सैषा एव भवेत्। किं त्वं मया सह स्वीकरोषि यत् फर्दीनन्दो निमग्नः।

सेबास्टेन :-निः सन्देहं मृतोऽसौ।

एन्टोनियो :-चेदेवं तर्हि कथय कोऽस्ति, द्वितीयो रिक्थ भाक् नेपलेसस्य ?

सेबास्टेन :-क्लेरिवल इति सञ्ज्ञका।

एन्टोनियो : किं ट्यूनिसदेशस्य साम्राज्ञी या किल तादृशे दूरातिदूरे देशे निवसति यत्र सम्पूर्णजीवनयापनेनापि न प्राप्तुं शक्यते ? सा नेपलेसस्य कमपि समाचारं ज्ञातुं तदैव शक्नुयाद्यदि स्वयं भानुमान् सन्देशवाहकत्वमुपेयात् यतोहि चन्द्रमसि समुपविष्टोऽपि जनो मन्दगतिर्भवेत्। सा तावत् पर्यन्तं न कामप्यत्रत्यां सूचनामधिगन्तुं शक्नोति यावन्नवजातो बालः श्मश्रुवान्न भवेत् तथा क्षुरेण तस्य श्मश्रुकर्तनं न क्रियेत्। तस्याः सकाशात् परिवर्तमाना वयमपि सर्वे पोतदुर्घटना ग्रस्ताः। यद्यप्यस्मासु केचन लोकाः जीविताः। ये च सौभाग्येन जीवितास्तेऽपि किमपि विशिष्टकार्यमेव कर्तुम् एषा दुर्घटना च तस्य विशिष्टकार्यस्यैव पृष्ठभूमिका। अथाग्रे किं भविष्यतीति मत्त्वदाधीनम्।

सेबास्टेन :-किं भाषसे, कथमिदं वक्तुं शक्नोसि त्वं ? सत्यमेवास्तीदं यत् मम भ्रातुः पुत्री ट्यूनिस साम्राज्ञी वर्तते। सत्यञ्चेदं यत् सा नेपलेसस्य रिक्थाधिकारिणी, तथापि नासत्यमिदमपि यत्–उभयोरपि राज्ययोः सीमा परस्परमति दूरे।

एन्टोनियो :-एवम्, एतावद्दूरे यत् प्रतिपदमिदमेव प्रकटयति, "कथं क्लेरिवल मार्गेणानेन नेपलेसं प्रत्यागन्तुं शक्ष्यतीति। सा तत्रैव ट्यूनिसे वसतु सेबास्टेनश्च सज्जो भवतु। 'सम्भावय चेत्ते मृत्युमुखे स्यु, न सुप्ताः। तदा ते नातोऽधिका भविष्यन्ति यथाऽधुना वर्तन्ते। तदा एक एव नेपलेसं प्रशासितुमेनं प्रसुप्तमिव (एलोन्सो) शक्नोति। अत्र किल गोञ्जेलो इव

वाक्पटवो मन्त्रिणोऽपि सन्ति। अयं तु व्यर्थमेव बहु भाषते। अहञ्चैनमिव वक्तुं शक्नोमि। अथाहं चिन्तयामि यदेते सर्वेऽपि विचारास्त्वयि पूर्वमेवासन्। राज्ञ एषा निन्दा तवोन्नतेर्हेतुः। अपि ज्ञातवानसि मदीयमाशयम् ?

सेबास्टेन :-एवं मन्ये।

एन्टोनियो :-इदं स्वभाग्योदयं दृष्ट्वा कथमिव प्रहृष्टोऽसि ?

सेबास्टेन :-अहं स्मरामि यत्त्वयाऽपि स्वभ्रातुः प्रोस्पेरो, इत्याख्यस्य स्थानमेवमिव प्राप्तम्।

एन्टोनियो :-सत्यमेवमिव। समवलोकय कथं किल राजकीयपरिवेषो मयि शोभते मम भ्रातुरपेक्षया मम सहयोगिनः आसन्निदानीञ्च ते सर्वे मम भृत्याः सन्ति।

सेबास्टेन :-किं तवात्मना त्व न पीडितोऽसि ?

एन्टोनियो : सनिश्चयमेव श्रीमन् ?

परं क्व-आत्मा ?

चेदहं विपादिकामधारयिष्यन्तु लघुपादत्राणमधारयिष्यम्। परं नाहं तथाऽनुभवामि। यदि विंशति-आत्मानोऽपि मिलनराज्यप्राप्तौ बाधारूपेणोपस्थिताः अभविष्यन् तदापि कठिनानपि तानहं बाधनात् पूर्वमेव जडत्वमनैषम्। तव भ्राताऽत्र पृथिव्यां सुप्तोऽस्ति। एवञ्च नायं पृथिव्या अधिकः कोऽपि। चेदसौ-एष एवास्ति यथा प्रतीयते तदा नास्ति मृतकादधिकः। केवलमहं स्वखड्गस्याङ्गुष्ठत्रयेण ममाज्ञानुसरमेनं सर्वकालाय स्वापयितुं शक्नोसि। एवं करणेन च त्वमस्य वृद्धस्य लोचने निमीलयितुं शक्नोसि तदा च वयं चेदैनं श्रीमान् प्रूडेन्स कथयामस्तु नासावस्मान्-गालिप्रदानं कर्तुं शक्ष्यति। अपरे च तादृशा आज्ञाकारिणो भविष्यन्ति यथा विडालः पूर्वमेव दुग्धं पातुं सज्जो भवति। ते कथयिष्यन्ति प्रतिक्षणमेवास्माकमाज्ञां पालयितुं सज्जा भविष्यन्ति।

सेबास्टेन :-भवदीयमिदं कार्यं मत् पथप्रदर्शकं भविष्यति। यथा त्वं मिलनोपरि - अधिकारं करोषि तथैवाहमपि नेपलेसं स्वहस्तगतं करिष्ये । निष्कासय स्वीयामसिम् । केवलमेकेनैवाघातेन, नेपलेसं यत् त्वं करमुद्रा: ददासि, ततो मुक्तो भविष्यसि । तथा चाहं नेपलेसस्य सम्राडत्वमापन्न: सर्वदा त्वया साकं प्रीतिं वर्धयिष्यामि ।

एन्टोनियो :-सहैव निष्कासनीयौ, यदा चाहं स्वहस्तोत्तोलनं करिष्ये तदैव त्वयाऽपि तथा कर्तव्यम् गोञ्जेलो बधाय ।

सेबास्टेन :-एवम् । परमेक: शब्द: ।

(मन्दस्वरेण किमपि मन्त्रयत:)

(संगीतकम् एरियल: पुन: प्रविशति)

एरियल : मम स्वामी भवदीयमापदं स्वमायाबलेन पूर्वमेव पश्यति भवांश्च तस्य मित्रम् येन भवदीयजीवनविषयका तस्य योजना नष्टा न भवेत् ।

(गोञ्जेलो महाशयस्य कर्णे गायति)

"यावत्त्वं गाढनिद्रायां निमग्नोऽसि स्वपन्नहो ?
विरच्यते तावदत्र षड्यन्त्रस्तव घातक:
नरत्वं दुर्लभं लोके चेदिदं मन्यसे ध्रुवम्
निद्राऽलस्यौ परित्यज्य शीघ्रं जागृहि जागृहि ।"

एन्टोनियो :-उभाभ्यामेवावाभ्यां त्वरा कार्या ।

गोञ्जेलो :-देवा: रक्षन्तु राजानम् ।

(तौ निद्रामपाकुरुत:)

एलोन्सो :-किमिदं कस्मादिदं सर्वेषां जागरणम् किमर्थमुभौ सकृपाणौ कथञ्चेतौ भयाकुलौ मुखमण्डलौ ?

गोञ्जेलो : किमिदम् ?

सेबास्टेन :-यावदस्माभिर्युष्माकं सुप्तानां रक्षार्थमत्र स्थीयतेऽधुनैवात्र भयङ्करशब्दोऽस्माभि: श्रुतो वृषभनर्दनमिव सिंहगर्जनमिव च ।

किमनेनैव न जागृतो भवानपि। अहन्त्वनेन भीतभीतोऽस्मि।

एलोन्सो :-नाहं किमप्यश्रौषम्।

एन्टोनियो :-अहो नु खलु शब्देनानेन राक्षसा अपि बिभ्यति पृथिवी चापि स्पन्दते। सनिश्चयमेवैष शब्दः सिंहसमूहगर्जनमिवासीत्।

एलोन्सो :-गोन्जेलो, अपि श्रुतः शब्दोऽयं भवताऽपि ?

गोन्जेलो :-शपथग्रहणपूर्वकं कथयामि श्रीमन्, मयाऽतीव कोमला स्वरलहरी श्रुता तया एव चाहमपनिद्रितोऽभवम्। ततोहं भवन्तं व्यधूनयम्, चीत्कृतं च मया यतोहि यथा मम लोचने समुद्घाटनं प्राप्तेऽहमुभावपीमौ सखड्गौ समालोकयम् तदा चात्र शब्द आसीत्। सत्य-ञ्चेदम् अस्माभिरपि स्वरक्षणार्थं सज्जीभवितव्यमथवा त्याज्यमिदं स्थानम्। सर्वैरेवास्माभिरपि खड्गहस्तैर्भाव्यम्।

एलोन्सो :-त्यज्यतां स्थानमिदमन्विष्यताञ्च मदीय हतभाग्य पुत्रम्।

गोन्जेलो :-ईश्वरस्तमत्र- एभ्योऽरण्य- जन्तुभ्यो रक्षेत्, नूनमेवासौ जीवितोऽस्ति।

एलोन्सो :-वियोक्तव्यमस्माभिः।

एरियल :-मम स्वामी प्रोस्पेरो ज्ञास्यति-इदानीं किं मया विहितम् ?

(एकतः)

इत्थं किल भोराजन्। याहि त्वं निर्भयं स्वपुत्रमन्वेष्टुम्।

(सर्वेऽपक्रामन्ति)

## द्वितीयदृश्यम् —द्वीपस्यान्यो भागः

कालिवान् काष्टानां भारमुद्वहन् प्रविशति। मेघगर्जनं श्रूयते।

कालिवान् :-सर्वोपि कुप्रभावः, यं सूर्यः कच्छात्, अनूपात्, समतलाद्वा स्थानात् गृह्णाति, प्रोस्पेरो महाशयस्योपरि पततु येन तस्य शरीरमभितः व्याधिपूर्णं भवेत्। तदाज्ञाकारिणः पिशाचा

मद्वचनं शृण्वन्ति तथाप्यहन्तु तमधिकानपशब्दान् कथयिष्याम्येव। प्रोस्पेरो-आज्ञां विना न ते मां कमपि कष्टं भयं वा दास्यन्ति। न चापि ते मां पंकसरसि क्षेप्स्यन्ति न चापि-उल्कामिव मां घनान्धकारे नेष्यन्ति। यदा चासौ तान् मां पीडयितुं प्रेरयति तदाऽनेका लघुपीड़ा मां यच्छन्ति यथा कदाचित्ते मर्कटमिव मामुपहसन्ति अनन्तरं च दशन्ते। कदाचित्ते मार्गोपरि शल्लकीनामाकारमासाद्य स्वपन्ति यदाचाहं चलामि तदा मम नग्नपादयोः प्रविशन्ति तेषां पक्षाः। कदाचिच्च ते सर्पाकारान् कृत्वा मामनु अग्रे च चलन्तो मां भयाकुलं कुर्वन्ति।

(ट्रिन्क्यूलो प्रविशति)

पश्यतामयमायातस्तदाज्ञाकरः कश्चित् पिशाचो मां काष्ठान्यानेतुमादेष्टुम्। अहं तथा भूम्यामधिशयिष्ये यथाऽयं न शान्तो भवेत् मां ज्ञातुं द्रष्टुम्वा।

ट्रिन्क्यूलोः-नात्र कश्चिदपि झुण्टो गुल्मोऽपि वा वर्तते यत्र शरणं गृह्येत, पुनश्चायं ऋतुर्विपरीततामावहति। पूर्वमेवाकाशे मेघगर्जनं श्रूयते। महीयानसौ कृष्णमेघो वमोद्वमक इव वर्षा वर्षितुं प्रवृत्त एव। चेत् पूर्वमिवास्य प्रकोपः प्रारब्धस्तदा क्व शरणं ग्रहीष्ये नूनमेवायं मेघो घोरवर्षणं करिष्यति।

किमिदमत्र ? मत्स्य एव, मत्स्यगन्धस्तस्मादायाति, पुराणस्य सर्वथा नष्टस्य गन्धः। न चापि नूतनस्य, पाचितस्यैषो गन्धः। अहो आश्चर्यजनकोऽयं मत्स्यः। चेदहमिङ्गलैण्डे अधुनाऽभविष्यं यथाहमासंस्तदा चास्य चित्रमपि चेत्तत्राभविष्यत्तदाऽवकाशदिवसे प्रत्येको मूढो मामागत्यास्य दर्शनकृते एव रजतमुद्रामर्पयिष्यत्। तत्रायं मत्स्यः कस्यापि मानवस्य भाग्यविधाताऽभविष्यत्, कश्चिदपि विचित्रजन्तु स्तत्र धनार्जनसाधनम् तत्रत्याः लोकाः खञ्जयाचकस्य कृते कपर्दिकामेकामपि न यच्छन्ति परं मृतं भारतीयं द्रष्टुं ते दशकपर्दिकादानमपि कुर्वन्ति। नरजङ्घोऽयं मत्स्यपक्षः। नचायं मत्स्य इव शीत-

लोऽपितु मानव इव उष्णः । नेदमपि सत्यम् । नायं मत्स्य एष तु अस्यैव द्वीपस्य कश्चिद्‌जीवो योहि मेघगर्जनेन मृतोऽस्ति ।

(मेघगर्जनम्)

अहो नु खलु कष्टम् । पुनरेष वायुप्रवाहः । अस्य वसनाभ्यन्तरगमनमेव ममाश्रय इदानीम् । नास्त्यवकाशोऽत्रान्यत्र क्वापि । दुर्भाग्यं नाम किल मानवं दुष्टेनापि संयोजयति अत्रैव स्थास्यामि यावन्नैष वात्याः प्रवाहोऽपयाति ।

(स्टेफानो गायन् हस्ते च काचपात्रं धारयन् प्रविशति)

स्टेफानो :-नाहं कदापि पुनः समुद्रं गमिष्यामि । तीरेऽत्राहं मरिष्यामि । शोकगानमिदं यद्धि कस्यापि जनस्यावसाने गीयते । परमिदमन्यत् अपि आनन्दक ममरं पार्श्वेऽस्ति ।

(पिबति)

(द्वितीयाङ्कस्यान्तिमेऽस्मिन्भागे कलिवानः प्रोस्पेरो महाशयस्य सेवकः स्टेफानो ट्रिंक्यूलो चोभौ तत्प्रतिपक्षिसेवकौ । संयोगेन सर्वेऽप्येते तद्द्वीपस्यैकभागे मिलन्ति । सुरापानमत्ताः सर्वे राजानं मृतं मत्वा तद्द्वीपस्य स्वायत्तीकरणाय योजनां योजयन्ति । हास्यरसस्यात्रोन्मेषश्च जायते ।)

कलिवान :-अहो ! खलु मेवं पीड़य माम् ।

स्टेफानो :-किमिदम् ? किमत्रापि भूताः ? किन्तु ते राक्षसान भारतीयांश्चात्रोत्पाद्यास्माभिर्विभिन्नकुटिलव्यवहारै र्व्यवहरन्ति ? हा नाहं मज्जनादेतदर्थं रक्षितोऽभूवं यत्तव चतुर्जङ्घाभ्यो भीतो भवेयम् । 'सुन्दरो नरो न पराजयमाप्नोति यावदसौ चतुर्भिर्जङ्घाभिश्चलन्ति" एषा हि लोकोक्तिः । इयञ्च तावत् पुनरपि प्रचारमाप्स्यति यावत् स्टेफानो जीवति ।

कलिवान भूताः मां प्रपीड़यन्ति हा कष्टम् ?

स्टेफानो :-द्वीपराक्षसोऽयं कश्चित् चतुर्जङ्घो नाम यो हि आन्त्रिकज्वर-

ग्रस्तो मूर्छितो लगति । परं चेदयं भूतस्तर्हि कथमस्माकीनां भाषां वदति । अस्तु तावदहमेनमुपचरितुमिच्छामि चेदयं तत्पात्रतामावहेत् । अथ यदि मयाऽस्य कष्टनिवारणे प्रशिक्षणे च सफलतावाप्ता तदाहमेनं नेपलेसं नेष्यामि कर्मपि च राजानमुपायनी करिष्यामि यतोहि सर्वथायं तद्योग्यो वर्तते ।

कलिवान :-प्रार्थयेऽहं मा पीड़य माम् । अचिरादेव गृहे काष्ठान्याहरिष्यामि ।

स्टेफानो : मूर्छितोऽयम् । नेदानीं स्वस्थभाषां वदति । अनेन चेत्पूर्वं सुरा न पीता स्यादथ चायं यदि मामकीनं काचपात्रमास्वादयेत्तु नूनमेवास्य मूर्छापगता भवेत् । चेदस्य स्वस्थकरणे प्रशिक्षणे च मया साफल्यमवाप्तं तदा नाहम य कृतेऽधिकमूल्यं ग्रहीष्यामि ततोऽपि स्वयमेव प्रसन्नो ग्राहको मां शोभनामर्थराशिं दास्यति ।

कलिवान :-त्वमधुना मां न प्रपीड़यसि परं शीघ्रमेव त्वया तथा करिष्यते । त्वदीयं कम्पनमेव तदिदं स्पष्टयति । प्रोस्पेरो मायाजड़ीकृतोऽसि त्वमधुना ।

स्टेफानो -ममादेशं कुरु । मुखमुद्घाटय । इदं किल तुभ्यं वाक्शक्तिं दास्यति । विड़ाल, मुखमुद्घाटय । अनेन तवं कम्पनं विनश्यति । निश्चितमिदम् । त्व मित्रामित्रज्ञानेऽसमर्थोऽसि । पुनरपि स्वमुखमुद्घाटय ।

ट्रिन्क्यूलो :-पूर्वपरिचितोऽयं शब्दः । एष किल परमसौ तु निमग्नः, अत्र चैते पिशाचाः । अहो, प्रभो ? रक्ष मां ।

स्टेफानो :-चतस्रो जङ्घा शब्दद्वयी च । विलक्षणोऽयं पिशाचः अस्योर्ध्वशब्दस्तु मित्राणि प्रशंसतेऽधस्तनश्च कटुभाषणं करोति इत्थं किल भ्रमपूर्णोऽयम् । पूर्णेनापि मत् काचपात्रेण चेदयं स्वस्थो भवेत्तावदहं तथा करिष्ये । आयाहि एवम तु त्वदीयेऽपरस्मिन्मुखेऽपि किञ्चित् निक्षिपेयम् ।

ट्रिन्क्यूलो :-स्टेफानो ?

स्टेफानो :-किं त्वदीयेनान्यमुखेनाहूतोऽस्मि ? दयस्व, दयस्व । नायं

केवल विकटाकारोद्भुत एव वा परं नूनमेव भूतः। मयापयातव्यमितः। नाहं भूतोत्सादकं चमसं धारयामि।

ट्रिंक्यूलो :-स्टेफानो ! चेत्त्वं स्टेफानो एवासि तु स्पष्टतया वद स्पृश च माम्। मा भैषी। अहं तव मित्र ट्रिंक्यूलोऽस्मि।

स्टेफानो :-चेत्त्वं ट्रिंक्यूलोऽसि तर्हि प्रत्यक्षमागच्छ : अहं त्वां निम्नजङ्घाभ्यां वहिर्निष्कासयामि। चेदयं ट्रिंक्यूलो भवेत्तु तस्येमावेव चरणौ। अपि सत्यमेव त्वं ट्रिंक्यूलोऽसि केन प्रकारेण त्वमस्य विरूपाद्भुतस्याभ्यन्तरं प्रविष्टः ?

ट्रिंक्यूलो:-अहमेनं मेघगर्जनाहतं जाने। स्टेफानो ? अपि त्वं न निमग्नोऽसि ? किं वात्या हृतिः समाप्ता ? वात्या प्रवाहभीतोऽहं विरूपाद्भुतस्यास्य वासनाभ्यन्तरे स्वात्मानं गोपायाञ्चक्रे-स्टेफानो किं त्वं जीवसि ? अयि स्टेफानो न्यूनातिन्यूनं द्वौ नेपलेसीयौ त्ववशिष्टौ।

स्टेफानो :-कृपया मा विलोड्य माम्। ममोदरे विकारः।

कलिवान:·(एकतः) इमौ शोभनौ स्याताम् चेदिमौ पिशाचौ न भवेताम्। कश्चिद्दिव्योऽयं देवो दिव्यं मधु धारयति। प्रणन्तव्योऽयं मया।

स्टेफानो : कथं जीवितोऽसि त्वं केन चात्रानीतः। मधुपूर्णस्य काचपात्रस्य शपथं गृहाण कथय च कथमत्रायातोऽसि ? मधुपात्रशपथपूर्वकं वच्मि यदहं मधुपात्रं गोलाकृतिसन्तरणसाधनमाप्य-यत् किल नाविकैः सिन्धौ प्रक्षिप्तमासीत्-स्वात्मानमरक्षयम्। यदा चाहं तटमाप्तस्तदा वृक्षत्वचापात्रमिमं निर्ममे।

कलिवान :-अहमपि पात्रस्यास्य शपथपूर्वकं भवदीयसेवकत्वं स्वीकरोमि। यतोहि पात्रस्यान्तर्निहितं मधु नूनमेव स्वर्गीयम्।

ट्रिंक्यूलो :-मित्र ? अहं किल राजहंस-मिव तर्तुं शक्तोऽस्मि।

स्टेफानो :-इदमस्ति धर्मपुस्तकमिव पावनं चुम्बस्वेमम्।

(ट्रिंक्यूलो महाशयं मधुपात्रमर्पयति)

यद्यपि त्वं राजहंसमिव सन्तरणशक्तोऽसि तथापि वरट इव त्वदीयनिर्माणम् ।

ट्रिन्क्यूलो :-अयि स्टेफानो किमधिकं धारयसि इदम् ?

स्टेफानो :-मित्रवर ! पूर्णं भाण्डं धारयामि । सिन्धुतटसमीप एवैकस्मिन् गुहा-प्रकोष्टे गोपयाञ्चक्रेऽहं मधुभण्डारम् । कीदृशोऽसि विरूप, कीदृशी च तव ज्वरमूर्छा ?

कलिवान :-अपि नावतीर्णोऽसि स्वर्गात् ?

स्टेफानो :-चन्द्रमसः सकाशात् । सनिश्चयं जानीहि कदाचिदहं चन्द्रलोकवासी आसम् ।

कलिवान :-अहमपि त्वां चन्द्रलोकेऽपश्यम् । अहञ्च त्वां पूजयामि । मम स्वामिनी त्वां मह्यं दर्शितवती त्वदीयं कुक्कुरं गुल्मञ्च ।

स्टेफानो :-शपथपूर्वकं स्ववचनं प्रमाणय ।
काचपात्रमिदं धर्मपुस्तकमिव पावनं चुम्वस्व ।

(कलिवानाय मधुपात्रं यच्छति)

अहमिदं पुनर्नवीनमधुना पूरयिष्ये । शपथं गृह्णामि ।

ट्रिंक्यूलो :-विश्वसिमि यद्ययमतीव मूर्खोऽस्ति विरूपश्चापि । अहन्त्वस्माद् भीतोऽभवम् । परमयं तु स्वयमेवाकिञ्चनोऽस्ति । कथमयं चन्द्रलोकस्य पुरुषे विश्वसिति । अलौकिकोऽयं निराशामयश्च विरूपः । विरूप, त्वया मधुरं मधु प्राप्तमिदञ्च सत्यमस्ति ।

कलिवान :-द्वीपस्या योर्वरान् भूप्रदेशान् दर्शयिष्यामि भवन्तम् । अहं भवच्चरण-चुम्बको भविष्यामि । कृपया मम देवो भव ।

ट्रिंक्यूलो :-सत्यमेवायमतीवाविश्वसनीयः सुरापानमत्तश्च विरूपो वर्तते ।

यदास्य स्वामी सुप्तोऽभविष्यदयं तदैव तन्मधु अचोरयिष्यत् ।

कलिवान :-तव चरण कमलचञ्चरीकोऽयं शपथेन दासत्वं स्वीकरोति ।

स्टेफानो :-आयाहि शपथेन प्रणम।

ट्रिक्यूलो : साधारशिरस्कं विरूपमेनं दृष्ट्वाहमामरणं हसिष्यामि। अतीव वञ्चकोऽयम्। दण्डप्रहारेणैनं प्रताड़यितुमिच्छामि।

स्टेफानो :-आयाहि चुम्बस्वेदम्

(कलिवानाय सुरां प्रयच्छति)

ट्रिक्यूलो :-दुष्टोऽयं विरूपोऽस्ति पीतसुरो घृणास्पदोऽयं विरूपः।

कलिवान :-अहं त्वां शोभनानि जलस्रोतांसि दर्शयिष्यामि। बदरिकाफलानि, मत्स्याः काष्ठानि च प्रभूतमात्रायां तुभ्यमानेष्यामि। निर्दयोऽयं धिक्कारयोग्यश्च वर्तते यमहं सेवे। नाहं तदर्थं काष्ठान्याहरिष्ये अहन्तु केवलं ममाश्चर्यकर स्वामिन्? त्वामेव सेविष्ये।

ट्रिक्यूलो :-कीदृगसभ्योऽयम्। सुरापानमत्तोऽयं विरूपः स्वात्मानमाश्चर्यजनकं मानवं मनुते।

कलिवान :-प्रार्थयेऽहं यत्तुभ्यं जलबिल्वोत्पत्तिस्थाने नेतुमाज्ञप्तो भवेयम् तत्राहं स्वदीर्घनखैः शूकराकृति दृढफलानि समुत्खनिष्यामि। तत्राहं त्वां नीलकण्ठनीडमपि दर्शयिष्यामि कथञ्च मर्कटग्रहणं भवतीत्यपि कथयिष्यामि। अहं त्वदर्थमण्डाकृतिफलानां गुच्छकानानेष्यामि कदाचिच्च जल–कुक्कुटानपि शिलाभ्यः समाहरिष्यामि। अपि त्वं मामनुसरिष्यसि?

स्टेफानो :-प्रार्थ्यते यदिदानीं बहुभाषणं विनैव मार्गं निर्देशय। ट्रिक्यूलो? राजा तत्सहयोगिनश्च सर्वेऽपि निमग्नाः। अतोऽस्माभिरस्य द्वीपस्योपर्यधिकारो विधेयः। समुत्थापय काचपात्रमिदम्। ट्रिक्यूलो! वयमेनं शनैः २ पूरयिष्यामः।

कलिवान :-(मदिरामत्त एव गायति)

अन्तिमोऽयं प्रणामः स्वामिन्!
अन्तिमोऽयं प्रणामोन्तिमः।

ट्रिंक्यूलो :भषणरतोऽयं विरूप: सुरापानमत्तश्च ।

कलिवान :

न मत्स्य ग्रहणार्थाय करिष्ये जलबन्धनम् ।
न च काष्ठान्याहरिष्ये तदर्थं कथितोऽपि सन् ।।
सपात्रस्थालिकानाञ्च करिष्ये नापि रन्धनम् ।
घोषणा घोष्यते ह्येषा कलिवान्नव स्वामिवान् ।।
स्वामी नवीनो लब्धोऽत्र स्वातन्त्र्यमभिनन्द्यते ।
स्वातन्त्र्यानन्दसन्दोहः पुनरप्यभिनन्द्यते ।

स्टेफानो :-अहो सर्वसुन्दर पिशाच ! मार्गं निर्दिश ।

(प्रस्थानम्)

# तृतीयोऽङ्कः

## १ अपटी

(प्रोस्पेरोमहाशयस्य गुहाग्रभागः । फर्डीनन्दः भारमुद्वहन् प्रविशति)

फर्डीनन्द :-श्रमसाध्यानि प्रायेण कार्याणि । श्रमजन्यकष्टेन च तत्पूर्त्यानन्दो विनश्यति । एवमेव सर्वाणि कार्याणि भवन्ति स्युस्तानि कियदपि हीनानि परं तान्येव पूर्तिमासाद्य यशस्कराणि सिद्ध्यन्ति । इदं किल हीनकर्म यन्मया सम्पाद्यते यावत् परिश्रमसाध्यं तावदेव घृणास्पदमपि, परं सा देवी, यस्याः कृते सर्वमपीदं कष्टमात्रहामि, सर्वमिदमानन्दमयं करोति । सा तु स्वपितुरपेक्षया दशगुणाधिका सौम्या । स तु कर्कशताविनिर्मितः । मया किलानेके भाराः समुद्वहनीयाः एकत्र चैषां संग्रहो विधेयः कठोरादेशबद्धेन । सा च मम प्रिया मामकीनां दशामिमामवलोक्य रोदिति कथयति च, "नैतत्कर्म तवानुरूपम् ।" अहञ्चेदं कार्यं कर्तुमसमर्थोऽपि सन् संस्मृत्य पुनरेतादृशान् मधुमयशब्दान् गतक्लमो भवामि । नितान्तकार्यासक्तोऽप्यहं विचारेष्वेषु निलीनो न गणयामि काममपि स्वकार्यासक्तिम् ।

(मिराण्डा-प्रोस्पेरौ प्रविशत् । किञ्चिद्दूरे ऽदृश्योऽवतिष्ठते)

मिराण्डा :-कष्टं खलु । अहमिदानीं त्वामेताद् क्कठिनश्रमासक्तं द्रष्टुं न शक्नोमि । अहम् इच्छामि यत् केनापि विद्युत्पातेन सर्वमपि कष्टजातमिदं भस्मसादभविष्यत् पूर्वमेव भवद्भ्यः प्रदत्तादेशात् । प्रार्थये त्वां अलं तावदनेन परिश्रमेण विश्रम्यताम् ।

यदा काष्ठानीमानि ज्वलिष्यन्ति तदा त्वत्कृते कष्टदान-पश्चातापात् रोदिष्यन्ति । मम पिता किलेदानीं स्वाध्याय-निमग्नः । प्रार्थये त्वां विश्रामं कुरु किञ्चित्, यावदसौ होरात्रयं नागच्छति ।

फर्डीनन्द :-अयि प्रिय सुन्दरि ! यत् कार्यं मया प्रारब्धं तदहं सूर्यास्तात् पूर्वमेव समापयिष्यामि ।

मिराण्डा :-चेद्भवान् विश्राम्यति त्वहं तावत्काष्ठान्याहरिष्ये । कृपया समादिश मां तथा कर्तुम् । अहमेतानि निचेष्यामि ।

फर्डीनन्द :-नैवामूल्यसुन्दरि ! विश्राम्यन् त्वामहमेतादृगवाकृष्टकर्मणि नियोजयेयमित्यस्यापेक्षया तु स्वनाडीनां दारणं स्वपृष्ठस्य च भञ्जनमेव सुखकरं मन्ये ।

मिराण्डा :-यद् भवद्भ्यो रोचते तदेव मह्यम् परं कार्यमिदमहं

सौकर्येण कर्तुं शक्नोमि । यतो हीदं कार्यं भवदिच्छाननुरूपं तदेवाहं स्वेच्छया चिकीर्षामि ।

प्रोस्पेरो :-(एकतः) तुच्छ कीट ? मोहकलिलापन्नो ऽसि सम्वृत्तः । त्वदत्रागमनमेवेदं प्रकाशयति ।

मिराण्डा :-श्रान्त इव प्रतीयसे ।

फर्डीनन्द :-नहि शुभप्रिये ! निशापि त्वदुपस्थितौ मम सुप्रभातम् । केवलं स्वप्रार्थनाप्रयोगाय तावत् पृच्छामि कैरक्षरैरलङ्कृतं भवत्या नाम ।

मिराण्डा : "मिराण्डा" अहो मम पितः ? प्रकाश्य तत्रभवतामाज्ञोल्लघनं विहितम् ।

फर्डीनन्द :-विचित्रमिराण्डे ! नूनमेव त्वमाश्चर्याणामाश्चर्यम् । नास्ति लोके किमपि त्वदिव प्रियतमम् अह किलानेक - सुन्दरीणां दर्शनं महता ध्यानेनाकुर्वम् । बहुश तासां प्रियमधुरा वाक् मम कर्णकुहरातिथिर्बभूव । विभिन्नगुणागारास्तास्वनेका मयेच्छिता अपि । परं नाहं कामपि पूर्णमनसा स्वप्रेमपात्रा- मकुर्वम् । यासु तेषां गुणविरुद्धान् कानपि दोषानहं नूनमेवा- पश्यम् । एके ऽपि च तादृग् दोषे सर्वे ऽपि गुणा स्तासामगण्याः एव । परं त्वन्तु काचिद् भिन्ना एवासि, त्वं किल पूर्णा, अतुलनीया, स्त्रीणां यत् किमपि मधुरं प्रियं चास्ति तदेव त्वयि सर्वम् ।

मिराण्डा :-नाहं कामपि स्त्रियं जाने । स्वाकृतिमतरा नाहं स्मरामि कस्या अपि स्त्रिय आकृतिम् मम प्रिय मित्र ? न चापि कश्चित् पुरुष एव मया स्वपूज्यपितुस्त्वदतिरिक्तश्च दृष्टः । यद्यप्यन्य- देशमानवाकृतिं जाने । परमहं स्वलज्जाया यामहं स्वामूल्यको- षभूतां मन्ये-शपथपूर्वकमेव कथयामि यन्न को ऽप्यन्यस्त्वदति- रिक्तो मम प्रीतिभाजनम् । मदीया कल्पनापि त्वदतिरिक्तं कमपि प्रेमपात्रं निर्मातुं न शक्ता । एवञ्चाहं स्वच्छन्दतया स्पष्टयामि । न चानेनाहं स्वपितुराज्ञामपि पालयितुं शक्ताऽस्मि ।

फर्डीनन्द :-पदप्रतिष्ठानुरूपमहं राजकुमारोऽस्मि । अहमित्थमपि विचारयेयं यदहं राजाऽस्मि, यद्यपि नाहमिदं वाञ्छामि । इदं काष्ठवाहनरूपञ्च कर्मातीव घृणास्पदं मे । पिशितमक्षिकामुखदूषणादप्यधिकं घृणास्पदम् । हृदयेन चाहमिदं ब्रवीमि यत्त्वदवलोकनक्षण एवाहं तव दासत्वमापन्नः । मदीया दृढेयमिच्छा यदहं तव दासो भवेयम् । काष्ठवहनसेवा त्वदर्थमेव निर्विरोधं मया विधीयते ।

मिराण्डा :-अपि त्वं कामयसे माम् ?

फर्डीनन्द : भो ! भो ! पृथिव्याकाशौ ? पश्यताम् श्रूयताञ्च यदहं ब्रवीमि । चेदहं सत्यं वदामि तु तच्छोभनफलावाप्तिर्मे भवेत् । अथ चेदिदमसत्यमस्ति तदा शुभमपि मामशुभं भवतु । अहं त्वां प्रीत्या मानेन, च संसारस्य केनापि वस्तुनाऽतुलनीयां मन्ये ।

मिराण्डा :-मूर्खाहं तदर्थं रोदिमि यत्किलानन्द कारणं मे ।

प्रोस्पेरो :-(एकतः) उभयोरेव प्रेमावतारयोरिदं साधुसम्मिलनम् ।

ईश्वरः स्वीयानाशीर्वादात् उभयोः साफल्यार्थमभिवर्षेत् ।

फर्डीनन्द :-किमर्थं रोदिषि ?

मिराण्डा :-स्वीयामयोग्यतां लक्ष्यी कृत्य। यतोहि नाहं तत्त्वां दातुं समर्था यद्दित्सामि - इतोऽप्यधिकञ्च नाहं तद्ग्रहणशक्ता यदर्थं म्रिये। परं सर्वमिदं वाग्जालमात्रम्। यावदेव मया स्वभावनाः गोप्यन्तें तावदेव ताः प्रकटी भवन्ति। परमेषा कृत्रिमलज्जा मयापाकरणीया पवित्रनिष्कलकमनसा च स्पष्टतया वक्तव्यम्।

"अथ चेद्भवान् मां परिणीते त्वहं भवतां पत्नी भविष्यामि। नोचेदाजीवनं तव सेविका वा भविष्यामि। भवान् मां स्वसहयोगिनीमचिकिर्षेदपि ततोऽप्यहं तव सेविकात्वेनैव प्रसन्ना भविष्यामि, इदं भवतामिच्छानुकूलमननुकूलम्वा किमपि भवेत्।

फर्डीनन्द :-मम हृदयान्तरे ? अहमेव त्वदीयस्तुच्छातितुच्छसेवकोऽस्मि।

मिराण्डा :-तर्हि मम भर्ता भविष्यसि।

फर्डीनन्द :-एवमिच्छामि, सत्यमनसा, तथैव यथा वन्दी स्वातन्त्र्यम्, एष मे हस्तः।

मिराण्डा :-एष च मे हस्तोऽस्ति यस्मिन्मे हृदयम्। इदानीञ्चार्धं होरां यावदवकाशं देहि। गमनप्रणामाः।

फर्डीनन्द :-सहस्रमिताः सहस्रमिताः।

(फर्डीनन्दो मिराण्डा चोभौ पृथक् २ गच्छतः)

प्रोस्पेरो :-उभयोरनयोः प्रसन्नता मत्तोऽप्यधिका यौ हि सहसैव वन्धनेऽस्मिन्नावद्धौ, परं मामकीनापि प्रीतिर्विषयममुमपहाय कस्मिन् अधिका भविष्यति। अधुना मया स्वाध्यायोऽध्येतव्यः। सायन्तनभोजनात् पूर्वं वह्वस्ति मया सम्पाद्यम्।

(प्रस्थानम्)

२ अपटी

(द्वीपस्यापरो भागः। स्टेफानो-ट्रिंक्यूलो—ससुरापानपात्रः कलिवानश्चैते प्रविशन्ति)

शिक्षक :—(कवितं प्रति) कविता वद—भक्षिकायां गजे च कोऽन्तरालः ।

कविता :—श्रीमन्, मक्षिका गजस्योपरि उपविशति परं गजः न तस्योपरि उपविशति ।

★ ★ ★

भृत्य :— (सुप्तं प्रभुं प्रति) उत्तिष्ठतु भवान् उत्तिष्ठतु ।

प्रभु :— किमर्थं किम् कारणम् ।

भृत्य :— भवता अधुना निद्राया औषधम न गृहीतम् ।

★ ★ ★

अध्यापकः—(पंकजं प्रति) भो पंकज उत्तिष्ठ शीघ्रं वद यत् किं फल एतादृशं वर्तते यन्न भक्षणे अपितु श्रवणे अस्ति ।

पंकज :—श्रीमन् परीक्षा फलमस्ति ।

★ ★ ★

चिकित्सकः—(उपचिकित्सकं प्रति) पश्यतु द्वारे कः आकारयति ।

उपचिकित्सक :—कश्चित् नूतनरुग्णः भवितुं शक्यते । पुराणा तु न प्रत्यावर्त्तन्ते ।

शशि कान्त शर्मा
आचार्य, ओ. टी. रिसर्च स्कालर
रा. मा. विद्यालय हारसी
जि० कांगड़ा (हि. प्र.)

※

व्यंग्यलेख:

# आऽऽह ! वयं स्मः पाखण्डाचार्याः

निगम स्वरूप शास्त्री

"ओं तत्सतद्य: कलियुगे प्रथमे चरणे भारतवर्षे जम्बूद्वीपे श्री श्वेत-वाराह कल्पे "प्रमाथी" नामक सम्वत्सरस्यान्ते "विक्रम" नामक वर्षस्यो-दये प्राक् द्रोणाचार्यात रजनीशाचार्यपर्यन्तं, सपाखण्ड, सचातुर्यं ससम्मानञ्च जीवाम: वयम् । इयं चातुरी, कृतघ्नता पाखण्डश्च फाल्गुणमासे पूर्णमासे पूर्णमास्यां शुक्लें पक्षे अमुकतिथौ अमुकवासरे धनधान्यं मद्गेहे कलहं भवेत् तव गृहे तुभ्यमहं समर्पये भो: हतभाग्य यजमान, जलांजलिं त्यज, पाखण्डीनां संकल्पोऽयम् ।

अस्माकं एका एव योग्यता एकैव कृत्यं एकैव ध्येयस्तदस्ति पाखण्डम् । अस्मिन् विषये य: आचार्योपाधिं उदतरति सएव सार्वभौम: सार्वकालिक: अजरोऽमरश्च जायते । आगच्छत भो : योग्यतामिमां मानसपटले चित्रयत् । अन्ये दर्शनन्यायव्याकरण आचार्याणां कालस्तु कवलित: । अद्यत्वे तु रजनी-शाचार्या उतवा पाखण्डाचार्याणामेव महत्त्वमस्ति । द्रोणाचार्योऽपि पञ्चत्वं गत: । सर्वकारोऽपि इमां योग्यतां मान्यता-दातु चिन्तातुरो वर्तते परोक्ष-रूपेण तु पूर्वमेवास्ति

मनसा-वचसा-कर्मणा एभि: अस्माकं लेशमात्रमपि सम्पर्को नास्ति । यत्-मनसि तत् वचनेषु न यत्-कथयाम: तत् वयं न कुर्म: । इयमेवास्माकं प्रथमा शिक्षा । यद् यद् सद्ग्रन्थै: न: शिक्षितं तत्-तत् स्वजीवने चरितार्थं न करणीयम् । अन्यास्तु कथयन्ति "आज्ञा गुरूणामविचारणीया:" परं वयं तु शिक्षयाम: गुरूणामाज्ञा - अवश्यमेव विचारणीया । कामं राजकोया-नुदानं स्यात्, कस्यचित् संगठनस्य धनं स्यात् अथवा कोऽपि श्रद्धालु अस्माकं जालके आगच्छेत् तस्य झटत्येव मुण्डं मुण्डयतु । एतानि- अस्माकं प्राथमिक-शिक्षणसूत्राणि सन्ति ।

वयं भक्षयामः संस्कृतं, वदामः संस्कृतं, मलमूत्रेपि संस्कृतं—आचरणमस्माकं असंस्कृतम् । अस्माभिर्चर्विता संस्कृतभाषा न शक्नोति पुनर्जीवितुम् । यतोहि वयं प्रत्येकं शब्दं द्वात्रिंशत् वारं चर्वयामः । द्विजिह्वाधारिणः सर्पा वयम् फूत्कारमस्माकं पुष्पं, गरलमस्माकं फलम् । रक्षकाअपि वयं भक्षकाअपि वयं, ब्रह्म वयं ब्रह्मराक्षसा वयम्, दुष्टेषु दुष्टाः महादुष्टाः वयं, सर्वेषु सर्वा वयम्, किं न स्मः वयम् । आऽऽह वय स्मः युगद्रष्टारः, भविष्यद्रष्टारः दूरद्रष्टारः, त्रिकालज्ञा, दैवज्ञा वयम् । पञ्चाङ्गस्तु केवल पञ्चाभ्यांगानि – एव प्रतिपादयति । वयं सर्वाण्यङ्गानि प्रतिपादयामः तेषां मधुरस्पर्शमपि कारयामः । अद्वितीया वयम् । आगच्छन्तु भो ! अस्माकं शरणं गृह्णन्तु ।

पाखण्ड शब्दः पुण्यदाता, धनदः भवत्राताश्चापि । पुत्र इव नरकात् त्रायते । "प" वर्णस्यार्थः पुण्यं न तु पापम् "ख" वर्णस्यार्थः 'खं' शब्दतन्मात्राया पञ्चतत्त्वानामाधारभूतं स्थानमित्यर्थः । अतः सर्वेषां प्राणिनां अन्तिमं स्थानमाकाशमेवास्ति । "ड" वर्णः डाकिन्याः देव्याः पवित्रं नामं द्योतयति । अतः कः मूर्खः भणति पाखण्डो कल्याणकारी नास्ति । बुधाः वदन्ति—"शनैः शनैः पीयते पानम् ।" परं — खण्ड — खण्डेषु पीयते पाखण्डम् । अयि ! संस्कृतज्ञा असंस्कृतज्ञाश्च पानिव मधुरं पाययतु पाखण्डम् ।

विजयतेतितराम् आचार्येषु आचार्या पाखण्डाचार्याः ।

सरकारी हाई स्कूल
मल्लेहवाल (पटियाला) पंजाब

## सम्पादक महाभागाः

कृपापत्रं मया लब्धं वर्षस्य शुभकामदम् ।
मुनिरूपस्य भवतः कामये स्वात्मवच्छुभम् ॥
विदधाति यथाकालं भारत्या भारतस्य याम् ।
सेवां नान्योऽधुनादेशे दृश्यते तात्परो जनः ॥
प्रणत्यन्तर — मव्यग्रं भगवन्तमहर्निशम् ।
प्रार्थये भवतां युवृद्धयेऽह — मुमाशिवम् ।
कार्तिकस्य पूर्णिमायां श्री वशोधरदर्शनम् ।
नगराख्यग्रामे विहितं स्तुतो देवस्तदार्प्यते ॥

— गणेशदत्त मिश्रः बिहार

# श्री वंशीधराष्टकम्

— श्री गणेशदत्त मिश्रः

पुरा नृपोऽभूच्छिवराजसञ्ज्ञकः सबालवंशीधर — देवपूजकः ।
नृ धर्मगोप्ता चरणं हरेः स्मरन् नमामि वंशीधरपादपङ्कजम् ॥

स्वदेशरक्षार्थमसौ गिरौ वसन् सबालदेवं कनकस्य विग्रहम् ।
भयात्मुरारिं गिरिगह्वरेऽर्चयन् नमामि वंशीधरपादपङ्कजम् ॥

स राजराजः कुलदेव भास्करम् मुरारिपार्श्वे कनकेविनिर्मितम् ।
नमन् हि नानाविध पूजनादिभिः नमामि वंशीधरपादपङ्कजम् ॥

शिवेति नाम्ना जगति स्थितोऽधुना गिरिः स सर्वत्र वनैर्विभूषितः ।
शिवोऽपि कालेन दिवं गतोऽर्थयन् नमामि — ... ... ॥

ततो गणैर्भूपतिभि प्रयत्नतः विधाय देवालयमेकसुन्दरम् ।
गिरेः स देवो नगरी कृतोऽभवत् नमामि — ... ... ॥

शिरः सु शेषस्य कृतेऽम्बुजेस्थितम् सुशोभितं दिव्यमनोहरं परम् ।
जनार्तिहं भक्तिभिरर्चितं सदा नमामि — — — ॥

पृथक्दिनेशस्य च मन्दिरे मया, स्वेहृंयानामपि काञ्चनं वपुः ।
विलोकितं सप्तहयैरथे स्थितम् नमामि ... — — ॥

गणेशदत्तेन कृतं हि वन्दनम् पठेन्नरः शान्तधिया दिवानिशम् ।
स सर्वदुःखैः रहितो मुदान्वितः दिवं ब्रजदन्तगते स्वभक्तितः ॥

निवृत्ताचार्यः शिवसागर—औरंगाबाद
बिहार ।

# हिमाचल प्रदेशस्य संस्कृतसमाजः

हिमाचल प्रदेशस्य संस्कृत समाजस्तथा गाढनिद्रायां प्रसुप्तो वर्तते यो हि स्वकीयहितविचारणेऽपि असमर्थः। प्रदेशे यद्यपि संस्कृतज्ञानां न्यूनता न वर्तते। अत्र राजकीयाराजकीयविद्यालयेषु प्रायेण संस्कृताध्यापकाः सन्ति विंशति संख्यातोऽपि अधिकमत्र संस्कृतविद्यालया सन्ति पञ्चसङ्ख्यकानाञ्च संस्कृत महाविद्यालयानां सञ्चालनं प्रशासनेन क्रियते। राजकीयस्नातक-स्नातकोत्तर महाविद्यालयेष्वपि संस्कृताध्यापकाः सन्ति। ग्रामे ग्रामे नगरे नगरे च कर्मकाण्डिनः ज्योतिषशास्त्रमर्मज्ञाः आयुर्वेदविदश्च सन्ति। परन्तु सर्वेऽप्येते पृथक्—असंघटनत्वेन प्रभाविताः अवसीदन्ति।

यद्यपि राजकीयसेवासु संलग्नानां संस्कृतज्ञानामार्थिकी स्थिति - अन्य प्रान्तीय-संस्कृतविदुषामपेक्षया शोभनतरा तथापि तेषां प्रयासः प्रदेशे संस्कृत प्रचार प्रसार-मधिकृत्य शून्यतामेव गच्छति। संस्थानां संगठनं जायते परन्तु संस्थानां पदाधिकारिणः अन्येषां सहयोगप्राप्तौ असमर्था— एव तिष्ठन्ति हिमाचल-प्रदेश विश्वविद्यालयेऽपि पत्राचारनिदेशालयेऽपि च सुदृढ़ा संस्कृत विभागाः परन्तु परस्पर नास्ति किमपि सामञ्जस्यम् संस्कृतसंगठनेषु अध्यापक - प्राध्यापक-कर्मकाण्डिज्योतिर्विद आयुर्वेदविशारदेषु च। तस्मादद्य संस्कृतकृते येऽपि प्रयासाः क्रियन्ते ते तथा फलिनो न भवन्ति यथा भाव्याः स्वार्थ परवशः संस्कृतसमाजः अवसीदति।

अतः पुनरपि मया सर्वेऽपि प्रदेश संस्कृतज्ञाः विविधसंस्थासम्बद्धाश्च पदाधिकारिणः प्रार्थ्यन्ते यत्ते स्वगतिविधीनां वेगेन सञ्चालनं सदा कुर्युः हस्ताक्षराभियाने च त्वरया स्वसहयोगं प्रतिपादयेयुः संस्कृतरक्षार्थं इदमावश्यकम्। यदि अस्माकीना एषा एव दशा प्रचलिता तु आगामिसन्ततयोऽस्मान् - विश्वासघातिनः इति कथयिष्यन्ति यतोहि वयं स्वकीयस्वार्थपर्यन्तमेव सीमिता संस्कृतस्य कृते न किमपि कार्यं कुर्वाणास्तिष्ठामः।

आशासे मदीयप्रार्थनाऽवश्यमेव सुज्ञानां संस्कृतज्ञानां कर्णकुहरेषु प्रविष्टा भविष्यति

——

## क्षम्या:

फरवरीमासीयाङ्कादग्रे मार्च-मासीयाङ्केऽपि अस्याग्रिम-अंशः पाठकैः पठनीयः क्रमशः। अवशिष्टः स्वल्पतमांशः मईमासे दास्यते। अत्रानेक विदुषां पत्राणि शुभकामनामयानि एतत्सम्बन्धे प्राप्तानि प्रेषां स्नेहमहमति-आदरणे गृह्णामि धन्यवादान् - च तेभ्यः प्रयच्छामि — केशव शर्मा

# संस्कृतशोधसंस्थानस्य अभिनवप्रकाशनानि

## सूनृता

## ( सं० गीत काव्य् )

दिव्यज्योतिष: प्रधानसम्पादकेन श्रीमदाचार्यकेशवशर्मणा प्रणीतं सचित्रं पञ्चचत्वारिंशत्सुललितपद्य- गद्यगीतग्रथितं पुरीस्थश्रीजगन्नाथ सं० वि० विद्यालय-कुलपतिचरस्यश्रीमदाचार्यप्रवर डा० सत्यव्रतप्राक्कथन समुपेतं संस्कृत जगति महत्वपूर्णं खण्डकाव्यम् ।

— मूल्यम् २५ रु० डाक व्यय: पृथक् —

★

## पथ्यापथ्य विनिर्णय:

हिमाचलप्रदेशस्य सुविख्यातराजवैद्य स्व० पञ्चाननशर्मणा महाविदुषा १०५ वर्ष पूर्व प्रणीत: सं० टीका सहितस्तथा हिन्दीटीकया समुपेत -दुर्लभो ग्रन्थ: ।

- मूल्यम् २० रु० डाक व्यय: पृथक् —

## हिमाचलप्रदेशे संस्कृतप्रसारो विकासश्च

स्वातन्त्र्यात्परं हिमाचलप्रदेशे संस्कृतप्रसारविकासविषये यदायोजनादिकं जातं तस्य सचित्रं विवरणं दिव्यज्योतिष: प्रधानसम्पादकेन श्रीमदाचार्यकेशव-शर्मणाऽस्मिन् ग्रन्थे ग्रथितम् ।

— मूल्यम् ५० रु० डाक व्यय: पृथक् —

★

त्वर्यताम्   त्वर्यताम्   त्वर्यताम्

प्रतय: स्वल्पा एव सन्ति

युगपत् पुस्तकत्रयं, अशीतिरुप्यकै: प्राप्यते

— प्राप्तिस्थानम् —

संस्कृत शोध संस्थानम्, भारती विहार मशोवरा, शिमला-७

मातस्त्वदीयचरणाम्बुरुहेषु नित्यम्
दासोऽयमेति शिरसा च नमस्करोति ।
त्वं विश्व-वृक्ष - परिपालन - कर्मणा वै
सौख्यं समृद्धिमतुलां वितनोषि लोके ।।



संस्कृतस्य सचित्रमासिकम्

वर्षम् — ३१ शिमला, अप्रैल, १९८७, अङ्कः — ७

भवतां शान्तिमयप्रशासनस्य चतुर्थवर्षपूर्तौ दिव्यज्योतिः परिवारः—वर्धापनानि समर्पयति

● विद्युद्दोहनम् ● भ्रष्टाचारनिरोधार्थं सतत—प्रयासाः ● लघुतममन्त्रिमण्डलम् ● ग्रामोत्थानाय जनजाति - उन्नयनाय चाथकप्रयासाः, साहित्यसंस्कृति-क्षेत्रेषु महत्वपूर्णयोजनानिर्माणम् ● प्रदेशविकासार्थाधिक - धनायोजनम् - अन्ये चानेके प्रयासा भवतामनन्यस्थानं देशस्य प्रदेशस्य च इतिहासे निर्मान्ति नात्र सन्देहः ।

# विषयानुक्रमः



## दिव्यज्योतिः


हिमाचलप्रदेश — पंजाब- हरियाणा-जम्मूकश्मीर मध्यप्रदेश — राजस्थान— महाराष्ट्र उत्तरप्रदेशशासन-स्वीकृतं केन्द्रशासनपुरस्कृतं सचित्रं संस्कृतमासिकम् ।


### पत्रस्य उद्देश्यानि तथा नियमाः

सरल-सरस-सुबोध-साधनैः सर्वस्मिन् संसारे संस्कृतस्य प्रसारः, साहित्यान्तर्गतानां सकलकलानां समन्वेषणं, ससारस्य हितसम्पादनम् , एवं लौकिक- अलौकिकस्वातन्त्र्यस्य प्राप्तिः ।

"दिव्यज्योतिः" प्रतिमास पञ्चदशतारिकायाम् (आङ्गलमानेन) प्रकाशितं भवति ।

पत्रस्य वार्षिक मूल्य २० रु० अर्धवार्षिकं १५ रु० एकस्याङ्कस्य च रु० १-७५ भवति।

वर्षारम्भः आश्विन—मासतः भवति । ग्राहकः कस्मादपि मासाद भवितु शक्नोति ।

ग्राहकः, "सम्पादक, दिव्यज्योतिः, भारती विहार मशोबरा, शिमला—१७१००७ हि. प्र.' इति संकेते धनादेशेन वा ड्रा. प्रेषणीयम ।

निदर्शन-अङ्कस्य (नमूना) प्राप्तये २/- रु० मूल्यं प्रेषणीयम् ।

"दिव्यज्योतिः" प्रतिमासं सम्यक् —निरीक्ष्य प्रेष्यते । यदि कश्चित् अपि ग्राहकः पञ्चविंशति-दिन यावत् पत्रं न प्राप्नुयात् तर्हि स पत्रालयात तत कारणं जानीयात् । उत्तरपत्रम जवाबी कार्ड) प्रेषणीयम यदि कार्यालयात किमपि ज्ञातव्यं भवेत

कस्या अपि रचनायां प्रकाशनाप्रकाशनयोः तथा संक्षेपसम्वर्धनादि-अधिकारः सम्पादकाधीनः । प्रकाशनार्थं प्रेषिताः रचनाः कर्गलस्य एकभागे सुस्पष्टाक्षरैर्विलिख्य प्रेष्याः । — — —

### परिचयः


संस्थापकाः तथा आद्यसम्पादकाः आचार्यश्रीदिवाकरदत्त शर्माणः, दूरभाष: 3859

प्रधानसम्पादकः— प्रा० केशव शर्मा एम. ए., एम. फिल, साहित्यरत्नम् " 8-200

दिव्यज्योतिः कार्यालयः भारती विहारः, मशोबरा, शिमला-७ (हि.प्र.)

मुद्रकः प्रकाशकः—

भारतीमुद्रणालय भारती विहार, मशोबरा-१७१००७ शिमला (हि.प्र.)

स्वामी :—श्रीमती आचार्य रत्नकुमारी शर्मा

# झञ्झा

(शैक्सपीयरप्रणीतस्य टैम्पेस्ट नाटकस्य संस्कृतरूपान्तरम्)

## तृतीयोऽङ्कः

२ अपटी

स्टेफानो :-मैवम् । यदा काचपात्रं रिक्तं भविष्यति तु जलमेव पास्यामः परं ततः पूर्वन्तु जलकणिकामपि न स्पृशामः । अतः समायाहि कुरुचाक्रमणम् । मम विचित्रदास? त्वया ममाज्ञानुसारं पेयम् ।

ट्रिक्यूलो :-विरूपोऽयं सेवकः । पिब, द्वीपस्यास्याज्ञानसूर्ते? यथा त्वमाह यदत्र द्वीपे पञ्चपुरुषाः सन्ति । तेषु त्रयो वयम् चेद्द्वावपरावप्यस्मद्विधबुद्धिवैभवशालिनो भवेयुस्तु राज्यमेवेदं प्रणष्टम् ।

स्टेफानो : पिब, विरूपसेवक ! ममाज्ञानुसारम् । तव लोचने तु प्रायस्तव शिरस्येव सन्निविष्टे स्तः ।

ट्रिक्यूलो :-तर्हि क्वान्यत्र तयोः सन्निवेशनम् ? अथ चेदनयोः संस्थापनमस्य पुच्छभागेऽभविष्यत्तु शोभनतरमभविष्यत् अयं चापि तथा ।

स्टेफानो :-मम सेवकोऽयं विरूपः सुरानिमग्नजिह्वोऽस्ति । अथ चेन्मद्विषये तु सुरासिन्धुरपि मां निमज्जयितुं नैव शक्नोति । तटावाप्तिपूर्वमहं स्वेच्छया सन्तरणं करिष्ये । प्रकाशस्यास्य शपथेन त्वामहं स्वसहयोगिनं करिष्यामि विरूपाक्ष ! अथवा त्वं मम ध्वजवाहको भविष्यसि ।

ट्रिक्यूलो :-चेत्त्वमेवं कथयसि तु नूनमेवायं तव सहयोगी परं नायं शक्तः पताकां धारयितुम् ।

स्टेफानो :-न वयं धाविष्यामः श्रीमन् विरूप ?

ट्रिक्यूलो :-चलिष्यथोऽपि न, कुक्कुर इव स्थीयते कथ्यते च न किमपि ।

स्टेफानो :-विरूप ! एकवारं तु स्वजीवने भण किमपि चेत्त्वं साधु विरूपोऽसि ।

कलिवान :-कीदृशोऽस्ति भवान् ? आज्ञापयतु मां भवदुपानहौ नेतुम् । परं नाहं तं सेविष्ये यतोहि नासौ वीरो नायकः ।

ट्रिक्यूलो :-असत्यं भाषसे महामूढ विरूप ? अहन्तु रक्षापुरुषेणापि

योद्धुं शक्नोमि। कथम्, मामिव पीतसुरः कश्चिदपरः पुरुषस्त्वया नपुंसकत्वेन व्यवहरन् दृष्टपूर्वः किमेतस्यायमाशयो नास्ति यदर्धो नरोऽर्धश्च मत्स्यस्त्वं स्वाकार इवासत्यभाषणपरोऽपि विद्यसे ?

कलिवान :-पश्य, कथमसौ मामुपहसति ? स्वामिन् किं भवानेनं न बाधते ।

ट्रिंक्यूलो :-"स्वामी" कथयति सः। आश्चर्यं खलु रासभोऽयमपि तादृङ्मूर्खः ।

कलिवान :-पश्यतु, पश्यतु तावत् पुनरप्यसावुपहसति माम्। भवताऽसौ मरणं यावद्द्रष्टव्यः।

स्टेफानो :-ट्रिंक्यूलो शिष्टभाषया व्यवहर। चेत्त्वं मम विरुद्धमाचरिष्यसि त्वग्रिमे वृक्षे त्वां लम्बायमानं करिष्ये। विरूपोऽयमपि वराको मम सेवकोऽस्ति। ममेदं कर्तव्यमस्ति यन्नायं कमपि दुःखमावहेत्।

कलिवान :-धन्यवादानर्पयामि भवते मम शिष्टस्वामिन् ? अपि त्वं मामकीनमभियोगान्तरमपि श्रोष्यसि ?

स्टेफानो : मेरीकन्याशपथेन त्वदीयमभियोगान्तरमपि शृणोमि विनयेन निवेदय सट्रिंक्यूलः अहं तच्छृणोमि।

(अदृश्यः सन् एरियलः प्रविशति)

कलिवान :-पूर्वमेवाहं तत्र भवन्तं न्यवेदयम् यदेको मायावी अतितरां कठोरव्यवहारः द्वीपमिमं मत्तो गृहीतवानस्ति।

एरियल :-असत्यम् भाषसे।

कलिबान :-त्वमसत्यं भाषसे। मर्कटायसे त्वमुपहसन्। अहं वाञ्छामि यदयं वीरो मम स्वामी त्वां विनाशयेत्। नाहमसत्य वदामि।

स्टेफानो :-ट्रिंक्यूलो ? चेत्त्वमस्य कथायां बाधामुत्पादयिष्यसि तु नूनमेव त्वदीयदन्तत्रोटनं करिष्यामि। सशपथमिदं ब्रवीमि।

ट्रिंक्यूलो :-कथम् ? नाहमस्मै किमप्यकथयम् ।

स्टेफानो :-कथम् । नाधिकं भण । कलिवान, प्रारभस्वाग्रे ।

कलिवान :-अस्तु, मायाबलेनासौ द्वीपमिमं मत्तो जग्राह । मत्त एवेदमसौ गृह्णीयात्तु शोभनं स्यात्-यतोहि भवति तादृशी शक्तिर्विराजते न त्वस्मिन् क्षुद्रजन्तौ ।

स्टेफानो : सत्यमिदम् ।

कलिवान :-ततस्त्वमस्य द्वीपस्य स्वामी भविष्यसि अहञ्च सेवकः ।

स्टेफानो :-कथमिद भवितुं शक्नोति ? किं त्वं मां तत्र नेतुं समर्थः ?

कलिवान :-किं नहि स्वामिन् ? सुप्तमेव तमहं तुभ्यमर्पयिष्यामि । तदैव भवता तच्छिरसि नखप्रहारो विधेयः ।

एरियल :-असत्यं भणसि । अशक्तोऽसि त्वं तथा कर्तुम् ।

कलिवान :-विदूषकनेपथ्येऽयं कीदृङ् मूढो विभाति । दीनोऽयं किल । अहं सम्मानार्हं तत्रभवन्तं प्रार्थये ताड़यितुमेनम् । काचपात्रञ्चास्माद् ग्रहीतुम् । यदा चैतदस्माद्गृहीतं भविष्यति तदायं केवलं क्षारं जलं पास्यति । यतोहि नाहमेनं नवपानीयस्रोतांसि दर्शयिष्यामि

स्टेफानो :-ट्रिंक्यूलो, भीतिं मा निमन्त्रय । चेत्त्वमथ बाधाकरं शब्दमेकमपि कथयिष्यसि तदाहं निष्करुणो भूत्वा त्वामेकस्मिन् शुष्कमत्स्ये परिवर्तयिष्यामि ।

ट्रिंक्यूलो :-किमर्थम् ? मया किमाचरितम् ? तथा मया कमपि स्थानान्तरं प्रयातव्यम् ।

स्टेफानो :-किं त्वं "असत्यं भणसीति" नोक्तवानसि ?

एरियल :-त्वमसत्यं भाषसे ।

स्टेफानो :-किमहमसत्यवादी ? तर्हि गृहाण तत्फलम् । (ट्रिंक्यूलो प्रताड्यते) त्वमेतद्योग्योऽसि । पुनरपि-मामसत्यवादीति कथय ।

ट्रिंक्यूलो :-न मया तदुक्तम् । किं निर्बुद्धिः श्रवणशक्तिहीनश्च जातोऽसि ? धिक् तव पानपात्राय एषस्तावत्सुरापानप्रभावः । धिगस्मै तव दुष्टसेवकाय, पिशाचायत्तोऽसि ।

कलिबान :-हा हा हा ?

स्टेफानो :-कथयेदानीं स्वीयां गाथाम् । त्वाञ्चाहमितोऽपयातु प्रार्थये ।

कलिबान :-भृशं प्रताड्यतामेनम् । अहमपि क्षणादेव प्रताड़यिष्ये तम् ।

स्टेफानो : आवयोः किञ्चिद्दूरे स्थितो भव । आगच्छ प्रारभ व स्वीयां गाथाम् ।

कलिबान :-तथा तु, मया कथितमासीद्यत् असौ मध्यान्हे स्वपिति । अतः इदानीं तत्र गत्वा तन्मस्तिष्क भञ्जय सर्वाणि पुस्तकानि च स्वायत्तीकुरु । त्रोटय तस्य शीर्षं दण्डेन, समुत्पाटय तस्योदरं केनापि तीक्ष्णकीलेन, कर्तय तस्य मायानलिकां कयाचिच्छूरिकया । शृणु, पूर्वं तावत्तस्य पुस्तकानि स्वायत्तीकुरु ताभिर्विनासौ मामिव मूढोऽस्ति । तदा न कापि शक्तिर्न च बलमेव विशिष्टं तस्मिन् । सर्वेऽपि वेतालाः मामिव तं घृणास्पदं मन्यन्ते । भवता तस्य पुस्तकान्येव प्रथमं ज्वालयितव्यानि । असौ हि बहून्यसाधारणानि सज्जोपकरणानि धारयति यैः गृहमतीव सुन्दरं भवति । ततोऽप्यधिका सर्वसुन्दरी च तस्य कन्यका वर्तते । सः स्वयमेव तामतुलनीयां मन्यते । मया तु न काप्यपरा स्त्री दृष्टपूर्वा वमातुः साईकोरैक्सात् अस्यपुत्र्याश्च ऋते । परं सा नूनमेव मन्मातुरपेक्षयातीव मनोज्ञा ।

स्टेफानो :-अपि तादृक्सुन्दरी सा कन्यका ?

कलिबान :-एवं स्वामिन् ! सनिश्चय सा भवत्पत्नी भविष्यति त्वदर्थञ्च सुसन्ततिमुत्पादयिष्यति ।

स्टेफानो :-मूढ ! नूनमेवाहं तं हनिष्यामि । अहं राजा भविष्यामि तत्सुता च मदीया राजमहिषी । ईश्वरोऽस्मानवतु । ट्रिंक्यूलो त्वञ्चोभौ मम राजप्रतिनिधि भूतौ भविष्यतः । ट्रिंक्यूलो अपि रोचते तुभ्यमिदम् ?

ट्रिंक्यूलो :-परमं शोभनम् ।

स्टेफानो :-तर्हि हस्तमेलनं कुरु । क्षन्तव्योऽस्मि ताड़नकृते । परं यावज्जीवं शिष्टभाषां वद ।

कलिबान :-अस्यां-अर्धहोरायां स सुप्तो भविष्यति । अपि त्वं तदा हनिष्यसि तम् ?

स्टेफानो :-एवम् । स्वमानशपथपूर्वकं प्रतिज्ञां करोमि ।

एरियल :-अहं स्व स्वामिनमेतेन सूचयिष्यामि ।

कलिबान :-भवान् मामानन्दयति । प्रसन्नोऽस्मि । प्रसन्नैश्चास्माभिर्भाव्यम् । किं भवान् तस्यामेव स्वरलहर्यां गास्यति यां भवान् मामशिक्षत् ?

स्टेफानो :-तव प्रार्थनायां सर्वमपि समुचितं करिष्ये ।

"आयाहि ट्रिंक्यूलो गेयमस्माभिः
हसन्तु तानुपहसन्तु तान्
सुविहसन्तु तान्नवहसन्तु तान्
यतो विचारे स्वातन्त्र्यम् ।"

कलिबान :-नैषः स्वरः ।

पार्श्वमृदंगमुरलिकावादनेन स्वरमुद्भावयति ।

स्टेफानो :-इदमपि तदेव ?

ट्रिंक्यूलो :-कश्चिददृश्योऽस्मानेवानुकरोति ।

स्टेफानो :-चेत्वं कश्चिन्मानवोऽसि तु मानवरूपेणोपस्थितो भव । अथ चेत्पिशाचोऽसि तु यस्यां कस्यामपि आकृत्यां प्रकटो भव ।

ट्रिंक्यूलो :-ईश्वरो ममापराधान् क्षमेत ।

स्टेफानो :-यः कश्चिदपि म्रियते स किल सर्वेभ्योपि जीवनदुःखेभ्यो मुक्तो भवति । अहं तत्राह्वानं करोमि । हे ईश्वर ! दयस्वास्मासु ।

कलिवान :-अपि भीतभीतौ भवन्तौ ?

स्टेफानो :-नैव राक्षस, नाहं भीतोऽस्मि ।

कलिबान :- मा विभ्यतः । द्वीपोऽयमेतादृग्ध्वनिमधुरगुञ्जनादिभिश्च पूर्णोऽस्ति । न चैतेन कापि हानिर्भवति-अपित्वानन्दमेवायाति कदाचिदहमपि तादृक्शब्दान् शृणोमि यथा किल समस्तवाद्य-क्वणितं भवेत् । कदाचिच्चैतादृग्ध्वनिः संश्रूयते येनाहं विनिद्रितो भवामि । परं तत्क्षणमेव तन्माधुर्येण निद्रा समायाति । अथानन्तरमहमेकदा मेघमेकं स्वप्नेऽपश्यम् । स हि स्वात्मानमुद्घाट्य कस्यापि कोषस्य चित्राणि ममोपरि वर्षितुमैच्छत् तदैव मम निद्राऽपगता । परं तत्क्षणमेवाहं स्वपितुं स्वप्नद्रष्टुञ्चैच्छम् ।

स्टेफानो : कीदृशं विचित्रं मधुरञ्चेदं राज्यं भविष्यत्यस्माकं कृते तत्र हि निःशुल्कमेव संगीतश्रवणम् ।

कलिवान :-परं सति नष्टे प्रोस्पेरो महाशये एव तल्लाभः ।

स्टेफानो :-अधुनैव तत्सर्वं करिष्ये । सर्वं किल स्मरामि यदपि त्वयोक्तम् ।

ट्रिंक्यूलो : ध्वनिर्लुप्यति । अस्माभिरस्यानुसरणं विधेयं संगीतकस्य ततश्च कूट-प्रबन्धः स्यात् ।

स्टेफानो :-दर्शय राक्षस, आवामनुसरिष्यावः । पश्याम्येनं मृदंगवादकं यो हि मग्नमनसा वादयत्येनम् ।

ट्रिंक्यूलो :-अपि त्वमागमिष्यसि ? अहं नूनमेवानुसरिष्यामि स्टेफानो ?

## ३ अपटी

### (एलोन्सो सेबास्टेन-एन्टोनियो-गोञ्जेलो-एड्रियन - फ्रांसिस्को तथाऽन्ये प्रविशन्ति)

गोञ्ज़ेलो :-अहो "मेरी" कन्या ? श्रीमन्नाहमधिकं चलितुं शक्नोमि । ममास्थिषु पीड़ा । अतीव दुर्लङ्घ्योऽयं मार्गः । क्वचित् सम,

कुत्रचित् गोलाकारः । तथापि मया साकं धैर्यमावह । नूनमेवेदानीं विश्रामो विधेयः ।

एलोन्सो : वृद्धमन्त्रिवर ? नाहं त्वामाक्षिपामि । अहं किल स्वयमपि श्रान्तोऽस्मि शक्तिश्च मेऽपक्षीयते । अतः उपविश्यतां विश्रम्यताञ्च । स्वपुत्रजीवनाशापि मयात्रैव त्याज्या । निमग्नएवाऽसौ किल यस्यान्वेषणपराः वयमितस्ततो भ्रमामः । एवं प्रतीयते यथायं सिन्धुरस्मानुपहसतीव । यतोह्यसौ तं कवलयामास वयञ्चात्र भूमौ तमन्वेषयामः । अस्तु, म्रियेत सः ।

एन्टोनियो :-(एकतः सेवास्टेनं प्रति)

अस्य निराशा नोऽस्तु कल्याणाय । एकबारं सफले सति प्रयासे पूर्वनिर्मिता सा योजना न त्यक्तव्या ।

सेबास्टेन :-(एकतः एन्टोनियो महाशयं प्रति)
समागन्तुकस्यावसरस्य सुप्रयोगं करिष्यावः ।

एन्टोनियो :-(एकतः सेबास्टेनं प्रति)
अस्यामेव निशायामपि । यतोह्युभावपीमौ मार्गखेदश्रान्तौ । पूर्ववदिव च नेमौ स्वरक्षणसक्षणौ लगतः ।

सेबास्टेन :-(एकतः एन्टोनियोमहाशयेन मन्त्रयन्) स्वीकृतम् । अस्यामेव रात्रौ । नात्र विलम्बावकाशः ।

(गम्भीरं विचित्रञ्च संगीतकम्)

एलोन्सो :-मम प्रियमित्र, शृणु तावत् कीदृशमिदं संगीतकम् (अदृश्यः प्रोस्पेरो प्रविशत्यपरि - आकाशे । काश्चन विचित्राकृतयोऽपि स्वादुभोजनहस्ताः समवतरन्ति । स्वागतनृत्यं कुर्वाणा राजानं तथापरान् भोक्तुमामन्त्रणानन्तरं चापयान्ति)

एलोन्सो :-ईश्वरोस्मान् पातु । क एते आसन् ?

सेबास्टेन : केवलं जीवितप्राणिसहयोगजं पुत्तलिकानृत्यम् । इदानीमहं दृढं विश्वसिमि यदेषा गण्डकादीनां विचित्रजीवानां भूमिः ।

एवमेवारण्यदेशे एकान्तरं भवति यत्र कविकल्पितः स्वभस्मज-न्मपक्षी समुपाविशति-इदानीमपि यस्य तत्र शासनमिति ।

एन्टोनियो :-सज्जोऽस्म्युभयवस्तुनो विश्वासं कर्तुम् । यत् किमप्यविश्व-सनीयं समापतेत्तत्सर्वं सत्यमिति सशपथं ब्रवीमि । पर्यटकाः न कदापि मिथ्याभाषिणस्तथापि तान् गृहनिवासिनो मूर्खाः व्यर्थमेव निन्दन्ति ।

गोन्जेलो :-चेदहं नेपलेसेऽभविष्यं तथा तत्रैनां घटनामकथयिष्यन्तु किं कोऽपि विश्वासमकरिष्यत् ? यद्यहमकथयिष्यं यन्मया विचित्रा द्वीपनिवासिनो दृष्टाः सर्वेऽप्येतेऽस्य द्वीपस्य निवासिन एव सन्ति ये किल सन्तोऽपि विरूपाः सर्वतः सभ्याः कृपालवश्चात्र यादृशा किल केचन एव भवन्ति । तेऽपि च क्वचिदेव लभ्यन्ते ।

प्रोस्पेरो :-(एकतः) सत्यनिष्ठ मन्त्रिवर ! सत्य भाषसे । यतोहि समुपस्थितेष्वत्र लोकेषु केचन पिशाचेभ्योऽपि निकृष्टतमाः ।

एलोन्सो : नूनमेवाश्चर्यकरास्ता एता एवंविधा आकृतय. याः स्व-संकेतैः शब्दैश्च मूकभाषायां सर्व. पष्टतया वर्णयन्ति ।

प्रोस्पेरो -(एकतः) समापनकालाय स्व प्रशंसां सुरक्षितां रक्ष ।

फ्रांसिस्को :-वैचित्र्येणैव ता विलुप्ताः

सेबास्टेन :-न कापि चिन्ता यतोहि सर्वमपि भक्षणीयमत्रैवास्ते, वयञ्च सर्वे बुभुक्षिताः । मानार्हा राजानस्तावदस्यास्वादनेन कृपयिष्यन्ति ।

एलोन्सो :-अलं तावदनेन ।

गोन्जेलो : श्रीमन् मयि विश्वासो विधेयः, न भवता किमर्थमपि भेत-व्यम् । यदा वयं वालकाः आस्मः, नहि केचिदपि विश्वसन्तिस्म यत् क्वचित्पर्वतीयाः अपि भवन्ति येषां कण्ठदेशे वृषभ इव कम्बलं भवति ग्रीवायां चोक्षम् । नैव कश्चिदपि विश्वासम-करोद्यत् केचनपुरुषाः वक्षस्थले शिरसि धारयन्ति । इदानीं

वयं सर्वमपीदं प्रत्यक्षी कुर्मो यत्तैर्यात्रिभि र्यैः केवलमेकस्वर्ण मुद्रा-व्ययेन स्वजीवनं पञ्चस्वर्णमुद्रार्थं सुरक्षितं कृत्वा पूर्वमेव प्रमाणितम् ।

एलोन्सो :-अस्तु तावत् भक्षयिष्ये परमित्थमनुभूयते यथेदं ममान्तिमभोजनम् । ततोऽपि नेदं विशिष्टं यतोहि मम जीवनानन्दकालः भुक्तपूर्व-इदानीम् । भ्रातः ! ममेश, राजन्, आयाहि याञ्चानुसारं मेघगर्जनं विद्युद्दीपनञ्च । एरियलः गृध्रत्वेन प्रविशति फलकस्योपरि, स्वपक्षौ सञ्चालयति विचित्रमायाप्रभावेण भोजनञ्च लुप्यति)

एरियल :-त्रय एव यूयं पापमूर्तयः । अत एव विधात्रा प्रेरितोऽयं बुभुक्षितः सिन्धुरपि युष्मानत्रास्मिन्नेकले द्वीपे प्राक्षिपत् यतोहि मानवेषु निवासयोग्यता भवत्सु वर्तत एव नहि । मयैव भवन्तो नैराश्यं नीताः । इयञ्च निराशा-एतादृङ् निराशा पीडितश्चात्मघातमेव कुरुते ।

## (एलोन्सो–सेबास्टेनादयः स्वखड्गान् समाकर्षन्ति)

रे मूर्खाः ! वयं-अहं मम सहचराश्च विधिदूताः । धातुरयं येन भवदसयो विनिर्मितास्तीक्ष्णीकृता वा केवलं वायुप्रवाहं

जलप्रवाहमेव वा छेत्तुं प्रभू यौ हि प्रतिप्रतिघातानन्तरं तत्क्षणमेव पूर्णौ भवतः एवञ्चोभाभ्यां भवत् प्रहारोपहासः करिष्यते। मम पक्षतेरेकमपि पक्षं छेत्तुं न यूयं समर्थाः। मम सहचरा अपि मामिव समर्थाः। चेद्यूयमस्मान् छेत्तुमपि प्रभवथ ततोऽपीदानीं भवतामसयस्तादृशाः सन्ति या समुत्थापयितुमेवासमर्थाः भवन्त। परं स्मरणीयम् अहं भवद्भिः सम्बद्धोऽस्मि। युष्माभिस्त्रिभिरेव सुसज्जनः प्रोस्पेरो स्वदेशान्निष्कासनात् प्रवासितः स एव च तद्बालिकासहितः सिन्धौ प्रक्षिप्तः। परं सिन्धुरेव तौ ररक्ष। अत एव ईश्वरेण भवतामपराधो न विस्मृतोऽपितु दण्डविलम्ब एव कृतः। इदानीञ्च सर्वापि प्रकृतिर्भवद्विरुद्धा।

सिन्धुतटोऽयं सर्वंचान्यदपि। एलोन्सो ईश्वरेणैव त्वदीयपुत्रो निहतः। इदानीञ्चाहमादिष्टोऽस्मि तात्कालिकमृत्योरधिकतरपीड़ा पदे पदे भवद्भ्यो दीयेरन्निति समादेशेन। प्रकृतिः प्रकोपवारणाय-यस्य प्रभावः शीघ्रमेव भवत्सु समापतेत् स्वकीयापराधस्वीकृति-पुरः सरं विशुद्धजीवनयापनस्य प्रतिज्ञां कुर्वन्तु भवन्तः।

(मेघगर्जनेन सहैव लुप्तो भवति। ततः मधुरसंगीतेन सहैवाकृतयः प्रविशन्ति पुनर्नृत्यन्ति च सपरिहासं सधान्योत्करञ्च फलकमपि वहिर्नयन्ति)

प्रोस्पेरो :-मम एरियल, त्वं किल गृध्रस्याभिनयं परमकौशलेन सम्पादितवानसि। चित्ताकर्षकमासीत्तत्। ममाज्ञा त्वयाक्षरशः पालिता। एवमेव च स्वल्पशक्तयोऽपि दूताः सजीवमाश्चर्योत्पादकञ्चाभिनयं चक्रिरे। मदीया शक्तिमयी माया 'तत्सर्वं' सम्पादितवती यन्मदीप्सितमासीत्। मम शत्रव इदानीं किं कर्तव्यविमूढाः। ते सर्वथा मदायत्ताः। इदानीं मयापयातव्यमितः फर्डीनन्दश्च द्रष्टव्यो यं हि सर्वे मृतमेवेति कल्पयन्ति। तस्य प्रियां पत्नीं स्वपुत्रीमपि च मिराण्डां द्रष्टुकामोऽस्मि।

(ऊर्ध्वभागादेव रंगमञ्चं परित्यजति)

गोञ्जेलो :-पृच्छामि तावत्, किमर्थं भवन्तः केषाञ्चिद्देवानां नामश्रवणमात्रेणैव तथा जड़ीभूताः ?

एलोन्सो :-अहो नु खलु कष्टम् ! चिन्तयामि-किं सिन्धुलहरीभिः समुद्बोधितोऽस्मि वायुभिः वा फूत्कारेण वा मेघगर्जनेनाथवा निनादव्याजेन प्रोस्पेरो नामग्रहणं कृतम् । केवलं मम दुष्कर्मप्रतिफलमिदम् । अतो विचारयामि यन्मदीयसूनुरसौ फर्डीनन्दो गहने सिन्धुपङ्कपर्यङ्के स्वपिति, मयापि गहने जले निमज्जितव्यम् तेनैव सह च शयनीयम् ।

(रङ्गमञ्चं परित्यजति)

सेबास्टेन :-चेदेकैकेन योद्धव्यं भवेत्तु नूनमेव तेषां वाहिन्या सहापि योद्धुं शक्नोमि ।

एन्टोनियो :-अहमपि त्वदीयः सहयोगी भविष्यामि ।

गोञ्जैलो :-सर्वेऽपि त्रय प्रमत्ताः । तेषां कृष्णकर्माण्येव विषमिव चिरात् स्वप्रभावं प्रदर्शयन्ति एतेषामात्मैव तान् पीड़यतीदानीम् । अहं किल प्रार्थये त्वाम्-त्वं हि वेगेन धावितुं शक्नोसि, यत् शीघ्रमेवताननुसर । रक्ष तान् कस्मादपि तथाविधकृत्यात्येन ते निराशायां किमपि निराशामयं साहसिकं कर्म न कुर्युः ।

एड्रियन :-अनुसर, निवेदयामि ।

(तेऽपि रंगमञ्चं परित्यजन्ति)
इति तृतीयोऽङ्कः –

## चतुर्थोऽङ्कः

(प्रोस्पेरो महाशयस्य गृहाग्रभागः । प्रविशन्ति फर्डीनन्दः, मिराण्डा प्रोस्पेरो-एते सर्वे ।)

प्रोस्पेरो :-मामकीनेन कटुव्यवहारेण यदपि महत्कष्टं त्वयावाप्तं तथापि तत्किलानेन यत्त्वमाप्तवानसि तेन स्वल्पं स्यात् । अहं तुभ्यं स्वजीवनाधारभूतां पुत्रीं मिराण्डामदाम् यस्यै जीवितोऽहमद्याvधि । एकवारं पुनरहं तां तुभ्यमर्पयामि यान्यपि कष्टानि त्वयात्राप्तानि किल तत्र परीक्षाभूतान्यासन् । इदानीं सर्वासु परीक्षासु त्वमुत्तीर्णः । अथाह पुनरपि ईश्वरसाक्षित्वेन बहुमूल्यमिदमुपहारं तुभ्यमुपाहरिष्ये । फर्डीनन्द, न त्वयाहमुपहसितव्योऽस्मि स्वसुताया गुणानुपवर्णयन् । काले त्वं स्वयमेवानुभविष्यसि यत् ममोपमातोऽपीयं श्रेष्ठतरा सेत्स्यति ।

फर्डीनन्द :-चेद्भगवद्वाणी-अप्यत्र विरुद्धं भाषेत ततोऽप्यहं सर्वथा विश्वसिमि ।

प्रोस्पेरो :-तर्हि गृहाण मम सुतां-मदुपहृतमुपहारम्वा । तावकीनं वस्त्विदं यत्त्वं बलिदानानन्तरं कष्टेन प्राप्तवानसि अथ चेत्त्वं विवाहस्य पावनसंस्कारात्पूर्वमेव विनाशयिष्यति कन्यात्वमस्यास्तदा देवाशीर्वादः- उभयोरपि जीवनसाफल्यार्थं युष्मासु नहि वर्षिष्यति । भयंकरा घृणा, कटुताऽन्ये च बहुविधा दोषाः युवयोः विवाहशय्यां तथा तथा प्रपूरयिष्यन्ति येन स्वसंयोगमेव भवन्तौ घृणास्पदमनुभविष्यतः । अतः स्वजीवनं मन्त्रप्रकाशेन प्रकाशयितुमिच्छथश्चेत्तदा शीघ्रमेव सर्वथा दत्तावधानौ भवतम् ।

फर्डीनन्द : सुखमयदिवसाप्ति-इच्छा, सुन्दरसन्ततिकामना दीर्घप्रेमपूर्णजीवनेहा च सर्वमपीद पूर्णम् ।

भवद्भिर्मयि विश्वासो विधेयः न चान्धकारपूर्णः प्रकोष्ठः न चापि स्ववसरः, न शक्तिमयी कामवासना या मानवस्वभावानुसारमुदेति एतत्सर्वं मामकीनां पवित्रप्रीतिं कमप्यनुचितकार्यं प्रति प्रेरयितुं शक्ष्यति मम परिणयदिवसे, अहं च कामये यत्सूर्याश्वाः श्रान्ताः सन्तु निशा च पृथिव्यामन्तरे निगडिता ।

प्रोस्पेरो :-साधूक्तं त्वया । इदानीमनया सहोपाविश । सा त्वदीया स्वकीया एव । एरियल, मम कार्यकुशलसेवक एरियल ?

(एरियलः प्रविशति)

एरियल :-मम सर्वशक्तिमान् स्वामी किमाज्ञापयति । एषोऽहमस्मि आज्ञापालकः ।

प्रोस्पेरो :-त्वया, त्वदधीनैश्चापरसेवकैश्च स्वकर्तव्यपालनं परमकौशलेन कृतम् । इदानीञ्च पुनरपि तादृशस्यैवार्थपूर्णस्य कार्यस्य कृते युष्माकमुपयोगं चिकीर्षामि । गच्छ वैतालानामामन्त्रयितारं समानय यस्योपरि तव पूर्णाधिकार य व्यवस्था विहिता । त्वरया तान् समादिश । अद्याहं स्वमाया-प्रभावेण नवदम्पति-मेनं किमपि चमत्कारं प्रदर्शयिष्ये । मयेदं किल पूर्वप्रति-ज्ञातम् । तावपीदमिच्छतः ।

एरियल :-अपि त्वरयेदं सम्पादनीयम् ?

प्रोस्पेरो : केवलं पक्ष्मपरिवर्तनेन साकम् ।

एरियल :-यावद् भवान् 'आयाहि-गच्छ' इति शब्दद्वयमुच्चारयति, वारद्वयं वाश्वासं गृह्णाति तथा तथैति च वक्ति तावदेवात्र वेतालाः सुमधुरनृत्यं कुर्वन्तः सधन्याः सोल्लासाश्च दृष्टिपथ-मवतरिष्यन्ति । अपि मम स्वामी तुष्टः ? न वा ?

प्रोस्पेरो :-परं तुष्टोऽस्मि मम प्रिय एरियल, मा आयाहि तावद्यावदहं नाज्ञापये ।

एरियल :-शोभनमिदम् । सर्वं जाने ।

(रंगमञ्चं परित्यजति)

प्रोस्पेरो :-पश्य, स्वशब्दान्प्रति दृढो भव । तुमुलकोलाहलोत्सवसञ्चा-लनेऽस्मिन्नाधिकभावुको भव । दृढनियमैर्घासिनाग्निरिव भाव-नाजागृति र्वेगेन जायते । अतोऽतीव सावधानो भव । चेदिदं कर्तुमसमर्थोऽसि तदा परित्यज सर्वम् ।

फर्डीनन्द :-विश्वसतु भवान् हिमधवला मामकीना पावना कौमार-प्रीतिः सर्वदा वासनां विजयते ।

प्रोस्पेरो :-साधु । एरियल ? आगच्छेदानीम् । समानयाधिकान्

वेतालान् यावन्तः किलास्य छद्मनृत्यस्य कृतेऽभीष्टाः । शीघ्र कुरु । मौनपूर्वकं पश्यन्तु । मौनं किल ।

(मधुरसंगीतकम्)

(पुत्तलिकानृत्यम् । इन्द्रधनुः प्र विशति)

इन्द्रधनु :-अयि वनदेवि ? त्वमतीव प्रियदर्शनामि नितान्तोर्वरभूमिखण्ड-प्रधानासि यत्र गोधूमयव-कलायाद्यन्नानां बाहुल्यं भवति । शष्पश्यामानां पर्वतानामपि त्वमेव देवी यत्र किल मेषाश्चरन्ति । तेभ्यो हरितगोचरभूमयः खाद्यं प्रयच्छन्ति । भवत्या नदी-तटभूमयः पीनपुष्पैर्वेतसैश्च परिपूर्णाः, ज्येष्ठमासि च जलकणिकाभिस्तवाज्ञया पुष्पपूर्णा येन किल संयतात्मानो देव्यः ज्येष्ठमासीयपुष्पैः स्वालङ्करणं कुर्वन्तु । तावकीना भ्रुण्ट-क्षुपाः प्रेमिकाभिस्तिरःकृतान् युवकान् स्वच्छाययाच्छादयति । त्वमसि खलु द्राक्षा-क्षेत्रस्वामिनी येषु स्तम्भानामालिङ्गनं कुर्वन्त्यो द्राक्षालताः शोभन्ते । भवती ऊषरभूमिषु शिलामय-सिन्धुतटेषु वातास्वादनं करोति । नवयौवनारूढा इन्द्राणी-किल स्वर्गदेवता, यस्या इन्द्रधनुः सन्देशवाहिका चाहं-तत्र भवतीं सर्वाण्यपि स्थानानीमानि त्वक्त्वा श्याम-शष्प-शासिते-ऽस्मिन् प्रदेशे स्वसाकं क्रीडितुमायातुमाज्ञायति । सा हि मयूरवाहनारूढा क्षणादेवात्रागमिष्यति । अतोऽपि सौन्दर्या-गारे वनदेवि ? तस्याः स्वागतार्थमत्रायाहि ।

(वनदेवतायाः प्रवेशः)

वनदेवी :-इन्द्राण्याः विविधरंगरजितस्य सन्देशहरस्याभिनन्दनं करोमि यो हि तस्यमाज्ञाभङ्गं जातुचिदपि न करोति । त्वं किल स्वकेशरवर्ण पक्षेभ्यो मधु इव मधुरजीवनाधारान् वर्षाविन्दूनभिवर्षसे मम पुष्पोद्यानेषु । अथ च नीलेन्द्रधनुषोऽन्तिम भागाभ्यां वृक्षान्वितानि क्षेत्राणि तरुरहितानि चोषरभूखण्डानि चालंकरोषि । कथय किमर्थमाहूताहमत्र शाद्वलस्थले भवत् सम्राजा ?

इन्द्रधनु:- विवाहोत्सवमेकं मानयितुं त्वमत्रामन्त्रितासि, पुनश्च वरवधू-भ्यामाशीर्वादप्रदानायापि ।

वनदेवी :-कथय स्वर्गीयधनु: ? अपि साम्राज्ञ्या सह रतिस्तस्या: पुत्रश्च कामोऽपि समागच्छत: ? यतोहि यमेन ताभ्यां सहैव मिलित्वा षड्यन्त्रमेकं विरच्य मम दुहिता गृहीता । अत एव मया तयो: कुसङ्गस्त्यक्त: ।

इन्द्रधनु :-तयो: सम्बन्धे न कापि चिन्ता कार्या मया रतिस्तस्या: सूनुश्च काम उभावप्याकाशमार्गेण संचालितरथेन पाफोसनगरं प्रति-गच्छन्तौ समवलोकितौ । ताभ्यामुभाभ्यामपि युगलेऽस्मिन् स्वमायाजालप्रक्षेपणमीहितमासीत् येन विवाहसंस्कार समाप्ति यावत्तयो: पवित्रतया निवासप्रतिज्ञा मोघा भवेत् । परमत्र ताभ्यां साफल्यं नावाप्तम् । अतो मंगलस्य सेविका रतिरप-याता तस्या दुष्टपुत्रश्च स्वशरान् वभञ्ज शपथञ्च जग्राह यदसौ वाणप्रक्षेपं नाचरिष्यति-अपितु कमपि बालमिव चट-काभि: क्रीडिष्यति ।

वनदेवी :-दिव्या साम्राज्ञी देवाधिदेवता इन्द्राणी समायाति । तस्या गत्या एव तस्यागमनं जानामि ।

(इन्द्राणी प्रविशति)

इन्द्राणी :-मम स्वसे प्रियदर्शिनि वनदेवि ? त्वं कीदृशी असि ? आयाहि मया साकं युगलोऽयमाशीर्वचसाभिनन्दनीयो येनायं पुत्रपौत्रै: पुष्पित: फलितश्च भूयात् ।

(उभे गायत:)

इन्द्राणी :-

सम्मानं बहुसम्पत्तिं विवाहस्य शुभं फलम् ।
चिरकालाय युग्मोऽयमाप्नुयाद् वर्धयन्निव ॥
प्रतिहोरावसाने च शुभं स्यादमितं किल ।
इत्थमेषाहमिन्द्राणी ह्याशीर्वादान् ददामि वै ॥

वनदेवी :

प्राप्नुयातां बृहद्धान्यमन्नागारान् सुपूरितान् ।
लताः स्युः पुष्पिता नम्रा मृद्वीका तवकैरहो ॥
फलवृक्षा विनम्राः स्युः भवेयु र्वाटिकावनी ।
शरदन्ते वसन्तर्तुरागच्छेद् भवतां भुवि ।
न च तत्र प्रभावोऽस्तु हेमन्तस्य कथंचन ।
नाकालः पीडयेद्युष्मान् वनदेव्याः प्रसादतः ॥

फर्दीनन्द :-अतिशोभना परिकल्पना सुमधुरञ्च संगीतकम् ।

किमहमिति कथनस्य दुःसाहसं कर्तुं शक्नोमि यदेताः सर्वा अप्सरसः ?

प्रोस्पेरो : अप्सरसः या हि मदादेशेन मदीयविचारान्प्रस्तोतुं स्वावासादत्र समायाताः ।

फर्दीनन्द :-अहन्तु-आजीवनमत्र स्थातुमीहे । दिव्यो हि पितायं परमबुद्धिमान् स्वकार्यैश्चेदं स्थानमपि देवलोकमिवापरं विदधाति ।

(इन्द्राणी वनदेवता च मिथः किमपि मन्त्रयतः+इन्द्रधनुषं किमपि कार्यं कर्तुञ्च प्रेषयतः ।)

प्रोस्पेरो :-प्रिय वत्स ? मौनं किल । इन्द्राणी वनदेवता च कामपि गम्भीरमन्त्रणामकुर्वताम् । इदानीं किमपि विशिष्टदर्शनीयमस्ति । मौनं, शान्तं येन रसभङ्गो न भवेत्

इन्द्रधनु : भवत्यः सर्वा दिव्या जलदेव्यः, वेत्रमुकुटालंकृताः कस्याप्यनिष्टमिच्छन्त्यः प्रतीयन्ते । सभायान्त्वत्र शाद्वलदलमण्डितस्थले त्यजन्तु च तरङ्गतरलध्वनिनिर्झराणि । इन्द्राण्या आमन्त्रणमादेशश्चाप्येषः । भवत्योऽकामाः शीतलाश्च देव्यः समायान्तु युवयोर्विवाह-समारोहे साहाय्यं कुर्वन्तु । विलम्बो मा विधेयः ।

(काश्चिद्देव्यः प्रविशन्ति)

सर्वे यूयं समातप्ताः सूर्यस्य प्रखरैः करैः ।
श्रान्ताः ह्यगस्त मासेऽस्मिन्स्वक्षेत्रेभ्यः कृषीवलाः ॥

समायान्तु शुभे स्थाने परमानन्दवर्धिताः ।
विश्राम्यतां हि सानन्दं स्वशिरांसि तथा पुन ॥
धान्यपत्रैरलंकृत्य साकं दिव्याङ्गनादिभिः ।
लोकनृत्ये मिलित्वात्र शुभां शोभां विधीयताम् ॥

(केचन शस्यकर्तनपराः सुन्दरवसनवेष्टिताः नराः प्रविशन्ति । ते च विद्याधरीभिः सह सुमधुरनृत्यमाचरन्ति । सहसैव प्रोस्पेरो भाषणमारभते । तदनन्तरं परितः शून्यमाश्चर्यञ्चावभासते संक्षुब्धकोलाहलेन सह । सर्वे शनैः २ कष्टेन लुप्यन्ते ।)

प्रोस्पेरो :-(एकतः) अहो नु खलु विस्मृतमेव कुटिलकलिवानस्य तथा तत्सहयोगिनां षड्यन्त्रं यत्तैर्मद्जीवनविरुद्धं रचितमासीत् । तेषां षड्यन्त्रप्रयोगकालोऽयं समायात एव ।

(यक्षान् प्रति) अतिसुन्दरम् । गम्यतामिदानीम् नास्ति किमप्यवशिष्टम् ।

फर्डीनन्द :-विचित्रमिदम् । केनिचित् कारणेन तव पिता संक्षुब्धोऽस्ति । जातस्तत एव प्रचण्डोऽयमस्य व्यवहारः ।

मिराण्डा :-नाहमपि तं तथा क्रुद्धं कठोरव्यवहारपूर्णञ्चपूर्वं कदाचिदप्यालोकयम् ।

प्रोस्पेरो :-प्रिय पुत्रक ? किं भीतोऽसि अनेन मम विचित्रव्यवहारेण । प्रसन्नो भव । हर्षप्रदमिदमस्माकं नाटकमिदानीं समाप्तिमेति । सर्वेऽप्येते येऽत्र नाटकेऽस्मिन्भागं जगृहुः यक्षराक्षसवेतालाः आसन् । इदानीमेते वायावस्तं गच्छन्ति लुप्यन्ति च ।

इमं दृश्यमिव - यस्याधार एव नास्ति अभ्रंलिहानि भवनानि, विचित्राः प्रासादाः, पावनमन्दिराणि, स्वयञ्चैषा भूमिरपि - या सर्वाणि वस्तूनि धारयति - सर्वमपीदं विनङ्क्ष्यति । इत्थमेव चेदं प्रहसनम् । नास्य किमपि चिन्हमात्रमपि शेषं भविष्यति । अस्माकं जीवनमिदं स्वप्नवत् क्षणिकं

यदस्माकं मृत्युना सहैव समाप्तिमेति । श्रीमन् ? अहमिदानीं संक्षुब्धोऽस्मि । भवद्भिरेषा मामकीना त्रुटिः क्षन्तव्या । अस्य वृद्ध-शरीरस्य मानसं विविधचिन्तासन्तानविताناकुलम् । अतोऽस्माद् भवता न भेतव्यम् । चेत्त्वमिच्छसि तु मदीयगुहायां गच्छ तत्र च विश्रामं कुरु । अहं किल किञ्चिद् भ्रमणं कृत्वा स्वीयमशान्तचित्तं शान्तं करिष्यामि ।

फर्डीनन्द मिराण्डा च :-आवां भवतां मानसिकशान्तिं कामयावहे ।

(उभौ गच्छतः)

प्रोस्पेरो :-मच्चिन्तनेन सहैवायाहि । सधन्यवादमहं त्वामाह्वयामि ।

(एरियलः प्रविशति)

एरियल :-सज्जोऽस्मि भवतामादेशं पालयितुम् । किमादिशति भवान् ।

प्रोस्पेरो :-यक्ष ? अस्माभिरिदानीं कलिवानस्य साम्मुख्यं विधेयम् ।

एरियल :-शोभनं स्वामिन् ? यदाहं वनदेवतायाः प्रतिनिधित्वमकुर्वम् तदैव मया तथा निवेदनीयमासीत्परं भवतां भयेन नानुष्ठितं तथा ।

प्रोस्पेरो :-कथयेदानीं तान् दुष्टान् त्वं कुत्रास्थापय ?

एरियल :-मया पूर्वमेव निवेदितमासीत् यत्ते सुरापानमत्तातीवप्रमत्ताः आसन् । वायुस्तैरेतदर्थं प्रताड्यतेस्म यत् स किमर्थं तेषां मुखोपरि प्रवहति पृथ्वी चेतदर्थं यत् सा कथं तेषां चरणचुम्बनं करोति । ततोऽहमपि स्वकीयवाद्यमवादयम् । इदं श्रुत्वा ते स्वकर्णान्लोचनानि चोर्ध्वं कृत्वा नासिकाश्चापि येन संगीत-कमाघ्रातुं शक्ताः भवेयुः । ततश्च मदीयां कर्णमधुरां ध्वनिं श्रुत्वा ते मां विविध कंटकाकीर्णगुल्मपथा तथानुसस्रिरे यथा गां वत्साः । अनेन च तेषां जङ्घा पूर्णरूपेण प्रपीडिताः बभूवुः । अन्ते चाहं तान् मलपूरित तड़ागस्य पार्श्वेऽत्यजं यो हि श्रीमतां गुहाग्रे वर्तते । ते च तत्र तड़ागे निमग्नाः सन्ति यो हि तड़ागस्तेषां चरणदुर्गन्धतोऽप्यधिकदुर्गन्धमयः ।

प्रोस्पेरो : मम सपक्षयक्ष ? त्वयातीवोचितं कृतम् । परमधुनापि त्वयादृष्टयैव भाव्यम् । मदीयावासे गुहायां गच्छ ततश्च प्रकाशमानानि वसनान्याहर । येन तानि चोरयितुं तेऽत्र समाकृष्टाः स्युः ।

एरियल :-अयमहं गच्छामि ।

(प्रस्थानम्)

प्रोस्पेरो :-जन्मकालादेवायं पिशाच । शिक्षयापि कथंचिदपि प्रभावितो न भविष्यति । एनं शिक्षयितुं यान्यपि कष्टानि मया प्रेम्णा सोढानि तानि सर्वाण्यपि व्यर्थमपयातानि । यथा किल वयोवृद्धत्वेन सहास्याकृतिर्विरूपा भवति तद्वदिव बुद्धिरपि अस्य विरूपत्वमावहति । अतस्तानहं तथा प्रपीड़यामि यथा ते पीड़या चीत्कुर्युः । (एरियलः पुनः प्रविशति विद्योतितवसनैः सह) आयाहि सर्वाणि चैतानि निम्बुकवृक्षस्यास्योपरि लम्बय ।

(प्रोस्पेरो एरियलश्चादृश्यौ निवसतः । कलिबानः, स्टेफानो ट्रिंक्यूलो च सर्वथा क्लिन्नाः प्रविशन्ति ।

कलिबान :-निःशब्दं चलन्तु । पादध्वनिस्तत्कर्णगोचरा न स्यात् । एष तस्य गुहाग्रभागः ।

स्टेफानो :-राक्षस ? त्वयोक्तमासीद्यत्तवाप्सरा न कामपि हानिमुत्पादयति परं सात्वस्मान् निरन्तरं प्रपीडयामास अपि मूढ शृणोसि सर्वं ? यद्यहं त्वया क्रुद्धोऽभवँस्तु पश्य...

ट्रिंक्यूलो :-तदा तव नामापि न स्यात् ।

कलिबान :-प्रभो, इदानीमपि दयस्व मयि । धैर्यं धारय । यदपि पारितोषिकमहं तुभ्यं दापयितुमिच्छामि तं प्राप्य त्वं मामकीनां धृष्टतामिमां न गणयिष्यसि । अतः शनैरेव वक्तव्यम् । यतोहि सर्वमपीदानीं सुशान्तमस्ति । यथा किलार्धरात्रौ भवति ।

ट्रिंक्यूलो :-अस्तु तावत्, परमस्माभिर्यत्सुरापात्रं तड़ागे विनाशितं तस्य किं भविता ?

स्टेफानो:-नायं लज्जाविषय :-अथवाधीरतायाः- अपितु महती हानिरेषा ।

ट्रिक्यूलो :-स्वक्लिन्नताया अपि नास्ति तत्कष्टं यद्धि मयाऽनेनानुभूतम् । त्वञ्चेदानीमपि भणसि यत्तावकीनाप्सरा न कामपि हानिं जनयति ।

स्टेफानो : मया तु स्वकीया सुराकाचकूपिकैवान्वेष्टव्या । तदर्थञ्च कूपेऽस्मिन्नाकर्णमपि चेन्निमज्जितव्यं स्यात्तु तदपि करिष्ये ।

कलिबान :-मम राजराज ? मौनमालम्बस्व । एष किल गुहाद्वारः । मन्दं मन्दं प्रविश । साधयेप्सितमनेन दुष्कर्मणा येन त्वयास्य द्वीपस्य स्वामित्वं लब्धं स्यात् । ततश्चाहं तव सेवको भूत्वा-जीवने तव चरणरेणुसमुपासको भविष्यामि ।

स्टेफानो :-स्व हस्तं दर्शय । इदानीमहमात्महत्या चिकीर्षुरस्मि ।

ट्रिक्यूलो राजन् स्टेफानो, अयि प्रभो कृपालो स्टेफानो ? पश्यतां कियत्सुन्दरवसनमत्र त्वत्कृते स्थापितम् ।

कलिबान :-उपेक्षणीयमिदं मूर्ख ? सर्वमपीदं व्यर्थम् ।

ट्रिक्यूलो : रे दुष्टराज ? वयं सम्यक् जानीमहे यत् पुराणवसनापणेषु कीदृशानि वसनानि भवन्ति राजन् स्टेफानो ?

स्टेफानो :-ट्रिक्यूलो, मा धारय तं पटवासम् । स्वहस्तशपथेन कथयामि यत्तद्धारणं मयैव कर्तव्यम् ।

ट्रिक्यूलो :-महाराजाधिराजस्येदं भविष्यति ।

कलिवान - मूर्खोऽयं जलोदरेण पञ्चत्वमुपेयात् । किमर्थं त्वमस्य निर्मूल्यस्य वसनस्य कृते तथा समुत्सुकोऽसि ? आगम्यतामस्माभिः प्रथमं मारणीयोऽसौ येन स्वकार्यसिद्धिर्भवेत् । चेत् कदाचिदसौ विनिद्रितोऽभूत्तु आनखशिखं नः प्रपीडयिष्यति परिवर्तयिष्यति च कस्यामपि विचित्रदशायाम् ।

स्टेफानो :-मौनम् मूर्ख ? अयि निम्बुकार्ये, नास्ति किमेषो मम कूर्पासकः ? इदानीमयं कूर्पासको जम्बीरवृक्षस्याधस्तात्

विराजते। मम कूर्पासक, त्वमिदानीं गञ्जो भविष्यसि।

ट्रिंक्यूलो :-एवमेवम्। वयं किलोर्ध्वमधस्ताच्च क्रमेण चलिष्यामः। किमिदं तत्र श्रीमन्तं प्रसादयिष्यति ?

स्टेफानो :-अस्य परिहासस्य कृतेऽहं तुभ्यं धन्यवादान्वितरामि। वसनमिदं त्वया पुरस्काररूपेण ग्राह्यम्। यावदहमस्य द्वीपस्य राजास्मि तावदेकोऽपि परिहासः- उपहासशब्दो वाऽपुरस्कृतो न तिष्टेत्। शोभनोऽयं व्यङ्ग्यः। गृहाणेदं वसनान्तरमेतत्कृतेऽपि।

ट्रिंक्यूलो :-मूर्ख ? मया साकमायाहि। किञ्चिदुदपेषमङ्गुलिषु प्रलिप्यावशिष्ट वसनानि गृहीत्वा गच्छ।

कलिबान :-नाहं किमपि वसनं वाञ्छामि। इत्थमस्माभिर्व्यर्थमेव कालक्षेपो विधीयते। कदाचिदस्माकं परिवर्तनं वन्यहंसेऽथवा निम्नललाटयुतकपिरूपे न भवेत्।

स्टेफानो :-मूढ ? स्वकीयाङ्गुलिप्रयोगं कुरु। एतानि वस्तूनि वहने च मम सहायतां विधेहि। एतानि तत्र नेयानि यत्र किलाहं सुराया गोलाकारं विशालभाण्डमस्थापयम्। अन्यथाहं त्वामस्माद्राज्यात् निष्कासयिष्ये। त्वरया सर्वाणि वस्तून्याहर। इदमपि

स्टेफानो :-आमिदमपि।

व्याधानां कोलाहलोऽनुश्रूयते । भिन्नभिन्नाकृतयो वेताला: कुक्कुराणां मृगयाकुक्कुराणाञ्चाकारेषु प्रविशन्ति । प्रोस्पेरो एरियलश्चोभौ तान् प्रेरयतः -

प्रोस्पेरो :- हो हो पार्वत ?

एरियल :- राजत, ते तत्र गच्छन्ति राजत ?

प्रोस्पेरो :-चण्ड, चण्ड, तत्रैवोपद्रवक, तत्रैव । श्रूयतां श्रूयताम् ।

(कलिबान-स्टेफानो-ट्रिक्यूलो-आदयः सर्वे दूरमपसारिताः)

गम्यतां ममाज्ञया सर्वेऽपि वेतालाः- एतेषामङ्गानि प्रपीडयन्तु यावदेते पीड़या न कम्पेयुः । तानेतेषां स्नायु-संकोचनार्थमाज्ञापय येन ते ताः सर्वा अपि पीडा अनुभवेयुः या किल वृद्धैरनुभूयन्ते । ते च तथा निष्पीड़िताः भवेयुर्येन ते चित्रकात्तथा वनविडालादप्यधिकानि चिन्हान्याप्नुयुः ।

प्रोस्पेरो :-ते सर्वतोऽपि मार्गणीयाः । सर्वेऽपि मम शत्रव इदानीं मदधीनाः । मदीयं सर्वमपि कार्यमचिरादेवावसितं भविष्यति त्वञ्च स्वातन्त्र्यवायुमण्डले प्रचरिष्यसि । इदानीं किञ्चित्कालाय एव ममानुसरणं विधेयं ममादेशश्चाक्षरशः परिपालनीयः ।

(प्रस्थानम्)

इति चतुर्थोऽङ्कः

## पञ्चमोऽङ्कः

(प्रोस्पेरो गुहाग्रभागः । मायावसनेषु प्रोस्पेरो एरियलेन साकं प्रविशति)

प्रोस्पेरो :-इदानीं मम योजनासाफल्यशिखरं प्रति प्रगतिशीलास्ति । मदीया माया-शक्ति च सम्यक्तया कार्यं कुर्वाणाऽस्ति । मदधीनाः बेतालाः मदादेशं परिपालयन्ति सुसमयश्चायम् । कः समयोऽभूदिदानीम् ?

एरियलः -षड्वादनावसरोऽयम् । भवता पूर्वमुक्तोऽहं यदिदानीं यावत्सर्वमपि कार्यजातं समाप्स्यति ।

प्रोस्पेरो :-प्रथमभञ्झोत्पादनवेलायां मया तथोक्तमासीत् । राजा तत्सहयोगिनश्चेदानीं कीदृशाः सन्तीति कथय वेताल ?

एरियल :-मया तत्र भवतामादेशानुसारं ते एकस्मिन्स्थाने सन्निहिताः, ते ममाधीना एव यैनिम्बुकवृक्षैर्भवतां गुहामुखमाच्छन्नम् तेषु च निगडिताः । यावद्भवद्भिस्ते स्वतन्त्रा नैव क्रियन्ते तावत्कम्पितुमपि नार्हाः । राजा, तद्भ्राता भवतामनुजश्च सर्वेऽपि ते प्रमत्ताः भ्रान्ताश्च । अपरे तेषां कृते शोकाकुलाः । सर्वेऽपि ननु दुःखभयाभ्यां सुतरां प्रपीड़िताः । परं गोञ्जेलो नाम यस्य चर्चा भवद्भिरपि कृता-नितरां प्रभावितोऽस्ति यथा किल तृणाच्छादितगृहपटलात्द्रवीभूतं हिमं प्रस्रवति तथैवाश्रूणि तस्य श्मश्रुजालात् प्रवहन्ति स्म । भवन्मायाजालेन ते तथा प्रपीडिता यथा भवतां दृष्टिः प्रत्यक्षीकृतेष्वेव तेषु सदया भवेत् ।

प्रोस्पेरो :-अपि वेताल, त्वमपि तथानुभवसि ?

एरियल :-नूनमेवाहमपि तथाऽन्वभविष्यं चेन्मानवोऽभविष्यम् ।

प्रोस्पेरो :-अहमपि तेषां कृते सहानुभूतिं धारयिष्ये । यदि वायुनिर्मितो वेतालस्त्वमपि तेषां दुःखेन प्रभावितोऽसि तदा कथं नाहं यो हि तेषामिव मनुष्योऽस्मि तथैव च प्रीतिमनुभूतिञ्च धारयामि विशिष्टतया प्रभावितो भवेयम् ? यद्यपि तेषां राजद्रोहकार्यैरहं नितान्तं प्रपीडितोऽस्मि तथापि जानेऽहं यत्कथं स्वबुद्धिबलेन कोपजयः । सर्वप्रथमं पुण्यन्तु प्रतीकाराच्छ्रेष्टतमम् । चेत्तेऽनु-तपन्तीदानीं तु नास्ति किमपि कारणं येनाहमपि स्वकोपं न त्यजेयम् । अतः एरियल, गच्छ मुञ्च च तान् । अहं किल मायायष्टिं त्रोटयिष्यामि तांश्च स्वस्थान् करिष्यामि येन ते पुनरिदानीं मानवबुद्धयो भवेयुः ।

एरियल :-श्रीमन् ? अहं स्तान्भवत्सकाशमानयामि ।

(रंगं परित्यजति)

प्रोस्पेरो :-पार्वताः शान्तजलाशयस्रोतसां, वनानां बालुकाभिर्व्याप्ततटानां वेतालाः ? ये वेलागमापगमात्पूर्वमेव न कमपि पदचिन्हं परित्यज्यापयान्ति; यूयं च लघुवेतालाः, य, शर्वरीश्वरचन्द्रि-

काममण्डितासु निशासु गोचरे विद्याधरीमण्डलं निर्मीयते न च तदेडकाः भक्षयन्ति-यैश्च मध्यनिशा-छत्रकनिर्माणे सुखमनुभूयते, मन्दिरघण्टानादश्रवणे वानन्दो गृह्यते, भवतां सहयोगेन, यद्यपि नास्ति महती शक्तिः भवत्सु, मध्यान्हसूर्यो मया निस्तेजो विहितः झञ्झावातोत्पादनमकारि हरितसिन्धु नीलाम्बरयोः संग्रामश्चोद्भावितः, भयावहगर्जनं समुत्पादितं, विद्युदग्नि-समुत्पादितं महेन्द्रस्य सिन्दूरवृक्षस्फारणं तस्यैव वज्राघातेन च कृतम् । दृढतमान्तरीपमपि मया विचालितं देवदारु-सरलादिवृक्षाश्च मूलतः समुत्पाटिताः । ममादेशेन मम माया प्रभावेण च समाधिस्थशवजागरणमभूत् । पुनश्च तैः स्वजीवनारम्भो व्यधायि । परमिदानीमहं प्रबलामपि मायाशक्तिमिमां परित्यजामि अधुना केवलमहं किमपि स्वर्गीयगानार्थं कथयिष्यामि तेषां मस्तिष्कोपरि स्वप्रभावं पातयितुं यदर्थञ्च मायाशक्तिरेषावश्यकी । अनेन सहैवाहं स्वमायायष्टिं त्रोट-यिष्यामि गहनं भूमिनिखननञ्च करिष्यामि तस्याः । स्वीयं मायापुस्तकञ्चाहं सिन्धोरगाधपानीये पातयिष्यामि यत्र लम्बसूत्रमपि प्राप्तुं न शक्नुयात् ।

## संस्कृतसंगीतम्

(सर्वप्रथमं एरियलः प्रविशति । ततश्चोन्मत्ताभिनयपूर्वकं गोञ्जेलो अधिष्टितः एलोन्सो, सेवास्टिन एन्टोनियो तद्वदिव एड्रियन-फ्रांसिस्को इत्युभाभ्यामनुसृतौ प्रविशन्ति । प्रोस्पेरो भाषणं श्रृण्वानास्तिष्ठन्ति ।)

इदं सुसंस्कृतसंगीतकं यद् भ्रान्तमनांसि स्वस्थां दशां नयति विभ्रान्तं चल प्रमत्ततावह्निदग्धञ्च भवदीयमस्तिष्क-मपि स्वस्थां दशां नयतु । मोहितास्तत्र मण्डले तिष्ठन्तु ।

पावन गोञ्जेलो, मानाह मानव, त्वां दृष्ट्वा ममेयं सहानुभू-तिपूर्णा दृष्टिः अश्रूणि मुञ्चति । मायाजालं त्वरया विलु-प्यति । यथा प्रभातं निशान्धकारं विनाशयति तथैव तेषाम-ज्ञानान्धकारोऽपि विनङ्क्ष्यति यत्तेषां बुद्धिविक्षेपं करोति ।

अयिसुजन गोञ्जेलो, त्वमेव मम रक्षकः, राज्ञश्च स्वामिभक्त-सेवकः, वाचा कर्मणा चोभयतस्तव हितं करिष्यामि। एलोन्सो, त्वञ्चान्यतो मया मम पुत्र्या चामानुषिकं व्यवहारमकरोस्त-वानुजश्चात्र पापकर्मणि तव साहाय्यमकरोत् । सेबास्टेन ? त्वया यत्कृतं तत्फलमेवास्वादयसि । त्वं ममानुजं मम स्वरक्तास्थिभूत, त्वमतीव लोलुपो जातः सर्वमपि च कृपाकणं सहजभ्रातृप्रेम चात्यजः । त्वया किल सेबास्टेनमहाशयेन साकं षड्यन्त्रमाचरितमत एव तस्यात्मपीडा तीव्रतमा राज्ञो मारणाय । यद्यपि त्वया सर्वथाप्राकृतिकं कृतं ततोऽप्यहं तत्सर्वं विस्मरामि । तेषामन्तर्ज्ञानं सिन्धोः पूर्णप्रवाहमिवोदेति तेषां बुद्धितटञ्च यत्किलेदानीं यावत् अज्ञानकलिलावृत्तं सुबुद्धिप्रवाहपूरितं भविष्यति । परमेतेषु कश्चिदपि मामव-लोकयन्नपि न परिचिनोति । अतः एरियल, त्वं गच्छ मम शिरस्त्राणं खड्गं च गुहातः समानय । अहमिदानीं स्वगुप्तवेषं मिलनाधिपरूपेणोपस्थापयिष्यामि पूर्ववत् । वेताल, त्वरस्व त्वं शीघ्रमेवेदानीं स्वातन्त्र्यं पुनः प्राप्स्यसि ।

एरियलो गायन् प्रोस्पेरो महाशयस्य वसनधारणे साहाय्यं) करोति ।)

गीतम्

पुष्पेषु मधुकरैः साकमहं
मधुरं मकरन्दमहो ? पिवामि ।
सेवतीसुमनमध्येऽहं वै
कलपर्यङ्के शयनं भजामि ।

रात्रावुल्लूकाः गर्जेयुः ।
ग्रीष्मर्तावन्ते सानन्दं ।
जतुकायाः पुष्ठे समारुह्य
त्वरितं त्वरितं त्वरितं चलामि ॥

ससुखमहमिदानीं वृक्षाणां
पुष्पेष्वावसामि निवसामि ॥

प्रोस्पेरो :- एवं मम शोभन एरियल, यदा त्वं गमिष्यसि तदाहं तवानुपस्थितिं भृशमनुभविष्यामि। परं तव स्वातन्त्र्यमपि परमावश्यकम्। शोभनमाचरितं त्वया मम-एरियल ? अधुना राज्ञः पोतं प्रतिगच्छ अदृश्यश्च भव यथा त्वमिदानीमसि । तत्र त्वं नाविकान् पोतगुप्त्यां प्राप्स्यसि। पोताध्यक्षं प्रधाननाविकञ्चोभावेव विनिःयात्रागमनाय चादिश । इयं किल मदीयाभ्यर्थना, शीघ्रं कुरु ।

एरियल :-एषोऽहं वातगत्या प्रयामि यावच्च भवतां नाडी बारद्वयं चलति ततः पूर्वमेव प्रतिनिवृतो भविष्यामि।

रंगं परित्यजति

गोञ्जेलो :-इदं किल स्थानं बाधा-परितापाश्चर्ययुतमेव परितः। काचिद्दैवी शक्तिरेवास्मानितो मोचयेत् ।

प्रोस्पेरो :-अयि राजन् ! पश्यताम्, निर्वासितो मिलनाधिपोऽयं प्रोस्पेरो। श्रीमतां विश्वासं दृढ़यितुमेषोऽहं भवच्छरीरालिङ्गनं करोमि। अहं भवतां भवत्सहयोगिनाञ्चात्रहार्दिकमभिनन्दनं करोमि ।

एलोन्सो :-नाहं किमपि विश्वसितुं शक्नोमि यथा त्वं प्रोस्पेरो असि - अपरो वा कश्चिदद्भूत एव मां प्रतारयति पूर्वमिव। तावकीना नाड़ी सजीवप्राणिनमिव प्रचलति। यदा प्रभृति मयालोकितोऽसि तत एव मम मस्तिष्कविकृति-र्ययाहमतीव भीतोऽस्मि-परित्यजन्तीव मां प्रतीयते। अथ चेदिदं सर्वमपि सत्यमस्ति तु विचित्रैवेयं काचित् कथा। अत्रैवाहं त्वदीयराज्यं तुभ्यमर्पये प्रार्थये च क्षमां भवतः सकाशात् यत्किमपि मया दुश्चरितमाविष्कृतम् । परं कथमिदं विश्वसितुं शक्यते यत् प्रोस्पेरो इदानीमपि जीवति अत्रैव चास्मिन्द्वीपेऽस्ति ?

प्रोस्पेरो :-सर्वप्रथममहं वृद्धसभासद, सुजन, तवालिगनं करोमि । असीमितं त्वदीयं महत्वमतुलनीयञ्चापि ।

गोञ्जेलो : नाहं शपथं ग्रहीतुमलं यथेदं सत्यं नवेति ।

प्रोस्पेरो :-मायाजालप्रतारणानुभूतिमन्तः यूयमस्य द्वीपस्य । अत एव भवद्भिर्न ज्ञायते सत्यमपि सर्वानपि स्व सुहृदोऽहं हृदयेनाभिनन्दामि ।

(सेबास्टेन एन्टोनियो-इत्युभाभ्यामेकतो भाषमाणः)

युवयोः उभयोरपि रहस्यभेदनं चेदहमकरिष्यन्तु कुपितो राजा देशद्रोहदण्डमदास्यत् । परं न तद्भेदमहं भेत्स्यामि ।

सेबास्टेन :-(एकतः) कश्चिद् बेतालोऽनेन वदति ।

प्रोस्पेरो : नैव । वहूनि तवापराधानि अवमृष्टानि मया । त्वाञ्चेत्स्वभ्रातारं कथयेयमनेनैव मम जिह्वा दूषिता भवति । तवातिदुष्कर्माण्यपराधां श्चाहं मर्षितवानस्मि । अधुनाहं त्वत्तः स्वराज्यं याचे । इदमहं सम्यग् जानामि यत्त्वं न तद्दातुमिच्छसि ।

एलोन्सो :-यदि भवान् प्रोस्पेरो एव तर्हि सविस्तरं कथयतु कथं भवान् जीवितः कथञ्च वयं सर्वे ये त्रि-होरापूर्वमेव घोरपोतदुर्घटनाग्रस्ताः- भवद्भि रत्र मिलिताः । फर्डीनन्दनामानं स्वपुत्रमपि तस्यां दुर्घटनायां नाशितवानस्मि तत्स्मृतिश्च मम चित्तं तीव्रवेदनया प्रपीडयति ।

प्रोस्पेरो :-दुखतोऽस्मि तदर्थं श्रीमन् ।

एलोन्सो :-क्षतिपूर्तिहीनेयं मम हानिः । मामकीनं धैर्यमपि मम दुःख निवारणेऽशक्तमेव ।

प्रोस्पेरो :-मम विचारोऽस्ति यद्भवता कृपापूर्णधैर्यसाहाय्यं नावाप्तम्-यथाहमाप्तवान् भवत्सदृशे - एव संकटे ।

एलोन्सो :-भवदीयापि सैव हानिः ?

प्रोस्पेरो :-यादृशी महती भवतां हानिस्तादृशीएव मदीया या किञ्चित्कालपूर्वमेव जाता । एवंविधेऽपाये भवत्सदृशसाधनानि मत्पार्श्वे नासन् यैरहं धैर्यं धारयितुं शक्तोऽभविष्यम् । यतोहि मम कन्यका प्रणष्टाभूत् ।

एलोन्सो :-कन्यका ? हे प्रभो ? कथमिवेदमभविष्यद्य दिमौ नेपलेसस्य राजा-राज्ञी चाभविष्यताम् समीहे चेदं पुनः यदुभयोरनयोः कृतेऽहं सिन्धुतले सान्द्रपङ्कशय्यायां संस्थापितोऽभविष्यम् यत्रेदानीं मम पुत्रोऽस्ति । भवतां पुत्री कदा विनष्टा ?

प्रोस्पेरो :-गत-झञ्झायाम् । इत्थं प्रतीयते यदेतेऽनेन साक्षात्कारेण तथाश्चर्यान्विताः सन्ति यथा स्व, नेत्रजिह्वादिष्वपि न विश्वसन्ति । कथमिवाश्चर्यान्विताः भवन्तो भवन्तु तथापि जानन्त्विदं मनिश्चयं यदहं मिलनाधिपः प्रोस्पेरो एवास्मि । मिलनादहं निष्कासितो भूखण्डेऽत्र विचित्रासु परिस्थितिषु प्राप्तोऽभवं यत्र भवतां पोतदुर्घटना जाता । ग्रहमेवास्य स्वामी ग्रभवम् । परमस्य कथनस्य नायमवसरः । दीर्घेयं कथा न प्रातराशफलकयोग्या-एवं भूते च प्रथमसाक्षात्कारे । श्रीमन्, भवतां स्वागतं व्याहरामि । एषा गुहैव मम राजमन्दिरम् । केचन सेवका ग्रत्र मामकीनाः सन्ति । तदतिरिक्तं किमपि मामकीनं क्वापि नास्ति । तत्र भवन्तमाभ्यन्तरे दृष्टिपातं कर्तुं प्रार्थये । भवता मम राज्यं मत्कृतेऽर्पितं तत्परिवर्तनेऽहं किमपि शोभनतमं वस्तु भवते दित्सामि । न्यूनातिन्यूनं ग्रहं किमप्याश्चर्यमेवोत्पादयिष्यामि येन भवान् सन्तुष्टो भविष्यति तथैव यथाहं स्वराज्यं प्राप्य सन्तुष्टोऽभवम् ।

(उभौ चतुरङ्गक्रीडारतौ)

मिराण्डा :-ग्रयि मम प्रभो ! भवद्भिश्छलिताहम् ।

फर्डीनन्द :-नहि, मम प्रिये समस्तविश्वस्य कृतेऽप्यहं त्वां छलितुं न शक्नोमि ।

मिराण्डा :-ग्रहो, एवम्, स तथैव करिष्यति । भवान् द्वादशसंख्यकराज्यकृते मया साकं विवदिष्यति ग्रहञ्च कथयिष्यामि यदिदं निश्छलक्रीडनं यथाहं भवति स्निह्यामि ।

एलोन्सो :-चेदिदं सर्वमस्य स्थानस्यैव वैचित्र्येण स्वप्नमात्रंत्वहं स्वप्रियपुत्रात् वारद्वयं वियुक्तो भविष्यामि ।

# अस्तंगतः संस्कृतभानुमानहो ?



अस्यैव अप्रैलमासस्य द्वितीयसप्ताहमध्ये संस्कृतजगति-एका एत दृशी घटना सम्वृत्ता यस्याः प्रभावः त्रिपुरुषगतो भवति । इयं घटना किल नूतन-पाणिनीयानां प्रातस्मरणीयानां, ऋषिकल्पानां सुरगिरः प्राणभूतानां, श्री चारुदेवशास्त्रिणां स्वर्गारोहणरूपा शास्त्रेषु विद्वद्भिः प्रतिपादितम् :—

नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा ।
कवित्वं दुर्लभं तत्र शक्तिस्तत्रसुदुर्लभा ।

एतेषु किल सर्वेऽप्येते गुणाः सुलभाः आसन् । एकतः एते प्रख्यात-वैय्याकरणाः आसन्—अपरतश्च कवयः, लेखकाः निबन्धकाराः, टीकाकाराः, समालोचकाः न जाने किं किं न आसन् ? संस्कृतप्रसारविकासकृतेऽनेक-संस्थाभिः—आयोजितेषु समारोहेषु एत प्रमुखातिथयो वक्तारः पथप्रदर्श-काश्च भवन्तिस्म । पाकस्थानस्थ - लवपुरतः- एभिः स्वजीवनारंभः डी. ए. वी. महाविद्यालये संस्कृतविभागाध्यक्षरूपेण प्रारब्ध । शनैः २ एतेषां विद्वत्तया विदेशीयाः स्वदेशीयाश्च संस्कृतविद्वांसः प्रभाविताः बभूवुः ।

परिणामस्वरूपं विभिन्नप्रादेशिकप्रशासनैः भारतीयकेन्द्रीयप्रशासनेन च एतेभ्यः सर्वोच्चपुरस्काराः- उपायनी कृताः । इत्थमेभिर्बहुयशः समर्जितम् । द्विनवतिवर्षाणां पूर्णमायुः सम्प्राप्य धन्याः एते यैः डा० श्री सत्यव्रत-समाः विश्वविख्यातः संस्कृतसेवकः पुत्ररूपेण प्राप्तस्तथैव च संस्कृतस्य प्रख्यातलेखिका डा० सुश्री उषा पुत्रवधुरूपेण प्राप्ता । पौत्रपौत्रीणां पाणिपीड़नादिकं सर्वं दृष्टम् । अवलोकितञ्च तेषां सुखमयगृहस्थजीवनम् । कश्चिदेव लोकेऽस्मिन् एतादृशः सौभाग्यशाली महापुरुषः कदाचिदेवायाति ।

संस्कृतसमाजः- एतेषां स्वर्गमनेन परमदुःखितः अद्य । परन्तु जीवन-मेतादृशमेवानित्यं वर्तते । इयञ्च घटना सत्यरूपा । सत्यं सर्वैः स्वीकार्यं भवति । अत्र न कस्यापि किमपि बलादिकं प्रचलति । नश्वरं हि जगत् । वयं स्वमित्रातिमित्रस्य डा० श्री सत्यव्रतस्य सपरिवारस्य दुःखमयेऽस्मिन्-काले तेन सह सर्वथा स्मः । अत्र न किमपि - अधिकं लिखन् - पू. पा. आचार्य-श्री दिवाकराणां बचनानि समुद्धरन् विरमामि :—

"कायेन परमश्चारुः चारुश्चापि सुचेतसा
परश्चारुतरो वाचा चारुदेवो दिवंगतः ।
पदवाक्यप्रमाणज्ञो गीर्वाग् - विद्योदधिर्महान्
संसेव्य भारतीं लोके निर्जरत्वमुपागतः "

## अ० भा० संस्कृतलेखिकासम्मेलनम्

संस्थानेन शिमलायां अ० भा० संस्कृत - महिलालेखकविद्वत्सम्मेलन-मचिरमासेषु आयोज्यतेऽत्र देशस्य प्रदेशस्य च सर्वासां महिला-संस्कृतविदुषीनां सहयोगं विचारान् च समामन्त्रयामः येनेदमभूतपूर्वं संस्कृतमहिलासम्मेलन पूर्णतया सफलं स्यात् ।

## नवाब्दप्रवेशावसरे

विक्रमाब्दः शुभं कुर्यात् - सर्वेषां भवतां किल ।
भारती भारते भातु भारतीयास्तथा भुवि ॥

— केशव शर्मा

R. N. 6384/57 Registered No. 10

# महत्वपूर्णाः प्राप्याः विशेषाङ्काः

१. विश्व संस्कृत सम्मेलनाङ्कः
२. नवशब्द निर्माणाङ्कः
३. नवकथानिकाविशेषाङ्कः
४. संस्कृतचलचित्रविशेषाङ्कः
५. श्री शङ्कराचार्य विशेषाङ्कः

## मूल्यम्

एकस्य मासाङ्कस्य मूल्यं रुप्यकचतुष्टयं विशेषाङ्कस्य मूल्य अष्टौ रूप्यकाणि । पूर्वं मूल्यप्राप्तावेव अङ्का प्रेषयिष्यन्ते ।

— प्रधान सम्पादकः

## संस्कृतशोधछात्राणां कृते उपयोगिनः

दिव्यज्योतिषः प्राप्या गताङ्का.

| सन् | वर्षम् | अङ्काः |
|---|---|---|
| १९५६ | १ | १ |
| १९५७ | २ | २ |
| १९५८ | ३ | १२ |
| १९५९ | ४ | ८ |
| १९६० | ५ | ८ |
| १९६१ | ६ | ७ |
| १९६२ | ७ | १ २, ३, |
| १९६४ | ९ | २, ६, |
| १९६६ | ११ | ४, ८, ९, ११ |
| १९६७ | १२ | ५ |
| १९६८ | १३ | ३, ४, |
| १९६९ | १४ | ४, ६, |
| १९७० | १५ | १, ४, १० |
| १९७१ | १६ | १, २, ४, ५, ६ |
| १९७२ | १७ | , ५, ६, ७, ८, ९, १०, ११, १२, |
| १९७३ | १८ | १, २, ८, ९, १०. |
| १९७४ | १९ | २, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२. |
| १९७५ | २० | १, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२, |
| १९७६ | २१ | २, ३, ४, ५, ६, ८, ९, १०, ११, १२ |
| १९७७ | २२ | २, ३, ४, ५, ९, १०, ११, १२, |
| १९७८ | २३ | १, २, ३, ८ |
| १९७९ | २४ | १, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२, |
| १९८० | २५ | १ से १२ तक |
| १९८५ | २९ | १ से १२ तक |
| १९८६ | ३० | १ से १२ तक |

संस्कृतस्य सचित्रमासिकम्

वर्षम् — ३१ शिमला, मई, १९८७, अङ्कः — ८

## डा. कु. सुश्री रेखा शर्मा

कु. रेखा शर्मा रिसर्च साइन्टिस्ट प्रायेण सर्वास्वपि परीक्षासु प्रथमस्थानमधिगच्छति स्म। एवं किलानय एम.ए. एम. फिल संस्कृते कृतम्। संस्कृतेऽस्याः लेखाः महत्वपूर्णाः शोधात्मकाश्च भवन्ति। आगरा उत्तरप्रदेशीया।

# विषयानुक्रमः



## दिव्यज्योतिः,

हिमाचलप्रदेश — पंजाब- हरियाणा-जम्मूकश्मीरमध्यप्रदेश — राजस्थान—महाराष्ट्र
उत्तरप्रदेशशासन-स्वीकृतं केन्द्रशासनपुरस्कृतं सचित्रं संस्कृतमासिकम् ।

### पत्रस्य उद्देश्यानि तथा नियमाः

सरल- ल-सुबोध-साधनैः सर्वस्मिन् संसारे संस्कृतस्य प्रसारः, साहित्यान्तर्गतानां सकलकलानां समन्वेषणं संसारस्य हितसम्पादनम्, एवं लौकिक—अलौकिकस्वातन्त्र्यस्य प्राप्तिः ।

'दिव्यज्योतिः" प्रतिमासं पञ्चदशतारिकायाम् (आङ्गलमानेन) प्रकाशितं भवति ।

अस्य वार्षिक मूल्य २० रु० अर्धवार्षिकं १५ रु० एकस्याङ्कस्य च रु० १-७५ भवति ।

वर्षारम्भ: आश्विन—मासतः भवति । ग्राहकः कस्मादपि मासाद् भवितुं शक्नोति ।

ग्राहकै:, "सम्पादक, दिव्यज्योतिः, भारती विहार, मशोबरा, शिमला-१७१००७ हि. प्र." इति संकेते धनादेशेन वा शु. प्रेषणीयम् ।

### परिचय:


संस्थापका: तथा आद्यसम्पादका: आचार्यश्रीदिवाकरदत्त शर्माणः, दूरभाष 3859 8-200
प्रधानसम्पादक:— प्रा० केशव शर्मा एम. ए., एम. फिल, साहित्यरत्नम्,
दिव्यज्योतिः कार्यालय: भारती विहारः, मशोबरा, शिमला-७ (हि.प्र.)
मुद्रक: प्रकाशक:—
भारतीमुद्रणालय भारती विहार, मशोबरा-१७१००७ शिमला (हि.प्र.)
स्वामी :—श्रीमती आचार्य रत्नकुमारी शर्मा

मई १९८७ ज्येष्ठ: २०४३ — वर्षम्-३१ अङ्क: ८
वार्षिक मूल्यम् २० रु०

# झञ्झा

(शैक्सपीयरप्रणीतस्य टैम्पेस्ट नाटकस्य संस्कृतरूपान्तरम्)

सेबास्टेन :-नितान्तमाश्चर्यकरं त्विदम् ।

फर्डीनन्द यद्यपि सिन्धुभिरस्माकं जीवनानि भर्त्सितानि तथापि ते कृपालवः-यतोहि स्वपितरमहं पश्यामि । व्यर्थमेवाक्रोशनं तेषां मया विहितम् ।

स नतजानुर्भवति)

एलोन्सो :-प्रसन्नपितुः सर्वाअपि शुभाशिषस्त्वामभिवर्धन्ताम् । उत्तिष्ठ कथय च सर्वमपि वृत्तं यथा त्वमत्र प्राप्तोऽसि ।

मिराण्डा :-अहो विचित्रं दृश्यम् । एताव तः सुन्दरा जनाः समवेताः । कथमिव शोभनास्ति मानवजातिः । अहो सुमधुरं नूतनं जगत् यत्र तादृशाः लोकाः वसन्ति ।

प्रोस्पेरो :-तुभ्यमिदं सर्वमेव नूतनम् ।

एलोन्सो :-इयं कुमारी यया सार्कं त्वं क्रीड़माणः आसीः । अधिकाधिक तव परिचयोऽनया त्रिहोराधिकस्तु नैव स्यात् । किमेषास्य द्वीपस्य देवता यया वयं वियुज्य पुनरेकत्री कृताः ।

फर्डीनन्द :-श्रीमन् ? सा तु मानुषी एव । भगवत्कृपयैव सा मदीया स्वीया जाता । सा मया स्वपत्नीत्वेन निर्वाचिता परमत्र स्वपितुराज्ञाभावेऽपि । ममपिता मृतं इति विचार्य । इयं च मिलनाधिपस्य यस्य सम्बन्धे मया बहुश्रुतं परमितः पूर्वं न साक्षात्कारोऽजनि-सुता मया अस्य कृपयैव द्वितीयं जन्म लब्धम् । इयञ्चैनं मम द्वितीयं पितरं निर्माति ।

एलोन्सो :-अहमिदानीमस्याः श्वशुरोऽस्मि जातः । परमहो, चेदहं स्वपुत्र्याः सकाशात् क्षमां याचे तु कीदृशं भवेत् ?

प्रोस्पेरो :-ममान्तरात्मा रुदतिस्म । इतः पूर्वमपि मया कथितं भवेत् । देवाः पश्यत्वधस्तात् अस्य युगलस्योपरि च स्वर्गीयमुकुटं संस्थापयन्तु यतोहि भवत्कृपया एव वयमितः प्राप्ताः ।

एलोन्सो :-गोञ्जेलो, तथैवाहमपि प्रार्थयामि ।

गोञ्जेलो :-किं मिलनाधिपो मिलनादेतदर्थमेव निष्कासितोऽभवद्यत्तस्य

सुता नेपलेसस्य साम्राज्ञी भवेत्। अवर्णनीया इदानीन्तनी प्रसन्नता । इदं सर्वमपि चिरस्थायिस्तम्भेषु स्वर्णाक्षरैरङ्कितं स्यात्। एकस्यामेव समुद्रयात्रायां क्लेरिबल तस्या पतिं ट्यूनिसे प्राप्तवती, तस्या भ्राता फर्डीनन्दश्च तत्र स्वपत्नीं प्राप यत्र तस्य मृत्युराशंकिताऽभूत् । प्रोस्पेरो स्वीयं भ्रष्टराज्यं पुनराप्तवान् सम्प्राप्ता च प्रणष्टा बुद्धिरस्माभिः सर्वैः ।

एलोन्सो :-(फर्डीनन्दं मिराण्डाञ्च प्रति)

स्व हस्तौ मह्यं दीयताम्। यो हि भवतः सुखं नैव द्रष्टुं शक्नोति स सर्वकालाय पीडितो दुःखितश्च भूयात् ।

(पोताध्यक्षः प्रधाननाविकश्चोभौ प्रमत्ततया एरियलमनुगच्छन्तौ पुनः प्रविशतः।)

अहो नु खलु पश्यन्तु। अन्येऽपि सहयात्रिणः समायाताः। मया पूर्वमेव भविष्यवाणी कृतासीद्यदयं प्रस्फुटितायामपि पृथिव्यां न निमग्नो भविष्यति । अधुना त्वं निर्लज्ज पुरुष, पृथिव्यां शपथं नैव गृह्णासि यथा जलयाने त्वया शपथग्रहणमकारि अप्यत्र भूमौ तव जिह्वा भग्ना ? किमित नूतनमुदन्तम् ?

प्रधाननाविक :-सर्वप्रियोऽयं समाचारो यद्राजा तत्सहयात्रिणश्च सर्वे सकुशलाः । ततोऽनन्तरमन्यद्वृत्तमिदमस्ति यदस्माकं पोतः यः प्रस्फुटितः त्रुटितश्चास्माभिस्त्यक्त आसीत् अस्माकं प्रथमयात्रारम्भकाल इव सुस्थः सज्जश्च तिष्ठति ।

एरियल :-(प्रोस्पेरो महाशयं प्रति) श्रीमन्, यदा भवत्सकाशादहमपगतस्ततः प्रभृति-सर्वमिदं मया सम्पादितम् ।

प्रोस्पेरो :-(एकतः एरियलं प्रति) मम चतुर बेताल ?

एलोन्सो :-एताः न साधारणघटनाः । सर्वा अपि साश्चर्याः अतः कथय कथमत्र प्राप्तोऽसि ।

प्रधाननाविक :-श्रीमन्, चेदहं स्वजागरणविश्वासमकरिष्यन्तु नूनमेव सर्वामपि कथां कथयितुं प्राभविष्यम् । परं वयं सर्वे गाढनिद्रा-

निलीना आस्मः । वयं न किमपि जानीमो यत्कथमस्माकं स्थापन पोतगुप्त्यामभूत् । केवलमधुनैव केनचिदतीवभ्रामक-कोलाहलेना स्माकं निद्रापगता । तत्र किल गर्जनं, उत्क्रोश, दीर्घरुतं शृंखलानां शिञ्जितमपरेषाञ्च भयानकशब्दानामा-विर्भावोऽभूत् । अस्माभिरनुभूतं यदिदानीं वयं स्वतन्त्राः, राजकीयं महज्जलयानञ्च सर्वथा सुस्थमिति । यानं दृष्ट्वा तत्स्वामी नृत्यमारब्धवान् । तदनन्तरञ्च, यथा किल स्वप्ने चेदिदं भवदानन्दकरं, वयं नियुक्ताः सन्तोऽत्र मूर्छितावस्थायां प्रापिताः ।

एरियल :-(एकतः प्रोस्पेरो महाशयं प्रति) किमिदं शोभनकार्यं नाभूत् ?

प्रोस्पेरो :-(एकतः एरियलं प्रति अतीव चारुतया सर्वमिदं त्वया परि-श्रमाश्रितवेताल ? सम्पादितम् । त्वं स्वतन्त्रो भवितासि ।

एलोन्सो :-आश्चर्यकरो भ्रमजनको बहुमार्गः प्रदेशो यत्र कदाचिदेव कश्चिच्चलति । अत्र चास्मिन्प्रसङ्गे प्राकृतिकादधिकमेव किमपि । कश्चिदेव दिव्यज्ञानसम्पन्नः सत्यतया कथयितुं शक्नोति यत् किमिदमभूत् ।

प्रोस्पेरो :-मम राजराज ! श्रीमन्, यत्किमप्याश्चर्यकरमभूत्तेन स्वात्मा न दुःखयितव्यः । कदाचिच्च विश्रामकाले सर्वमपि सुस्पष्टतयाहं स्वयं वर्णयिष्यामि एकान्ते । तत्कालपर्यन्तं सानन्देन । भवता सर्वं ग्राह्यम् ।

(एरियलं प्रत्येकतः)

वेताल ! आगच्छात्र । कलिबान नामा तत्सह-योगिनश्च स्वातन्त्र्यं नेयाः । सर्वमपि चेमं मायाजालं भञ्जय ।

(एरियलो रंगं परित्यजति)

श्रीमन् किमनुभवसीदानीम् ? केचन भवत्सहयात्रिणः पुनरपि पथभ्रष्टा नात्र सन्ति ये भवद्भिर्विस्मृताः स्युः ।

(एरियलः कलिबान-स्टेफानो–ट्रिंक्यूलो-एतान् चोरितबसन-सहितानाभ्यन्तरमानयति)

स्टेफानो :-अस्माभिः सर्वै रेव न केवलं स्वविषय एव चिन्तनीय अपितु-अस्य प्रत्येकसहयात्रिणो विषये चिन्ता कार्या। धैर्यं धारय स्थूलराक्षस ? धैर्यं धारय।

ट्रिंक्यूलो :-चेन्मदीया दृष्टिर्नूनमेव पश्यति तु सुन्दरतममिदं दृश्यमत्र।

कलिबान :-भो देव ! सर्वेऽप्येते सुन्दरतमा बेतालाः। मम स्वामी तु सर्वेभ्यः सुन्दरः। भीतोऽस्मि। क्वचित्स मां दण्डं न दद्यात्।

सेबास्टेन :-हा हा श्रीमन् एन्टोनियो ? एते के सन्ति ? किं ते धनेन क्रेतुं योग्याः ?

एन्टोनियो :-भवितुमर्हति। एष्वेकः साधारणमत्स्यरूपः यो हि क्रेतुं शक्यते।

प्रोस्पेरो :-एतेषां वसनान्यवलोकयन्तु भवन्तः सभ्यास्ततश्च कथयन्तु यत्ते सज्जनाः अयं कुरूपो धूर्तो मायाविन्या एकस्याः पुत्रो वर्तते याहि परमशक्तिशालिनी विद्यते स्म। सा स्व शक्त्या आदेशेन च चन्द्रमसमपि समुद्रबेलाञ्चापि स्वायत्ती कर्तुं शक्तासीत्। निशाकरस्तस्याग्रे सर्वथा शक्तिहीनोऽभूत्। एभिस्त्रिभिर्लुण्ठितोऽहमयञ्चाधभूताकृतिर्जारजो धूर्तः साकमेभिर्मिलित्वा मम हत्या षड्यन्त्रञ्चक्रे। भवद्भिरिमौ द्वौ तु ज्ञातावेव स्यातां यतोहि भवद्यात्रा सहार्थिनाविमौ। अयञ्च कृष्णजन्तुर्मामकीनः

कलिबान :-मृत्युमुखस्थोऽस्मीदानीम्।

एलोन्सो :-अपि नायं पीतसुरो मम पाचकः स्टेफानो ?

सेबास्टेन :-सुरामत्तोऽयमिदानीम्। परं क्वानेन सुरा लब्धा ?

एलोन्सो :-एष ट्रिंक्यूलो अस्मादप्यधिकसुरामत्तः। आभ्यां कुत एषा सुमधुरा सुरावाप्ता यया तथा रञ्जिताविमौ। कथं युवयोरियं स्थितिः।

ट्रिंक्यूलो :-यदा प्रथमं भवान् मया दृष्टस्ततकालादेव मामकीनेयं दशा। भीतोऽस्मि-यत्कथमपि नाहमस्थिज्वरपीडाभ्यो मुक्तो भविष्यामि। मशकदंशेभ्य इदानीं न विभेमि।

सेबास्टेन :-स्टेफानो, त्वदीया का दशा ?

स्टेफानो :-अहो खलु कष्टम् । मा स्पृश । नाहं स्टेफानो परं पीड़ागारः ।

प्रोस्पेरो :-अरे ! त्वमेव त्वस्य द्वीपस्य राजा बुभूषसि ।

स्टेफानो :-तदा तु पीडानां राजाभविष्यम् ।

एलोन्सो :-इदं किमप्यदृष्टपूर्वमाश्चर्यम् ।

(कलिवनं दर्शयन् )

प्रोस्पेरो :-यथास्याकृतिस्तथैव व्यवहारोऽपि । रे ? रे ? गुहां गच्छ । स्वसहयोगिनश्चापि सहैव नेयाः । गुहां सर्वथा स्वच्छां कुरु चेन्मत्तः क्षमामिच्छसि ।

कलिवानं :-आम् । अहमिदं करिष्ये । अतोऽनन्तरमहं बुद्धिमत्तया कार्यं करिष्यामि तव कृपां च प्राप्स्यामि । षड्धा गर्धभीभूतोऽहं येनायं देववत्पूजितो मूर्खराजः सुरापायी ।

प्रोस्पेरो :-अपेहि ।

एलोन्सो :-अपेहि स्वसुन्दर वसनानि च संस्थापयतां यतः समानीतानि तत्रैव ।

सेबास्टेन :-यतश्चोरितानि-इति कथयितुं युज्यते ।

(कलिवानः स्टफानो ट्रिंक्यूलो त्रय एव रंगाद्गच्छन्ति ।)

प्रोस्पेरो :-श्रीमन् ! तत्र भवन्तं महामहिमानमहं स्व गुहागारे सहयोगिभिः सहितमागन्तुमामन्त्रयामि तत्रैव च निशा भवद्भिर्यापनीया । अस्मिन्नेवावसरेऽहं स्व कथामपि कथयिष्यामि यया समयातिवाहनं शीघ्रं भविष्यति । स्वजीवनवृत्तं विशेषघटनासहितं यथा मयात्र समागत्यानुभूतं तत्सर्वं वर्णयिष्यामि । प्रातरेवाहं, श्रीमन्तं भवतां पोतं प्रति नेष्यामि ततश्च नेपलेसं प्रति प्रयाणं करिष्यामस्तत्राहमनयोः कुमारीकुमारयोर्विवाहसंस्कारसम्पन्नतां दिदृक्षामि । ततोऽहं मिलनं प्रति प्रयास्यामि यत्र तृतीयविचारो मद्विषये मम मृत्योरेव ।

एलोन्सो :-भवतां विचित्रघटनापूर्णगाथां श्रोतुमस्माकं कर्णौ नितान्तं समुत्सुकौ ।

प्रोस्पेरो :-सर्वमप्यहं सविस्तरं कथयिष्यामि । प्रथममहं प्रतिज्ञां करोमि यदनन्तरं समुद्राः सुशान्ता भविष्यन्ति, समनुकूलं वातप्रवहणमनुभविष्यथः, नितान्तदूरमपि च स्वीयं राजभवनं क्षणादेव प्राप्स्यथः ।

(एकतः एरियलं प्रति)

पक्षिरूप एरियल, सर्वमिदं तव कार्यम् । तदनन्तरं त्वं सर्वैरपि त्वदधीनबेतालैः सह स्वतन्त्रो भविष्यसि । कल्याणं भूयात् । कृपया समायान्तु मम गुहायाम् ।

(सर्वे रङ्गमञ्चं परित्यजन्ति)

## उपसंहारः

प्रोस्पेरो वक्ति

मायाशक्तिर्मदीयैषा दूरभूता सनिश्चयम् ।
या चेदानीं मया साकं सा तु स्वाभाविकी मता ॥

इयं लघुतमा नूनं, जानाम्येवं सनिश्चयम् ।
मदीयं बन्धनमत्र कर्तुं यूयं हि शक्नुथ ॥

नेपलेसञ्च नेतुं वा, न तु मामत्र मुञ्चथ ।
यस्मादहमिदानीञ्च प्राप्तराजोऽस्मि सर्वतः ॥

क्षान्ताः सर्वेऽपि ते दुष्टाः निरता घोरकर्मणि ।
आशासेऽहं न स्यामत्र भवतां कृपयाऽधुना ॥

मोक्तव्योऽस्मि दृढेभ्यो वै वन्धनेभ्यस्तु तत्क्षणम् ।
भवद्भिरेव त्वरया सुहस्तैरादरेण च ॥

कोमलं श्वसितं तत्र श्रीमतां पूर्यतां मम ।
नावं नु सर्वतो नोचेद्योजना निष्फलान्विता ॥

भवतां परितोषाय, शक्तिहीनोऽस्मि सर्वतः ।
न भौतिक हि तत्सर्वं मायाजालं वशे मम ।।

मरण मामकीनञ्च नैराश्येण समन्वितम् ।
केवलं प्रार्थनाभिश्च मम मुक्तिः सुनिश्चिता ।।

प्रार्थनासु महाशक्तिर्याभिरीशो वशी कृतः ।
मां मोक्षयतु पापेभ्यः प्रार्थितः स दयानिधिः ।।

यथा मां सर्वदोषेभ्यो भवन्तो मोचितुं क्षमाः ।
भवत्कृपा भगवतश्च पापेभ्यो मां विमोक्षयेत् ।।

इति पञ्चमोऽङ्कः ।

इति - आंग्लभाषायाः-विश्वविख्यात नाटककारस्य विलियम्शेक्सपीयरस्य "द टेम्पेस्ट" नामकनाटकस्य "झञ्झा" इति आचार्य केशवशर्मणा कृतं संस्कृतरूपान्तरम् ।

# The Tempest

In early days of my life I had a Quite different view about the English Literature. But as I came to know a little bit more regarding the English works and the works of other languages my belief grew stronger and stronger about the greatness of Sanskrit Literature.

In those days I Ist joined my service in S. D. College. Shimla as the Head of the Sanskrit Department. Here I taught till degree Classes through Hindi medium, one year after this I took the lectureship in B S. Sanskrit College, Shimla and here I taught till shastri classes through Sanskrit medium. Took no salary for one year and after that I was satisfied by taking an amount which was sufficient as my pocket money. Here I worked for two three years and left the job and joined the management of this College. Then I was appointed as a special-teacher in the Bishop Cotton School, (an internationally known educational institution) Shimla to teach Hindi and Sanskrit to the students from overseas through English medium. Thus I increased my experience in the three different branches of education prevailed in India. I served this institution for twelve years.

Here I had the chance to meat various Indian and foreigner educationists and scholars from cambridge and Oxford Universities and St. stephen's college of Delhi and Madras Some of them were my Colleagues also. Though I was educated in a Sanskrit college only however, I never felt any difficulties

or short comings in my working wtth those products of the best educational institutions I read and sang Psalms in the school-chapel and outside also and came to the conclusion that all the educational systems aıd religious ceremonies are deeply covered with the Shadow of great Sanskrit Literature

To prove this I made up my mind to translate some good works of English into sanskrit and as a result the Sanskrit translation of the shakespeare's The Tempest was done and is now presented to you. Where the English knowing Sanskrit scholars will enjoy the translating power of Sanskrit the others who don't know English and know Sanskrit only may taste how the world's greatest language English has Sanskrit shadow in its works and thus how great is the Sankrit Language and Sanskrit Literature. I end this translator's note with these few words .-

Shakespeare was a great poet and dramatist.
And I never tried to shake or twist-
His thoughts and views. However
I cannot forget, never never,
His lofty ideals and Artistic - charm-
And his sincerety, not to harm
Any one in this world of worries and sorrow,
Which is not ours today and even after tomorrow,
The mistakes if any here are those [of mine,
And the goodness is his only, that always shine.

# आंग्लकविः विलियम शेक्सपीयरः

आंग्लभाषायाः महाकवे विलियमशेक्सपीयरस्य पूर्वजाः कृषका अभूवन्। अस्य पिता जॉनशेक्सपीयरः व्यापारकर्मणि सम्पन्नः स्ट्रैटफोर्ड नगरपालिकायां च निष्ठितपदे नियुक्तोऽभूत स हि मेरी अर्डेन नाम्नीं पत्नीमुपयेमे। इयं किल विशाल-सम्पद्भूम्याद्यधिकारिणी बभूव अनयो जीवितेषु पुत्रिपुत्रेषु तृतीय आसीत् विलियम शेक्सपीयरः आंग्लभाषाया यशस्वी कविर्नाटककारश्च। स "स्ट्रैटफोर्ड ऑन एवोन' स्थाने १५६४ ईशवीयाब्दस्य एप्रिलमासे जन्म लेभे। विलियम शेक्सपीयरस्य जन्मानन्तरं केषुचिद् दिवसेष्वेवास्य पितार्थिककठिनतासु पपात परिणामस्वरूपं स सर्वमपि स्वपत्निसम्पदं बन्धकत्वे स्थापितवान्। नगरपालिकाया-मपि तस्यावस्था चिन्तनीया एव संजाता मेरी अर्डेन सकाशात् पंच सन्तत्य -द्वे कन्ये त्रयश्च पुत्राः-अभूवन्। स्ट्रैटफोर्डस्य ग्रामरपाठशालायां त्रयाणां विलियम-सहितानां पुत्राणां निःशुल्कशिक्षणं जातम् शेक्सपीयरः किंचित् फ्रेंच भाषां स्वल्पां च लेटिनभाषामपि पपाठ। परं पितु र्भग्यस्यास्तेन तस्य शिक्षा शीघ्रमेव समाप्तिं गता। स स्वपितुर्व्यापारं दण्डनायकरूपमपि स्वल्पकालायाचरितवान्।

यदा शेक्सपीयरः सार्धाष्टादशवर्षदेशीयो बभूव तदैव स "अने हथवे" संज्ञकया रिचार्ड हथवे महाशयस्य पुत्र्या सह विवाहं कृतवान् इयं किलाष्टवर्षज्येष्ठासीत् शेक्सपीयरतः कन्याद्वयी एकश्च पुत्रः इत्थं सन्ततित्रयं तस्या बभूव शेक्सपीयरः कुसंगपतितः -गाढां विनैवान्येषां स्थलेषु प्रविशति शशकचौर्यं करोति लोकानामु-द्यानेभ्य इत्थंच तस्य जीवनं याति 'सरथोमसल्यूसीज् चालकोट' स्थलादेकदा स हरिणचौर्यं चकार एतत्कृते स महतार्थिकदण्डेन दण्डितः सन् मासत्रयाणां कारावा-समपि प्राप्तवान् अस्य प्रतिग्रहाय शेक्सपीयरेण क्रोधावेशात् गीतमेकं लिखित चार्लेकोट प्रमोदवनस्य मुख्यद्वारोपरि च सन्निवेशितम् अनेन सर थोमस ल्यूसी क्रुद्धो भूत्वा शेक्सपीयरस्य कारावासाय प्रयत्नमारब्धवान् शेक्सपीयर इदं ज्ञात्वा स्ट्रैट-फोर्डात् पलायितः स लण्डननगरे शरण जग्राह लण्डनगरे शेक्सपीयरः सर्वप्रथमं अभिनेतुः कार्यमकरोत् अनन्तरं सोऽन्येषां नाटककाराणां नाटकानां पुनर्लेखनं व्यवस्थाकरण च प्रारब्धवान्

"लव्स लेबर्स लोस्ट" नामकं नाटकं शेक्सपीयरस्य प्रथमतमा रचना १५९१ ईशव्यां लिखिता अस्या पुनरवलोकनं १५९७ प्रकाशनं च शेक्सपीयरस्य नाम्ना १५९९ ईशव्यामभूत्। अस्य नाटकस्य कृतेऽसौ न कस्मादपि स्वपूर्वकालीनलेखकात् कथावस्तु जग्राह "रोमियो एण्ड जुलियट" शेक्सपीयरस्य प्रथमा दुःखान्तकृति। सम्भवतोऽस्य लेखनं १५९२-९३ ईशव्यामभूत्। अस्य नाटकस्य भूमिकाया कथानकं समस्तयूरूपे (योरप) प्रसिद्धमासीत् एतद् विषये गद्येषु पद्येष्वपि च पूर्वं कैश्चिल्लि-खितम् "द मर्चेन्ट आफ वेनिस" संभवतः शेक्सपीयरस्यइत पश्चाद्वर्तिनाटकमस्ति।

यस्य लेखनं १५६४ तमे ईशवीयाब्देऽभूत्   अस्य भूमिका विभिन्नस्रोतोभिर्गृहीता। विशेषतश्च चतुर्दशशताब्द्यां लिखितेभ्यः इटालियन उपन्यासेभ्यः। शेक्सपीयर प्रतिवर्षं नाटकद्वयं लिलेख   तस्य विशिष्टनाटकसम्बन्धिकार्यं सप्तविंशतिवर्षेभ्य सप्तचत्वारिंशत् वर्षपर्यन्तमभूत्

सम्भवत कुलीनेषु तिष्ठितपुरुषेषु विशिष्टा संरक्षकत्रयी आसीत् शेक्सपीयरस्य यथा—साउथेम्प्टनस्य मुखरः, साम्राज्ञी एलिजा वेथ जेम्स प्रथमश्च टेम्पेस्ट नाटकस्याभिनयः राजकुमार्या एलिजा वेथ महाभागाया एलेक्टोर फ्रेडरिकेन साकं १६१८ ईशवीयाब्दे विवाहकालेऽभवत्

शेक्सपीयरस्य प्रतिभाविकासस्तस्य मध्यायुष्यभूत् . एकादशाब्दानां नैरन्तरिकानुपस्थित्यनन्तरं सस्वजन्मस्थानं स्ट्रेट फोर्ड नामानमागच्छत्  ततोऽनन्तरं च प्रतिवर्षमेकवारं तत्रागच्छति स्म। १५९७ ईशवीये स्ट्रेटफोर्डे स विशालतमं गृहमेकं क्रीतवान् तेनैव साकमुद्यानद्वयं धान्यागारद्वयं चाप्यासीत् . सर्वमिदं स षष्ठिपणैः (पाउन्ड) जग्राह   इदानीं षष्ठिपणानां साम्यं ४८० पणैर्भवति   अस्य निवासस्थान 'नवीनपत्तनम्' इति नाम्ना विख्यातमभूत्  इदानीं शेक्सपीयर स्वपितुर्लुप्तां ख्यातिं पुनः प्राप्तवान्। स नागरेषु प्रतिष्ठितोऽभूत्  नाटककाररूपेणाभिनेतृतया च तेन विपुल धनमर्जितम्। १५९९ ईशवीयाब्दे स "ग्लोबथियेटरस्यांशभागभूत्। एवं कथ्यते यत्तस्य वार्षिकआयः एकसहस्रपण (पाउण्डस) मितः आसीत्। भूमिपतित्वं तस्यासीदेव। शनैः शनैः स विवादप्रियोऽभवत्। तत्र च स्थायिरूपेण स सर्वदा विजयी बभूव

स्वसम्पन्नतायाः दिवसेषु स निम्नांकितनाटकानां प्रकाशनमकरोत्  "मच अडू एबाउट नथिंग (१६००) "एज यू लाइक इट" (१६००) ट्वेल्वथ नाईट (१६०१) जुलियस् सीजर, हैमलेट, ओथेलो, मैकबेथ किंग लियर आदीनां नाटकानां प्रकाशनं प्रतिवर्षं क्रमशोऽभूत्  किंगलीयरस्याभिनयः व्हाईटहालराजगृहे १६०६ ईशवीयाब्दस्य २६ दिसम्बरमासीयनिशायामभूत्। १६११ ईशवीयाब्दानन्तरं शेक्सपीयरः सर्वमपि नाटकप्रणयनमत्यजत  वर्षस्याधिकतमभागं च स स्ट्रेटफोर्डे एव व्यतीयाय। १६१६ वत्सरे तस्य स्वास्थ्यं प्रतिकूलमभूत्। अस्मिन्नेवाब्दे च स लोकान्तरमलंचक्रे। अस्य मृत्योः वास्तविककारणं न ज्ञायते  तथापि पुत्रमृत्युवियोगेन स मृतः इति केचन कथयन्ति। सुसन्ना-ज्युडिथ पुत्रीद्वयं तस्य मरणकाले जीवितमासीत्। स्ट्रेटफोर्डगिरिजागृहस्याभ्यन्तरे पूर्वभागे तस्य निखननमभूत्  तस्य समाधौ निम्नांकितस्तुतिवाक्यं लिखितं वर्तते :-

ईश्वरस्य कृते नैव भो भो मित्राणि, बन्धवः !  
मृदोत्खननमत्रत्यभूम्यां स्याच्च कथञ्चन ।  
स वर्धते नरो नित्यं रक्षेद्यो हि शिलामिह ।  
स चाभिशप्तो भूयाद्वै यो ममास्थीनि चालयेत् ॥

# शनैः शनैः याति लयं हि संस्कृतम्

प्रो. रामेश्वरदत्त शर्मा

बभूव या ज्ञाननिधिर्विशेषतः, ससर्ज यस्यां स्वयमेव शारदा ।
प्रतिष्ठिता या खलु विश्वभाषया, क्षिणोति हा हा ननु सैव संस्कृता ।१।
ररक्ष यार्याऽनुपमां च संस्कृतिं ददौ स्वयोगं जन-जीवनोदये ।
चकार चारित्र्यमयोज्ज्वलं नृणां क्षिणोति हा हा ननु सैव संस्कृता ।२।
विलोकयन्तु प्रथमं स्वपूर्वजान्, विहाय सर्वं तद भीप्सितन्तु ते ।
सहस्रवर्षैः सुतरामपालयन्, क्षिणोति हा हा! न नु सैव संस्कृता ।३।
युगाद् युगेभ्यः श्रुतिकण्ठ साधनैः, गुरुप्रदत्तामधिगम्य भारतीम् ।
ररक्षुरेनां महता श्रमेण मे, क्षिणोति हा हा! ननु सैव संस्कृता ।४।
अपौरुषेया श्रुतिरत्र राजते, समृद्ध-साहित्यनिधिः सुशोभते ।
कथा-पुराणानि च सन्ति संस्कृते, समस्तशास्त्राणि विभान्ति संस्कृते ।५।
न साऽस्ति विद्या विषयो न कोऽपि यः विशेष - सामान्य विधौ स गुम्फितः ।
न केवलं भारतराष्ट्र-वर्णनम्, समस्तभूमण्डलमत्र कीर्तितम् ।६।
न जातिवादो न हि साम्प्रदायिता, न देश-सीमा न दिशोऽपबाधिता ।
न धर्मभेदो न हि चिह्नबन्धनम्, समन्वयात्मा लभते हि संस्कृताम् ।७।
समस्तभाषा प्रथमा तु संस्कृता, समग्र - शब्द - प्रकृते विवेचिका ।
क्रियोपसर्गैं विविधैं र्गणाव्ययैः, प्रशास्ति वाणी जगती पदोच्चयम् ।८।
गृहस्य वातावरणं सुसंस्कृतम्, भविष्यति प्रोज्ज्वलमाशु शोभनम् ।
स्वरोपयुक्तो नु च वक्त्रभाषितो, यदैव वेदध्वनि- रुच्चरिष्यति ।९।
किन्तु-स्थितिर्न, सासीत परतन्त्र भारते, विदेशजे मोहितचित्तवृत्ति के ।
स्वराज्यमाप्तोऽखिल साधनास्ति नः, तथापि नोत्थाममहो विचित्रता ।१०।
क्वचाद्य पाण्डित्यपरम्परा परा, क्वचास्ति शास्त्रार्थ समाक्षणं क्षणम् ।
क्वचिच्च वेदाध्ययनं महेमहे, न शिष्यवासस्तटिनी सरस्तटे ।११।
किमस्ति हेतुर्मयका न दृश्यते, कथञ्च निद्रा स्वयका न हीयते ?
किमद्य जातं वद हे सखे! तव, गतं क्षणं नैव कदापि लप्स्यसे ? ।१२।
भवेद् भवेज्जन्म जनस्य भारते, पठेत् पठेद् व्याकरणं स पाणिनेः ।
भवेद् भवेन्मातृवचश्च संस्कृता, भवेद्धि राष्ट्रस्य वचोऽपि संस्कृता ।१३।
जने जने योऽभिरुचिं प्रचोदयेत्, कुले कुले यः कवितां प्रकाशयेत् ।
गणे गणे यः संघटनञ्च कारयेत्, तदैव भव्या भविता सुभारती ।१४।
पदे पदे सन्तु सुयोग्य शिक्षकाः, न वित्तलिप्सा खलु तान् प्रपीडयेत् ।
गृहे गृहे स्युः कवयो विशारदाः तदैव भव्या भविता सुभारती ।१५।

(हरियाणा)

# हा हा, विकरालः युगः !

प्रो० सन्तोष वर्मा

★

न सा सुधा वा न सा कृपा वा,
न सा विभा वा न चात्र भूतिः,
समन्ततो क्षुधा आर्तश्च नादः,
क्रन्दती व्यथा प्रमाथिनी च पीड़ा ।
चीत्कारवन्त युवकाः वराकाः,
भोषणाः करालाः स्वपन्ति बालाः,
त्रस्ताः विशङ्काः बिषण्णाश्च लोकाः
स्वतन्त्रतायाः किमयमेव लाभः ।

पुनः पुराणां संस्कृतिमानयेयुः
पुनः पावनाः प्रागादर्शा भवेयुः
वैभवाः हि दिव्याः प्रकीर्णाः भवेयुः
मनसो विकाराः नष्टाः भवेयुः ।

स्थैर्यञ्च धैर्यञ्च शौर्यञ्च आप्नुयुः
दृढ़ाश्च भूत्वा समस्ताः चरेयुः
पुनरेव क्षीरस्य नद्यो वहेयुः
पुनरेव जीवनानि समृद्धानि भवेयुः
भारतं हि भूयात् सर्वदेशनेता,
सर्वे जनाः तथा आचरेयुः ॥

अध्यक्षा —
संस्कृतविभाग
गान्धी आदर्श कालेज
समालखा (करनाल)
हरियाणा

# अथ प्रारभ्यते

प्रातर्नमामि भगवतीं करधृतवीणां, प्रातः स्मरामि तव नाम शतसहस्रकम्
प्रातर्भजामि चरितं तव दिव्यरूपं तां त्वां नताः स्म परिपालय देवि विश्वम् ॥

या देवी ताम्रवर्णाभा सदृश भाति शारदा ।
तस्याः चरणारविन्दं तु नमामि त्वां अहर्निशम् ॥

शरदिन्दुवत विराजिता, भवानी भवमोचनी ।
या अद्या सत्त्वरूपा, वरदात्री च सरस्वती ॥

ज्ञानदात्री विशालाक्षी, नितरां अभयदा परा ।
इति ध्यायन्ति तां दुर्गां, हर्षाचित्तसुधीजनाः ॥

दुःखौघसारेऽस्मिन् त्वमेव शरणदायनीं ।
तव नाम स्मरिष्यामि एव संकल्पित मया ॥

मिथ्याजगति मे मातः ! न मित्रं न च बान्धवाः ।
देहि मे सुमतिं नित्यं तितीर्षवे भवसागरम् ॥

शृणु हिमसुते देवी ? करुणक्रन्दन मम ।
क्षुधातृषार्तः यः पुत्रः, स कथं न स्मरिष्यति ? ॥

ज्ञानास्वादेन मे रसना, बुद्धिश्चापि च प्रकाशिताः ।
स्वाध्यायप्रवचनाभ्यां नमामि पुस्तकधारणीम् ॥

शरदोत्सवे जगन्मातः, पूजनं तव मंगलम् ।
एकैव शक्ति नवदुर्गाः, प्रख्याता जगती तले ॥

——

## यथेच्छा

चम्पावत विकसिता या दिव्यरूपा,
नीर - क्षीर न्यायेन् या हंसवाहनीं ।
पूर्णेन्दुसुन्दरमुखी अलंकृता सा,
या मातृभूमीव नोपेक्षति माम् ॥

विश्वेश्वर शर्मा
ग० वि० विद्यालयस्य
श्रीनगर-गढ़वाल
२५६१७४

# हिमाचलगौरवं सुन्दरं सोलननगरम्

प्रा० केशव शर्मा

(दिव्यज्योतिषः एकस्मिन् - पूर्ववर्ति - अङ्क शिमलानगर-विषये डा० श्री जगदीशचन्द्रस्य लेखः- भवद्भिः पठितः स्यात् । अस्यामेव शृंखलायां हिमाचलस्य सोलननगरविषये हिमाचल-प्रदेशस्य प्रख्यातेन संस्कृतकविना स्वीया लेखनी व्यापारिता । अत्र सोलननगरविषये विदुषा लेखकेन परम ऐतिहासिका –लोकैः अश्रुतपूर्वाः महत्वपूर्णविषया एव संक्षेपतः समुत्थापिताः ।

सम्पादकः)

स्वतन्त्रतायाः पश्चात् हिमाचले यादृशी समुन्नतिः सोलननगरेण कृता न हि तस्या उपमा अन्यत्र लभ्यते । अस्याः कारणानि बहूनि सन्ति । यथाः - भौगोलिकं, प्राकृतिकम् आर्थिकं राजनैतिकञ्चेति । इदं हि नगरं वातावरण-दृष्ट्या समस्तेऽपि प्रदेशे आदर्शरूपम् एव वर्तते । प्रदेशे उच्चस्थलेषु शीतस्य प्रकोपः निम्नस्थानेषु च उष्णतायाः कष्टम् अनुभूयते । परन्तु सोलनं पर्वता-नाम् मध्याङ्के विलसति । तेन हि अस्य वातावरणं नातिशीतं न च अत्युष्णम् अस्ति । अतः अत्र वसन् जनः एकतः सुखमयं वातावरणं समास्वादयति अपरतश्च स्वास्थ्यवृद्धिम् अनुभवति । अत्र दुग्धस्य शाकानां फलानां च प्राचुर्यं विद्यते । अतः इह निवासिने जीवनस्य आवश्यकानि वस्तूनि सद्यः सुलभानि भवन्ति । ततश्च इहत्यं जीवनं सुविधापूर्णं सम्पद्यते ।

इह सम्प्राप्तैः जनैः प्राकृतिकं सौन्दर्यं हृदयहरं नयनहरं नयनगोचरी क्रियते । अस्य पर्वतस्य उच्चैः पर्वतखण्डाः विराजन्ते । ये हि नाना प्रकाराणां तरूणां वनेन विभूषिताः सन्ति । सर्वतश्च शीतलं मधुरं बहुगुणं नीरं निःसरति । अनेके निर्झराः निष्पतन्ति । अनेकाः कुल्याः क्षेत्राणि सिञ्च-न्ति । स्रोतांसि च स्वादुसलिलं प्रस्रवन्ति । बहून् औषधगुणान् दधानान् तरून् संस्पृश्य परितः विकीर्णाः मधुरगन्धाः पवनाः नगरम् इदं सुवासयन्ति । अत्र हि बहूनां प्रसूनानाम् उद्यानानि पर्यटकानां सुखप्रदानि विद्यन्ते ।

अस्य नगरस्य ऐतिहासिकम् अपि महत्त्व वैशिष्ट्यं धत्ते । दुर्गायाः एकतरं नाम शूलिनी अस्ति । ततो हि नगरस्य नाम निर्गतम् उच्यते । अत्र मूलग्रामः सोलनम् अस्ति यत्र देव्याः स्थान दृश्यते । अतः देव्याः नाम्नः प्रवृत्तं नगरस्य नाम प्रभूतम् आध्यात्मिकं महत्त्वं विभर्ति । अत्र एकतरस्मिन् करोलनामके पर्वते एका प्रलम्बा गुहा अस्ति श्रूयते यत् सा इत आरभ्य पिञ्जौरनामकं सुदूरवर्तिसमक्षेत्र यावत् अन्तर्भूमि विस्तृता अस्ति । कर्णपरम्परया सा गुहा अज्ञातवासे वसद्भिः पाण्डवैः निर्मिता इति ज्ञायते । करोलशिखरस्य दुर्गमतां भीषणतां च विलोक्य इदं सत्यम् अपि प्रतीयते । सोलनमण्डलं पूर्वं बघाट इति राज्यम् उच्यते स्म । अत्र राजपरम्परायाः अन्तिमो राजा श्री दुर्गासिंह इति आसीत् । स हि गुणवान् परमसज्जनः विद्वज्जनानाम् आदरकर्ता च आसीत् । तेन हि अस्य स्थानस्य गौरवं चतुरस्रं विकासं गतमभूत् । स्वनामधन्यस्य तस्य काले अतिदूरदेशेभ्यः प्रख्याताः अनेकशास्त्रान्ताः विद्वांसः, योगिनः, साधकाः भक्ताश्च इह आगतवन्तः । तेषां कारणात् इह मण्डले कर्मकाण्ड ज्यौतिषम् अन्याश्च विद्याः प्रसृताः । हिमाचल प्रदेशे नगरमिदम् अद्यापि प्रदेशस्य अग्रेसरम् अस्ति ।

उद्योगानां दृष्ट्या नगरमिदं प्रदेशे प्राथमिकं स्थानं विभर्ति । इदम् आश्चर्यकरम् एव तथ्यं यत् इह हि सहस्रम् उद्योगा- विद्यन्ते । मद्यनिर्माणी इह विश्वप्रसिद्धा । दूरदर्शनोद्योगः, वायुयान-अङ्गानां निर्माणम्, अन्यच्च अनेकविधकार्यजातम् अत्र वर्तते ।

हिमाचल प्रदेशे सेवार्थम् आगताः जनाः प्रायशः सर्वे एव इह नैजानि आवासभवनानि निर्मितवन्तः । अद्यापि यावन्ति भवनानि यावत्या च गत्या इह निर्मीयन्ते तदन्यत्र प्रदेशे दुर्लभम् । अत एव इदम् आभाणक प्रसिद्धम् अभूद् यत् एकवारं सोलनं सेवितवते नान्यत्र निवासो रोचते इति ।

पर्यटनदृष्ट्या अपि अस्य नगरस्य महिमा वर्धमाना एव दृश्यते । इतः कसौली चायल-बड़ोग - राजगढ़ - आदीनि स्थानानि नातिदूरे वर्तन्ते यानि पर्यटकान् प्राकृतिकेन सौन्दर्येण आकर्षयन्ति । किमधिकम्, महती उन्नतिः अस्य भाग्यभाजः नगरस्य पथि विकीर्णा अस्ति ।

राजकीय महाविद्यालयः सोलनम्

★

एका लघुकथा—

# प्रणयपरिणाय:

डा. रूपनारायणपाण्डेय:,

★

'वद, त्वं कमलानगरं गमिष्यसि ?' इति रमापतिः त्रिचक्रयान-(रिक्षायान) चालकमप्राक्षीत् ।

'गमिष्यामि ।'

'किं ग्रहीष्यसि ? अतीव दूरं नास्ति ।'

'श्रीमन्, पञ्चरूप्यकाणि । प्रातः कालोऽयम् । शीतमप्यस्ति ।'

'त्रीणि रूप्यकाणि दातुं शक्यते कथय चलिष्यसि ?'

'नहि नहि । न चलिष्यामि । यूयं श्रीमन्तः शरीरश्रमस्य मूल्यं नावगच्छथ । कथं शीतकालेऽस्मिन् तिष्ठाम्युदरस्य हेतोः ?'

'मा चल ।' इत्युक्त्वा रमापतिः त्रिचक्रयानमुपगच्छन्तं श्यामं जगाद-'अत्र भवान् कुत्र यास्यसि ?'

'अहमपि कमलानगरस्याग्रे यास्यामि । अयं त्रिचक्रयानचालकः साम्प्रतं गन्तुं नेच्छति । आगच्छत्वत्र भवान् । आवां चरणाभ्यां चलावः । प्रत्येकं जनोऽधुना स्वार्थमेव पश्यति ।'

'मित्र ! चलामि । भ्रातः ! सत्यं कथयसि इदानीं मनुष्याणां कृतेऽर्थ एव सर्वस्वमस्ति । नियमस्य नीतेः सदाचारस्य वा कापेक्षा ?

'नीतेरुपेक्षा कुत्र न दृश्यते ? श्रावयाम्येकां घटनाम् । मन्येऽत्र खेदं नानुभविष्यसि। मार्गश्रमोऽप्यावयोर्न स्यात् ।' इति श्यामो रमापतिमवलोकयन् कथयामास ।

'मित्र ! सहर्षं श्रावय । कात्र पीडा ? आनन्द एव भविष्यति ।'

'भद्र ! मनुष्यस्य चित्तगतिर्विचित्रा भवतीति मत्वाभिहितमेवं मया । केचन जना न वाञ्छन्ति भवितुमपरिचितैस्सह । शृणोत्वत्र भवान् ममैकानुजास्ति - नाम्ना रश्मिः । स्नातकोत्तरोपाधिमुपलभ्य, शोधकार्यमपि सम्पाद्य गुरुजनानां चानुग्रहेण विश्वविद्यालये प्रवक्तृपदमलङ्करोति ।'

'कस्मिन् विषये तया स्नातकोत्तरोपाधिरधिगतः ? शोधे च को विषयो गृहीतः ?'

'स्नातकोत्तरोपाधिः संस्कृतविषये, शोधकार्यं च दर्शनशास्त्रे वर्तते। तस्या वरान्वेषणाय मम जनको जगामैकस्य सज्जनस्य गृहम्। तस्य पुत्र एकोऽभियन्तास्ति सुन्दरः शिष्टश्च। तं विलोक्य सम्बन्धं च श्लाघ्यं मत्वा स तस्मै सज्जनाय निवेदयामास- 'मान्यवर। ममैका सुतास्ति। संस्कृत विषये स्नातकोत्तरोपाधिमुपलभ्य, शोधकार्यं च पूरयित्वा प्रयागविश्वविद्यालये पाठयति। कन्या कमनीया विनीता सुशीला गुणवती चास्ति। तव पुत्रो राकेशो विद्वान् गुणवान् रूपवान् सरलः सुशीलः सम्मानिताजीवोपेतश्चास्ति। द्वावपि वयसा रूपेण गुणेन चानुरूपौ विद्येते। यदि रोचतेऽत्र भवते, द्वयोः परिणयः आशु सम्पन्नतां यातु, अहमपि य कृतकार्यो भवेयम्। प्रसीद मयि।'

स सज्जनोऽवादीत्-'तव प्रस्तावो मह्यं रोचते। मम पुत्रः साम्प्रतं सेवाकर्मणि निरतोऽस्ति, तस्याजीवोऽप्युत्तमोऽस्ति। मम जीवितमल्पं प्रतीयते। शरीरे जरा निपतितास्ति। न जाने कस्मिन् दिने प्राणाः निर्गच्छन्तु। अतो तस्य विवाहसंस्कारमाशु सम्पादयितुं कामये। सन्दर्भेऽस्मिन् अनेके जना अधिकारिणो नेतारो व्यवसायिनश्च समागताः। केचन मां प्रभुत्वेन, केचन वैभवेन, केचिच्च कन्यायाः गुणसम्पदा, केऽपि च सद्व्यवहारेण नितरां लोभयन्ति, परं हि कुत्रापि न निर्णीतः सम्बन्धः। अत्रभवान् सज्जनः प्रतिष्ठितश्चास्ति, कन्या चापि भवतः सेवारता विदुषी रूपवती गुणवती चास्ति। इमं सम्बन्धमहमुत्तमं मन्ये।'

'मित्रवर्य ! तव वचनेन मया सन्तोषोऽनुभूयते। अहमपि शीघ्रं पुत्री विवाहं समाप्य परलोकयात्रायै किमपि कर्तुमभिलषामि। अतः श्रीमन् ! दक्षिणा कियती मया देया, यथात्र भवान् प्रसीदतु, मम दीनस्याभिलाषोऽपि सफलतां यातु। इदमपि तथ्यं स्पष्टमस्ति यदहं न कोऽपि नेता, न व्यवसायी, न धनाढ्यः, न चाधिकार्यस्मि; कथञ्चनैव जीवितं यापयामि।'

'अत्रभवान् जानाति मम पुत्राय श्रीमन्तोऽनेके तेषां पुत्रीं सर्वगुणसम्पन्नां साटोपं दातुमिच्छन्ति। केचन सार्धलक्षद्वयमपि प्रदातुं प्रभवन्ति। अत्र भवान् सज्जनः सुहृच्चास्ति। यदि लक्षद्वयं पुत्राय प्रदातुमर्हति, तर्हि विधिरेष फलतु। लोके मम प्रतिष्ठामप्यवलोक्य राशिरेष स्वल्प एवास्ति। अनेन सार्धं वरयात्रायां समुपस्थिता जनाः तथा प्रसादनीयाः, यथा ते तव द्वारेऽसन्तुष्टा न स्युः। जानात्येव भवान् लोकव्यवहारम्।'

'महोदय ! यथा मया पूर्वमेव निवेदितं यदहं कोऽपि धनाढ्यो नास्मि। एतावन्ति रूप्यकाणि मया कथमपि दातुं न शक्यन्ते ? किं भवद्भिरिष्यते-अहं सपरिवारः तव सुताय सुतां सम्प्रदायाजीवनमधमर्णो भवानि ? क्षम्यताम् अत्र भवान् गुणवतीं विदुषीं सेवारतां च वधूं नैव वाञ्छति, किन्तु सम्पत्तिमेव वाञ्छति। भवतु, आज्ञापयतु माम्, गच्छामि। त्वादृशस्य वणिजो गृहे मम सुता कथं सुखम् अनुभवेत् ?'

'मित्र ! किं करोमि ? एषा मम परिस्थितिः या त्वया धैर्येण चैवावगन्तुं शक्यते। प्रतिष्ठाविरुद्धमपि समाजे कर्तुं नोत्सहे। यद्यहं लक्षद्वयादन्यूनमद्य धनराशिं गृहीत्वा पुत्रस्य परिणयं सम्पादयामि, तर्हि ये लक्षद्वयादधिकं दातुं कथयित्वा गताः, तेषां समक्षं किं प्रतिवदिष्यामि। पुनश्च सम्भावितस्याकीर्तिर्मरणादतिरिच्यते। अतो भवान् मह्यं मा क्रुध्यतु। अहमपि विवशो भवतः सुतया सार्धं सुतस्य स्पृहणीयं सम्बन्धं सम्पादयितुमक्षमः सन् व्यथे। क्षमस्व माम्। नमस्ते।'

इति तेन सज्जनेनाभिहितो मम पिता विषण्णो व्यथितश्च स्वगृहमाजगाम, अचिन्तयच्च-'समाजेऽधुनापि वरपितरो न पश्यन्ति कन्याया गुणान्, परं पश्यन्ति केवल धनम्। मम कन्या सुशिक्षिता, रूपयौवनोपेता, विनीता च वर्तते, किन्तु सापि यथेष्टं वरं लब्धुं नार्हति, अर्थवैभवाभावात्। दरिद्राय दुरितोपहता दीनाः कथं प्रयच्छेयुः स्वसुताः ? कथं तेषां दुहितरो विवाहिताः सत्यः सुखिन्यो भवेयुः ? कुतो लभेतायं जनो लक्षद्वयम् ? कोऽत्र याचेत प्रभूत-धनराशिम् ? न्यायेनार्जितं द्रव्यं मम वर्तते। कथमपि जीवनं यापयता मया पुत्रः पुत्री च पाठितौ। मया चिन्तितमासीत् - पुत्री गुणवती सेवारता विद्यते, तस्या उद्वाहः सुखेन भविष्यति हन्त ? ममाभिलाषः सिद्धिं न यास्यति। प्रथमं त्वनुरूपवराः न मिलन्ति, मिलिता अपि ते विवाहसम्मतिं न प्रयच्छन्ति, यदि कथमपि ते सहमता भवन्ति, तेषामर्थपिपासा न शाम्यति। कथं कन्यायाः पाणिं ग्राहयामि ? येषां पुत्राः सन्ति, ते न चिन्तयन्ति - ममापि कन्यास्ति, तस्या विवाहे यदि कोऽपि जन एतावन्तं धनराशिं याचेत, कथमहं तस्मै दास्यामि। भवतु, चिन्तयामि कमपि महाजनं तस्य स्निग्धतमं वा जनं प्रसाद्य, स्वविपदं च निवेद्य, तेन सार्धं सकृत् तत्र गच्छेयम्। यदि स नाङ्गीकरिष्यति, अन्यत्रैवान्वेषयिष्यामि। जगती शून्या न वर्तते। कापेक्षा धनवैभवोपेतस्यैव वरस्य। अस्ति गुणवती मम पुत्री। सा स्वपरिश्रमेणैव विपुलं धनमर्जिष्यति। पुनरपि सकृत् स द्रष्टव्यः को जानाति दैवम् ...... ?'

'मित्र ! तव स्वसा विश्वविद्यालये पाठयति, गुणवती चास्ति, स्वपुरुषार्थेन वैभवशालिनी भविष्यति। कापेक्षा तस्याः प्रदानं कस्मैचन कुबेरायैव

स्यात् । सम्यक् चिन्तितं भवदीयेन जनकेन वस्तुतोऽस्माभिरर्थलिप्सवो जनाः सर्वथोपेक्षितव्याः । विवाहसम्बन्धे ये धनं याचन्ते, तेषां गृहे न पदं निधातव्यम्, ते चास्माभिः सम्मानभावनया नावलोकनीयाः । अर्थलोभः, अर्थपिपासैव वानर्थकारिणी साम्प्रतम् ! भ्रात, अग्रे किं कृतम् अत्रभवतो जनकेन ? अपि तेन तस्यार्थलुब्धस्य सदनं पुनर्गतम् ? कुतूहलं मे वर्धते ?'

श्यामः सहर्षमवादीत् 'सखे ! श्रूयताम् - मम पिता मासद्वयानन्तरं स्वसुः कृतेऽनुरूपमेकं वरं मनसा निश्चित्य, अन्यैर्ज्ञातिभिः साकं तस्य सज्जनस्य गृहं तदीयविचारान् ज्ञातुं पुनर्जगाम । कृतातिथ्यं तं पितावोचत्- 'श्रीमन् ! अहं पुनः श्रीमतः शरणमगमम् । य द्यत्रभवान् किञ्चिदौदार्यं मयि कुर्यात्, मम सुतायाः सौभाग्यं फलेत्, अहञ्चाजीवनं तवाभारमाभरिष्ये ।'

किञ्चित्कालं तूष्णीं भूत्वा स निजगाद 'भ्रातः ! मनुष्यः किमपि चिन्तयति, ईश्वरश्च किमप्यन्यद् घटयति ! मया चिन्तितमासीत्पुत्रस्योद्वाहे लक्षद्वयमधिगम्य कमपि नवमुद्योगमारप्स्ये, भवनं वा निर्मास्यामि, किन्तु विधात्रा मम मनोरथा हताः । मन्येऽयं मम लोभस्य परिपाकः, भवादृशानां सज्जनानामवमानस्य फलम् ।'

'तात ! का विपत्तिरागता ? कथं भवान् विषीदति ? किं कृतं च दुर्दैवेन ? इति मम पित्रा पृष्ठः सखेदं प्रत्यवादीत्-'भ्रातः ! किं कथयामि ? त्रपया मम वागेव न स्फुरति । अत्रभवति गतेऽहं मतिं चकार यत् पुत्रस्य विवाहं तव पुत्र्या साकं, हि कुर्याम् । रात्रौ विचार्य पुत्रमवादिषम्—'वत्स ! अनेके सम्मान्याः पुरुषाः तवोद्वाहसम्बन्धार्थमत्र समागताः सन्ति, तेष्येकस्य दुहिता विश्वविद्यालये संस्कृतप्रवक्तृपदमलङ्करोति, सातीव सुन्दरी गुणवती चाप्यस्ति, यदि तुभ्यं रोचेत, तया सार्धं तव विवाहसंस्कारः सम्पन्नतां यातु । त्वं किमभिलषसि ? अहमाशु मम मनोरथं पूरयितुमिच्छामि ।' इति मयाभिहितः सोऽवदत्-'तात ! प्रथमं त्वहं साम्प्रतं दाम्पत्यं नाभिलषामि । पुनः जानाति भवान् ममैका बालसखी सावित्री नामास्ति । तस्यां प्रीतिः स्थिरा मदीया वर्तते । साद्यापि मामेव प्रतीक्षते । यदि तामहं न परिणयामि, सातीव दीना प्राणान् त्यजेत् । अतोऽहं तया सार्धमेव परिणयं सम्पन्नं कर्तुमभिलषामि ।' इति तस्य वचनेन निराशो भूत्वाहं तस्य विवाहसमस्यां परित्यक्तवान् ।

कतिपयदिवसापगमे तस्यैकेन मित्रेणोक्तम्-'पितवर ? राकेशेन खलु ह्य आर्यसमाजमन्दिरे स्वबालसख्या सावित्र्या साकं प्रणयपरिणयः कृतः; किं भवद्भिर्ज्ञातमिदम् ?' मया गदितम्-'स साम्प्रतं युवास्ति, स्वहिताहितं

च जानाति। तस्मै यद् रोचते, तत् करोति। स स्वयमेव अस्य विवाहकर्म सम्पादयिष्यति। तस्य विवाहेन मया किम्?' अतः सखे! मम पुत्रो मम वशे न वर्तते। कस्य विवाहो मया करणीयः? मया नैव चिन्तितमासीद् यन्मम पुत्रो विनीतः सन् एवमाचरिष्यति। अधुना सन्ततिः पितृपरवत्ता नाङ्गीकरोति क्षम्यताम्।' इत्यभिधाय स विरराम।

'मित्र! प्रगतिशीले समाजेऽस्मिन् यथा यस्मै रोचते, स तथा करोति। कः कस्य वर्तते? अद्यत्वे तु पत्नी पतिं नानुसरति, पतिश्च पतिव्रतां धर्मपत्नीं परिहाय रूपाजीवासु रमते। पाश्चात्य संस्कृतिमनुगच्छन्तोऽद्य बालकाः, बालिकाश्च यौवनागमे रूपं कपक्षपातिनो मन्मथस्य विकाराणामुदये सति कुलं जातिं धर्मं सम्प्रदायं वा विहाय, विवाहात्प्रागेव पित्रोरनुज्ञां विनैव परस्परं प्रणयन्ति, रहसि च यथाकामं रमन्ते, पितरौ गुरुजनान् अपि च मिथ्यालापेन वञ्चयन्ते। पश्यन्तु भवन्तः- यदि मम पुत्रः पूर्वं एव स्वबालसख्यामेवाभ्यवाञ्छिष्यत्, तामेव वा प्राशंसीत्, तेन प्रथममेव स्पष्टं निवेदयितव्यमासीत्-तात! सावित्रीति नाम मम सखी मयि नितरां स्निह्यति, अहमपि तस्याः व्यवहारेण रूपेण शीलेन च तामेव कामये। इति सत्यं विज्ञायात्र भवान् मम परिणयसम्बन्धार्थं कुत्रापि वार्तां मा करोतु? अहं यथावसरं तस्या एव पाणिं ग्रहीष्यामि। त्वं वृथा यत्र कुत्रापि सम्बन्धविषये मा चिन्तयेति। यदि तव सुतः यथाकालमिदं सत्यं निवेदयेत्, तर्हि त्वमपि निश्चिन्तो भूत्वा सम्बन्धाय समागतेभ्यः सज्जनेभ्यः सत्यं निवेद्य प्रसीदेः। समाजस्याद्यतनीं परिस्थितिमवलोक्य किशोरयोः प्रणयसम्बन्धं विहन्तुं कः शक्नोति, परं तावपि सत्यमभिधाय, काले काले च स्वप्रणयसम्बन्धं च स्पष्टं कृत्वा पितरौ गुरुजनांश्च मा तुदेताम्, सत्यभाषणे को दोषः? अत्र भवान् अपि तस्य परिणयार्थमेव मा खिद्यस्व। तव पुत्रेण यया कन्यया सार्धं प्रणयपरिणयो विहितः, तां कन्यां सहर्षं वधूरूपेणोररीकृत्य तयोर्दाम्पत्यस्य मङ्गलमाचरतु। यौवनकालमुपगम्य पुत्रो मित्रवद् भवति। तेन सह मधुरसम्बन्धं संस्थाप्येदानीं पितृभ्यां सुखमनुभवितुं शक्यते। मत्कृतेऽपि श्रीमता कापि चिन्ता न कर्तव्या। मम पुत्री साम्प्रतमपि मम वशे वर्तते। तस्यां मया भारतीयसंस्कृतेः संस्काराः समाहिताः सन्ति। मया प्रत्यक्षमप्रत्यक्षमपि तस्याः प्रणयसम्बन्धे परिज्ञानं कृतम्, तत् यास्याधुनिके युगेऽपि, नवीने वयसि स्वल्पमपि च कस्मिन्नपि युवके प्रणयमविज्ञाय मया प्रसादोऽनुभूतः। परमेश्वरं प्रार्थये मम पुत्र्याः परिणयसम्बन्ध आशु स्थिरो भवतु। न्यायप्रियः प्रभुर्नूनं मम प्रार्थनामङ्गीकरिष्यति।'

'मित्र! त्वं धन्योऽसि, यस्य सुता वर्तते - गुणवती विनीता सदाचारोपेता गुरुवचनकारिणी च। मातृदेवो भव, पितृदेवो भव, आचार्यदेवो

भव - इत्यादीनि श्रुति वचनान्यनुगच्छन्ती तव सुतापि धन्यतरास्ति। मन्येऽत्र संस्कृत भाषाया अध्ययनस्य महान् संस्कारोऽपि तस्यां विद्यते। पाश्चात्य-संस्कृतिसङ्करे युगेऽस्मिन् सदाचारस्य विनयस्य चाधानाय संस्कृतभाषाया अध्ययनं बाल्यकाले स्वैरमेव कर्तव्यमस्ति। संस्कृताध्ययनं विना भारतीयाः संस्कारा नियतमस्मासु नष्टा एव भविष्यन्ति खिद्येऽधुनाहं धनलोभात् कदाचनापि मया स्वपुत्रो देवभाषाध्ययने न नियोजितः। आङ्ग्लभाषाप्रभावेण मया परम्पराप्राप्तस्य संस्कृतज्ञानस्याप्युपेक्षा कृता'

'सखे ! मन्ये-सत्यं त्वं भणसि अधुना विलम्बते। नमस्ते।'

इत्युक्त्वा मम जनकस्ततः स्वगृहमाजगाम। भ्रातः, एव धनस्य लोभेन समाजेऽनीतय प्रभवन्ति। प्रगतिशीला अपि जना पुत्रस्य विवाहे धनलोभात् सुयोग्यामपि कन्यां परित्यजन्ति, स्वीकुर्वन्ति च निर्गुणां पतितां च सुतां धनदानां धनिकानां जनानाम्। पश्यन्तु भवन्तः-इदानीं दीनानां दरिद्राणां च कन्याश्चिरमनूढाः सत्यः, न जाने, कुत्र कुत्र भ्राम्यन्ति, कान् कांश्चोपग-च्छन्ति, काः काश्च पीडाः सहन्ते, अन्ते च जीविताशां परित्यजन्त्योऽकाले विषेण शस्त्रेण सरिति वा पतित्वा प्राणान् जहति अर्थलुब्धाः पुरुषाधमा नावलोकयन्ति तासां कन्यानां क्लिष्टं जीवितम् तासां नरकतुल्याज्जीवितात् मरणमतिरिच्यते। कथमपि पुत्रं परिणीय अपि केचित् स्वगृहेऽर्थलोभाद् दहन्ति नवपरिणीतां वधूं मर्मवचनैरनलेनान्यैश्च दारुणैरुपायैः अस्माद्धे-तोरद्य काश्चन युवतयः पतिगृहं गन्तुं पाणिं ग्राहयितुं चापि नोत्सहन्ते'

'मित्र ! यथार्थमुक्तमत्र भवता' किन्तु स्वार्थपरा मनुष्या लोककल्याणं न पश्यन्ति, पश्यन्तोऽप्युपेक्षन्ते यद्यत्वे तु ये स्वार्थनिष्पादनचतुरा न, भवन्ति ते एव मूढा गण्यन्ते। मादृशाः सरला जनाः कथं निर्वाहयन्तु जीवितम्? भवतु, कथयतु भवान् तव स्वसुः परिणयः सम्पन्नो न वा?' इति रमापतिरपृच्छत्।

श्यामोऽवोचत्-'मम स्वसुः पाणिग्रहणसंस्कार आगामिनि मासे सम्प-त्स्यते-एकेनाध्यापकेन सार्धम्, योऽपि तस्मिन्नेव विश्वविद्यालये पाठयति, यत्र साध्यापिकास्ति। अस्या घटनायाः पश्चात् स्वस्रा निर्णीतं यदह तेनैव पुरुषेण साकं सम्बन्धं विधास्यामि, यो यौतुकं न वाञ्छति। स तस्या भावी पतिरतीव सरलः शान्तश्चास्ति। तेन विशदीकृतं यदहं गुणवतीं पत्नीं कामये, न तु धनं सम्पत्तिं वैभवं वा। धनं तु याति, आयाति च, किन्तु विशुद्धहृदया सुयोग्या शिक्षिता गुणवती च पत्नी सर्वत्र न सुलभते, कोऽपि भाग्यवान् हि तादृशीं जायां सौभाग्येन प्राप्नोति। दाम्पत्ये मिथः पूतप्रणयस्य प्राधान्यं भवति, न तु भोगपदार्थानाम्। बाह्यं सौन्दर्यं समाश्रित्य कृता

प्रणयपरिणय ।, कालान्तरे प्रणयिनोश्चित्तयोः पार्थक्यात् प्रीतियोगाभावाद्दाम्पत्यसुखमसम्भावनया वा वैपरीत्यं भजते ।

कमलानगरं समीपमागतम् । रमापतिः स्वगृहं प्रतिगच्छन् अवादीत्- 'अधुना मम गृहमग्रे वर्तते । मया गम्यते । त्वया साकं वार्तालापं कुर्वता मार्गक्लेशो नानुभूतः । त्वादृशः सुहृत् सौभाग्येन मिलति । चलामि । नमस्ते ।'

'मित्र ! गच्छ अहमपि मम गृहस्य समीपमेवागतोऽस्मि । नमस्ते ।' इति रमापतिमभिधाय श्यामः स्वगृहं प्रत्यगमत् ।

संस्कृत प्रवक्ता, रा. इका सितारगञ्जः,
नैनीतालम् (उ० प्र०) २६२४०५

## निवेदनम्

कृपया वा० शुल्कं शीघ्रतया प्रेषयित्वा अस्माकं साहाय्यं विधेयम् ।

सम्पादकः

# महत्वपूर्णाः प्राप्याः विशेषाङ्काः

१. विश्व संस्कृत सम्मेलनाङ्कः
२. नवशब्द निर्माणाङ्कः
३. नवकथानिकाविशेषाङ्क
४. संस्कृतचलचित्रविशेषाङ्क
५. श्री शङ्कराचार्य विशेषाङ्कः

## मू ल्य म

एकस्य मासाङ्कस्य मूल्यं रुप्यकचतुष्टयं विशेषाङ्कस्य मूल्य अष्टौ रूप्यकाणि । पूर्वं मूल्यप्राप्तावेव अङ्का प्रेषयिष्यन्ते ।

— प्रधान सम्पादकः

# संस्कृतशोधछात्रोणां कृते उपयोगिनः

दिव्यज्योतिष प्राप्या गताङ्का

| सन् | वर्षम् | अङ्काः |
|---|---|---|
| १९५६ | १ | १ |
| १९५७ | २ | २ |
| १९५८ | ३ | १२ |
| १९५९ | ४ | ८ |
| १९६० | ५ | ८ |
| १९ १ | ६ | ७ |
| १९६२ | ७ | १, २, ३, |
| १९६४ | ९ | २, ६, |
| १९६६ | ११ | ४, ८, ९, ११ |
| १९६७ | १२ | ५ |
| १९६८ | १३ | ३, ४, |
| १९६९ | १४ | ४, ६, |
| १९७ | १५ | १, ४, १० |
| १९७१ | १६ | १, २, ४, ५. ६ |
| १९७२ | १७ | ३, ५, ६, ७, ८, |
| | | ९, १०, ११, १२, |
| १९७३ | १८ | १, २, ८, ९, १०, |
| १९७४ | १९ | २ ३, ४, ५, ६, |
| | | ७, ८, ९, १०, |
| | | ११, १२, |
| १९७५ | २० | १, ३, ४. ५, |
| | | ६, ७, ८, ९, |
| | | १०, ११, १२, |
| १९७६ | २१ | २, ३, ४, ५, ६, |
| | | ८, ९, १०, ११, १२ |
| १९७७ | २२ | २, ३, ४, ५, |
| | | ९ १०. ११, १२, |
| १९७८ | २३ | १, २, ३, ८ |
| १९७९ | २४ | १, ३, ४, ५, ६, |
| | | ७, ८, ९, १०, |
| | | ११, १२, |
| १९८० | २५ | १ से १२ तक |
| १९८५ | २९ | १ से १२ तक |
| १९८६ | ३० | १ से १२ तक |

—★—

# हिमाचल दिवस 1987

## निर्धनता से समृद्धि की ओर: हिमाचल की कहानी

आज से ३९ साल पहले जब हिमाचल प्रदेश बना, तब से प्रदेश में एक मौन शांतिपूर्ण सामाजिक और आर्थिक क्रांति का दौर-दौरा है।

वीरभद्र सिंह, मुख्य मंत्री, हि० प्र०

—:o:—

प्रदेश में जो एक आश्चर्यजनक परिवर्तन आया है उसकी प्रतीति यहां के १६९१६ गांवों में रहने वाले लोगों के उन्नत होते जीवनस्तर से हो जाती है। यहां की ४५ लाख की आबादी का अधिकांश गांवों में ही बसता है।

अपने देवताओं में आस्था रखने वाले और दूसरों की आस्थाओं के प्रति समान रूप से आदर रखने वाले सरल और परिश्रमी पहाड़ी अवाम की परम्पराओं को सही मानों में प्रतिबिम्बित करते हुए इस क्रांति ने पहाड़ी लोगों की एक नई पीढ़ी को जन्म दिया है।

आज एक औसत ग्रामीण शिक्षित, सजग और अधिक

जानकार है । उसे अपने आप पर और अपने भविष्य के प्रति विश्वास है।

सन् १९४७ में हिमाचल अलगाव, उपेक्षा, निर्धनता, निरक्षरता और कुस्वास्थ्य की तस्वीर था। आज इसे पहाड़ी क्षेत्रों के विकास के अगुआ के रूप में जाना जाता है; सन् १९४८ में यह तीस एक पहाड़ी रियासतों को मिला कर जल्दी में बनाई गई एक प्रशासनिक इकाई से ज्यादा और कुछ नहीं था। आज यह भारतीय संघ का एक सुसंगठित राज्य है और राजनीतिक स्थिरता तथा प्रजातंत्र इसकी परम्परा बन गई है।

भौगोलिक दृष्टि से हिमाचल प्रदेश एक टूटी-फूटी इकाई था बड़े पहाड़ी क्षेत्र पंजाब में थे। भौगोलिक, सांस्कृतिक, जातीय और भाषायी दृष्टि से इन सभी क्षेत्रों के लोग एक थे केवल कृत्रिम प्रशासनिक दीवारों ने ही उन्हें एक दूसरे से जुदा कर रखा था।

उस समय हिमाचल प्रदेश में विश्वविद्यालय की बात तो दूर कोई डिग्री कालेज तक नहीं था। शिक्षा सुविधाओं के नाम पर महज ५४६ स्कूल थे और इनमें से भी ज्यादातर प्राइमरी स्कूल ही थे। स्वास्थ्य संस्थाओं की संख्या ८८ थी और इनमें से भी अधिकांश आयुर्वेदिक औषधालय थे।

हालांकि जोगिन्द्रनगर जल-विद्युत परियोजना हिमाचल प्रदेश में स्थित थी लेकिन प्रदेश में बिजली प्राप्त गांवों की संख्या मात्र आधा दर्जन थी। इसी तरह ३०० से भी कम गांवों को नलकों के जरिये पीने के पानी की सुविधा उपलब्ध थी। सड़कों की लम्बाई मुश्किल से २८८ कि. मी थी। ये कच्ची सड़कें न तो कहीं जुड़ती थीं और न हर मौसम में चलने के काबिल थीं।

मुख्यत: कृषि पर निर्भर आबादी की माली हालत भी बड़ी खस्ता थी। न कोई नकदी फसल थी और न फलों की पैदावार। जिस जमीन पर खेतीहर हल चलाते थे, अधिकांशत: वह जमीन उनकी नहीं थी नकरीबन हर खेत में सिर्फ मोटा अनाज पैदा होता था। उत्पादन भी बहुत ही कम था। हिमाचल के किसान कुल मिला कर सालाना ७००० टन अनाज ही पैदा करते थे, रोजगार के अवसर बहुत ही कम थे। लोग सशस्त्र सेनाओं में सामान्य सैनिक के रूप में भरती होते थे और केन्द्रीय सरकार में भी उन्हें निम्न श्रेणी का काम ही मिलता

था । कई लोगों को मजबूरन मैदानी शहरों में घरेलू नौकरों की तरह काम करना पड़ता था

सन् १९५२ से योजनाओं का दौर शुरू हुआ और इसी के साथ पहाड़ों के सरल और मेहनती लोगों के आर्थिक उत्थान की शुरूआत हुई : प्रदेश में नकदी फसलों, फलों और सब्जियों का उत्पादन शुरू हुआ । क्रांतिकारी भूमि-सुधार लाए गये जिनसे वास्तविक जोतदारों को मिलिकयत के हकूक मिले । सिंचाई सुविधाओं का प्रबन्ध किया गया । किसानों को उन्नत बीजों के साथ-साथ रियायती दरों पर रासायनिक उर्वरक बांटे गए : फलोत्पादकों को पौध सामग्री, सस्ती दरों पर कीटनाशक, फफूंदनाशक और स्प्रे मशीनें उपलब्ध कराई गई । फलों की बिक्री और विधायन की सुविधाएं जुटाई गई ।

हिमाचल प्रदेश भारत के सेब राज्य के रूप में जाना जाने लगा हैं । तब भी न तो लोग और न ही सरकार विश्राम के लिए रुकना चाहते हैं । अब हम प्रदेश को देश की "फलों की चंगेर" के रूप में परिवर्तित करने का सपना संजोए हुए हैं । नकदी फसलें, खास तौर पर खुम्ब, जैतून, हाप्स, चिकोरी-बेमौसमी सब्जियां और सब्जियों के बीज आदि बड़े पैमाने पर पैदा किये जा रहे हैं ।

इसी पिछले साल राज्य के उत्पादकों ने चार लाख टन फल, १३ लाख टन अनाज, और बड़ी मात्रा में सब्जियां पैदा कीं । फलों और सब्जियों से अब सालाना ५०० करोड़ रुपये से ज्यादा की आर्थिक गतिविधि पैदा होती है । वास्तव में इस साल प्रदेश ने उत्पादन बहुलता की समस्या का सामना किया । यहां सेब, सन्तरे, किन्नू, गलगल, अदरक और शहद का रिकार्ड उत्पादन हुआ ।

हिमाचल प्रदेश सरकार भारत की पहली राज्य सरकार थी जिसने नाशवान फलों के लिए समर्थन मूल्य दिये जिससे बागवानों को ५ करोड़ रुपये का लाभ हुआ । फलों की डिब्बाबंदी के लिए परम्परागत लकड़ी की पेटियों की बजाए गत्ते के डिब्बों के इस्तेमाल को तेज करने के लिए अब सरकारी क्षेत्र में १३.७० करोड़ रुपये की लागत से गत्ते के डिब्बों का एक कारखाना बनाया जा रहा है । इस उपाय से कीमतों पर और स्फूत के वृक्षों का कटान रोकने में बड़ी मदद मिलेगी ।

सन् १९५१ की जनगणना के मुताबिक प्रदेश में साक्षरता का प्रतिशत ७.१ था वर्ष १९४८-४९ में यहां का कुल बजट ८६

लाख रुपये से ज्यादा नहीं था। पहली पांच वर्षीय योजना से ठीक पहले प्रति व्यक्ति आय २४० रुपये थी। स्वयं पहली योजना की सीमा ५.२७ करोड़ रुपये थी जबकि वास्तविक खर्च करोड़ रुपये तक भी नहीं पहुंचा।

इसके विपरीत अब साक्षरता प्रतिशत ४५ से भी ज्यादा और प्रति व्यक्ति आय २,५३९ रुपये है इस साल राज्य का बजट ८११ करोड़ रुपये से ज्यादा का है वार्षिक योजना २३में.७० करोड़ रुपये की है।

अब राज्य में करीब ९.७०० शिक्षा संस्थाएं एशिया के पहले बागवानी एवं वानिकी विश्वविद्यालय सहित तीन विश्वविद्यालय और ३० डिग्री कालेज हैं। हिमाचल के अपने मेडिकल कालेज, आयुर्वेदिक कालेज, वैटरिनरी कालेज और इंजीनियरिंग कालेज, है इनके अलावा अनेक पोलिटेक्निक और औद्योगिक प्रशिक्षण संस्थान भी है।

राज्य के लगभग ९५ प्रतिशत गांव को बिजली और ८५ प्रतिशत गांवों को नलों के जरिए पानी उपलब्ध करा दिया गया है हमने अगले मार्च महीने तक सभी गाँवों को बिजली और १९९१ से पहले पीने का पानी उपलब्ध कराने का लक्ष्य रखा है।

प्रदेश और उसके लोगों के आर्थिक उत्थान के लिए हमारे भावी कार्यक्रमों में तेजी से ऐसे मूल्यवर्धित उद्योग लगाना जिनसे न तो पर्यावरण सतुलन बिगड़ता है और न प्रदूषण पैदा होता है, प्राइवेट उद्यम की सहूलियत से पर्यटक सुविधाओं का तीव्र गति से विस्तार करना, सन् २००० तक प्रदेश के कम से कम ५० प्रतिशत क्षेत्र को वनों के अधीन लाना और १९९५ तक ५०० करोड़ रुपये की लागत से ४७०० मेगावाट बिजली पैदा करना शामिल है।

हमने अपने लक्ष्यों की प्राप्ति के लिए ठोस कदम उठाये हैं। उद्योगपतियों को बड़े ही आकर्षक प्रोत्साहन दिये जा रहे हैं सामान्य उद्योगों को २५ प्रतिशत विदेश उपदान दिया जात है जिसकी अधिकतम सीमा २५ लाख रुपये हैं। इलैक्ट्रानिक उद्योगों को ५० लाख रुपये की सबसिडी दी जाती हैं इसके अलावा परिवहन, बिजली आदि पर भी सबसिडी दी जाती है। अब अन्दरूनी क्षेत्रों में भी बुनियादी सुविधाएं उपलब्ध हैं और हमने इन क्षेत्रों में उद्योग लगाने के लिए और अधिक प्रोत्साहन देने का फैसला किया है।

हिमाचल प्रदेश पहला राज्य था जिसने होटलों और रेस्तरां सहित पर्यटन को एक "उद्योग" के रूप में मान्यता दी। हम इस क्षेत्र में स्थापित लोगों को हिमाचल में अपनी इकाइयां लगाने के लिए आमंत्रित कर रहे हैं जिससे के यहाँ के युवा उनके अनुभव से लाभ उठा सके। राज्य पर्यटन विकास निगम की भूमिका केवल गैर-विकसित क्षेत्रों और प्रोत्साहन देने वाली गतिविधियों तक ही सीमित रहेगी

# पहाड़ी भाषा कोष

## हि. प्र. कला संस्कृति भाषा अकादमी द्वारा पहाड़ी भाषाकोश के निर्माणार्थ आयोजित विद्वद्गोष्ठी

शिमला कुछ मास पूर्व हि प्र कलासंस्कृति भाषा अकादमी द्वारा शिमला गेयटी थियेटर में विद्वानों की एक विशेष सभा अकादमी सचिव श्री वंशीराम शर्मा द्वारा बुलाई गई थी। इस में प्रदेश के सभी जिलों से प्राय: विद्वानों ने आकर भाग लिया। यह सभा इस हेतु बुलाई गई थी कि पहाड़ी भाषा के कोश निर्माण के विषय में उन के विचार जाने जाते। इस गोष्ठी की अध्यक्षता संसद्सदस्य प्रो श्रीनारायण चन्द पराशर ने की। प्रारम्भिक मुख्यभाषण आचार्य श्रीदिवाकरदत्त शर्मा ने दिया। श्री शर्मा ने कोशनिर्माण कार्य को कठिन बताते हुए कोश निर्माण की प्रक्रिया पर विस्तार से प्रकाश डाला। अन्य अनेक विद्वानोंने भी अपने अपने विचार इस सम्बन्ध में प्रकट किये। प्रो नारायण चन्द पराशर ने अपने अध्यक्षीय भाषण में कहा प्रदेश की बोलियों के शब्दों को एकत्रित करते समय यह ध्यान रक्खा जाना जरूरी है कि बोलियों के ठेठ शब्द कहीं छूट न जाए। प्रो. केशव शर्मा ने अपने विचारों में संस्कृत कोश निर्माण पद्धति के आधार पर अकादमी को इस दिशा में आगे बढ़ने का परामर्श दिया। ठा. मोलूराम ने बताया कि अकादमी ने काफी शब्द एकत्रित करवा भी लिये हैं अब उन का ठीक तरह से सम्पादन आरंभ कर देना चाहिये इससे कोशनिर्माणका काम आगे बढ़ सकेगा। अन्तमें अकादमी के सचिव डा वंशीराम शर्मा के यत्र तत्र स्पष्टीकरणों और विचार चर्चा के साथ यह सफल संगोष्ठी सम्पन्न हुई।

# लघु पत्रकार गोष्ठी

मार्च मास में शिमला के गेयटी थियेटर में हि प्र. कला संस्कृति भाषा अकादमी के तत्वावधान में एक लघु पत्रकार गोष्ठी का आयोजन किया गया। इसमें प्रदेश के संस्कृत हिन्दी उर्दू अंग्रेजी पत्रकारों ने भाग लिया। इसकी अध्यक्षता दैनिक हिन्दी ट्रिब्यून के उपसम्पादक श्री विजय सहगल ने की। आपने हिमाचलसे "पत्रकारिता का इतिहास और सम्भावनाएं" इस विषय पर अपना शोध पूर्ण पत्रपढ़ा। इसमें आज़ादी सेपूर्वकालीन पत्रों केसाथ साथ आधुनिक पत्रों की भी संक्षेप से चर्चा की गई। अन्य कई पत्रकारों ने भी इस समय अपने २ विचार प्रस्तुत किये।

इस अवसर पर निदेशक प्रदेश भाषा विभाग तथा लोकसम्पर्क भी उपस्थित थे। यह पहला अवसर था जब हिमाचल के पत्रकारों को एक मञ्च पर एकत्रित किया गया था। अकादमी कुछ पत्रपत्रिकाओं को अनुदान भी प्रदान कर रही है। भाषा अकादमी के सचिव डा.वंशीराम शर्मा ने यह भी बताया। इस अवसर पर प्रदेश के उन पत्रकारों ने-जो वास्तव में पत्रकार हैं और स्वयं खर्चा करके पत्र चलारहे हैं एवं पत्रों का सम्पादन भी कर रहे हैं-अपने महत्व पूर्ण विचार सामने रखे और कहाकि यदि लोकसम्पर्क विभाग प्रादेशिक पत्रों को अधिक विज्ञापन प्रदान करे तो इन पत्रों को अधिक बल मिलेगा। कुछ पत्रकारों ने गोष्ठी के शीर्षक पर ही अनावश्यक चर्चा छेड़ दी कुछ यह कह रहे थे कि यह विषय तो लोक सम्पर्क विभाग का है अकादमी का इससे क्या लेना देना ? परन्तु वे लोग यह क्यों भूलते हैं कि पत्र ही कला संस्कृति-और भाषा के प्रचार प्रसार के प्रमुख साधन हैं। कुछ विद्वानों का विचार था कि सरकारी सहायता से बड़ी हानि पत्रकारिता को किसी और से नहीं होती। अन्य बन्धु यह भी कह रहे थे कि जब से विज्ञापन आदि सरकारी सहायता पत्रों को मिलने लगी है तबसे पत्रकारिता प्रायः समाप्त ही है प्रदेश में।

---

# हिमाचल प्रदेश तेज़ी से बदलता हुआ परिदृश्य

प्रधान मन्त्री श्री राजीव गांधी

आज हिमाचल प्रदेश अपनी ३९वीं वर्ष गांठ मना रहा है। इस अवसर पर बधाई के पात्र वास्तव में यहां के लोग हैं जिन्होंने अपने राज्य की प्रगति के लिए निरंतर और अनथक प्रयास किये।

**इस मुद्दत की सबसे महत्वपूर्ण उपलब्धियां : प्रदेश के लोगों में एकता की भावना का संचार और राज्य में आयी राजनीतिक स्थिरता।**

इन वर्षों में राज्य में सड़क-निर्माण, कृषि और बागवानी के विकास, पर्यटक सुविधाओं के विस्तार बिजली-उत्पादन और औद्योगीकरण के क्षेत्रों में शानदार प्रगति हुई है। इन्हीं वर्षों में समाज के कमजोर वर्ग लाभान्वित हुए हैं और खास जोर अनुसूचित जातियों, अनुसूचित जनजातियों और पिछड़ी श्रेणियों के उत्थान पर रहा है। इनके अतिरिक्त भूतपूर्व सैनिकों को भी लाभ पहुँचा है।

हिमाचल प्रदेश, जो १९४८ में अलगाव, घोर उपेक्षा, निपट निर्धनता, निरक्षरता और कुस्वास्थ्य की एक दुःखद तस्वीर पेश करता था, आज पहाड़ी क्षेत्रों में विकास के अगुआ के रूप मे जाना जाता है।

प्रधान मन्त्री श्री राजीव गांधी के गतिशील और प्रेरक नेतृत्व तथा मुख्य मन्त्री श्री वीरभद्र सिंह की कुशल रहनुमाई में वर्ष १९८७-८८ आम आदमी को लाभ पहुँचाने के लिए नई पहलों का वर्ष होगा।

इस साल विकास की गति और तेज होगी। राज्य ने और अधिक लाभार्थियों को सामाजिक सुरक्षा योजनाओं के अन्तर्गत लाने, हजारों ग्रामीण मकान, शौचालय और धूम्ररहित चूल्हे बनाने, जनजातीय क्षेत्र में अनुसूचित जनजाति के विद्यार्थियों को मुफ़्त पाठ्य पुस्तकें उपलब्ध करने, उर्वरकों पर उपदान जारी रखने, नए भूमि-ग्राहियों को टी. डो अधिकार देने "वृक्ष पट्टा" योजना शुरू करने, छोटे और सामान्त किसानों को ऋण-राहत देने, पुराने सेवानिवृत लोगों को न्यूनतम पेंशन में वृद्धि करने पंचायती राज की संस्थाओं को और अधिक अधिकार, और उत्तरदायित्व देने और अधिक धन उपलब्ध कराने तथा ग्रामीण क्षेत्रों में तेजी से बैंकिग सेवाओं का विस्तार करने की योजना बनाई है।

आज हिमाचल के सभी लोग अपने प्रदेश की प्रगति के लिए और अधिक उत्साह तथा तत्परता से काम करने और एकता, अखण्डता और साम्प्रदायिक सद्भाव के लक्ष्यों को मज़बूत करके राष्ट्र की सेवा करने के अपने संकल्प में एकजुट हैं।

श्री वीरभद्र सिंह मुख्य मंत्री

# हि० प्र० संस्कृत शिक्षक परिषद

गतेभ्यः कतिपयवर्षेभ्य प्रदेशे हि. प्र संस्कृतशिक्षकपरिषद् सततं प्रशासनेन सह संस्कृतप्रसारविकाससाधनाय प्रयासरता। वहु बारं शिक्षासचिवेन सह मन्त्रणा भवति यत्र सर्वेऽपि सम्बद्धाः शिक्षाधिकारिणः आहूयन्ते तत्र विचारविमर्शश्च जायते। परिषदः कतिपय-प्रस्तावाः प्रशासनेन स्वीकृताः। इदानीं शिक्षानिदेशालये विशेषसंस्कृतशिक्षाधिकारिणो नियुक्तिः शिक्षापाठयक्रमेषु च संस्कृतस्यावश्यकसन्निवेशः इति विषयद्वयं मुख्यरूपेण प्रचलति।

अत्र पूर्णप्रगतिर्न दृश्यते यतोहि संस्कृतविद्वांसः स्वयमेव एकमतं न धारयति तस्माच्च प्रशासनं स्वकार्यपूर्तौ विलम्वं कुरुते। अहं सर्वानपि सुरगिरः समुपासकान् प्रदेशस्य प्रार्थये यद्भवद्भिः एकमतमनुसृत्य प्रशासनं सस्कृतोत्थानाय विवशी करणीयम्। यदि-अस्माकं पारस्परिकमतभेदेषु न्यूनता न भविष्यति तु संस्कृतोत्थानसम्वन्धि-सर्वमपि कार्यजातं "यथा-पूर्वमकल्पयत्" वत् तथैव स्थास्यति। युगधावनिकायाञ्च प्रदेशसस्कृतज्ञाः संस्कृतञ्चात्रोपेक्षितमेव भविष्यति। -- —

## नवीनशिक्षापद्धतौ संस्कृतस्योपेक्षा

मान्याः! सुरगिरः समुपासकाः भारतप्रशासनेन निरन्तरं नवशिक्षापद्धतिः सर्वत्र प्रचारं नीयते। अत्र निःसन्देहं संस्कृतं सर्वथा उपेक्षितम्। यद्यपि सर्वेषु प्रदेशेषु विषयममुं परिलक्ष्य विदुषां-अध्यापक-प्राध्यापकानाञ्च विचारग्रहणमपि कृतं प्रशासनैः परन्तु तथापि सस्कृत-विषये न जाने प्रशासनेन कथं परमैव उदासीनता प्रदर्शिता?

एकतः भारतस्य विघटनं प्रतिदिनं भाषाधारमाश्रित्य दृष्टिपथमवतरति-अन्यतश्च प्रशासनं संस्कृतस्य पूर्णोपेक्षां करोति। एतत् सर्वं कियद्-दुःखकरम्? एतदर्थञ्च संस्कृतज्ञैः हस्ताक्षरान्दोलनमपि प्रारब्धम्। परन्तु यावत् वार्तालापेन बारं २ मिलनैन भारतस्य शिक्षामन्त्री, वित्तमन्त्री, प्रधान-मन्त्री, प्रान्तीय मुख्यमन्त्रिणः च न प्रतिवोध्यन्ते तावन्न कार्यसिद्धिः सुगमा। प्रा तेषु प्रान्तीयसंस्कृतविदुषामुपरि भार एषः। तैः-इदानीं सुप्तैर्न स्थेयमपितु प्रतिमासमेतद्विषपकशिष्टमण्डलानि प्रशासनेन मिलेयुः प्रतिबोधयेयुश्च शासनम्। अथ केन्द्रे दिल्लीस्थितविद्वद्भिरेतदर्थं केवलं हस्ताक्षराभियानमात्रे एव न समयोऽतिवाहनीय अपितु-सर्वकारः संस्कृतसन्निवेषाय शिक्षायां विवशीकरणीयः विभिन्ननीतिसाधनैः दिल्यां संस्कृतस्य प्रभाविविद्वन्मण्डल विराजते। सर्वैः परस्परं सम्मिल्य शक्तिः स्वीया समुत्पादनीया येन प्रशासनं नामितं स्यात् देशहितस्य च सर्वोपरि कार्यमिद सिद्ध स्यात्।

**सूचना**— मार्च-अप्रैल १९८७ के दो अंक कई स्थानों से वापिस आए हैं। जिनको ये अंक न मिले हों कृपया वे हमें लिखेंगे तो हम उन्हें ये अंक भेज देंगे। — सम्पादक

# संस्कृतशोधसंस्थानस्य अभिनवप्रकाशनानि सूनृता

## ( सं० गीत काव्य )

दिव्यज्योतिषः प्रधानसम्पादकेन श्रीमदाचार्यकेशवशर्मणा प्रणीतं सचित्रं त्वारिंशत्सुललितपद्य—गद्यगीतग्रथितं पुरीस्थश्रीजगन्नाथ सं० वि० विद्यालय-चरस्यश्रीमदाचार्यप्रवर डा० सत्यव्रतप्राक्कथन समुपेतं संस्कृत जगति महत्वपूर्णं व्यम्

— मूल्यम् २५ रु० डाक व्ययः पृथक् —

★

## पथ्यापथ्य विनिर्णयः

हिमाचलप्रदेशस्य सुविख्यातराजवैद्य स्व० पञ्चाननशर्मणा महाविदुषा १०५ वर्ष पूर्वं प्रणीतः सं० टीका सहितस्तथा हिन्दीटीकया समुपेतः—दुर्लभो ग्रन्थः ।

— मूल्यम् २० रु० डाक व्ययः पृथक् —

★

## हिमाचलप्रदेशे संस्कृतप्रसारो विकासश्च

स्वातन्त्र्यात्परं हिमाचलप्रदेशे संस्कृतप्रसारविकासविषये यदायोजनादिकं जात तस्य सचित्रं विवरणं दिव्यज्योतिषः प्रधानसम्पादकेन श्रीमदाचार्यकेशव—शर्मणाऽस्मिन् ग्रन्थे ग्रथितम् ।

— मूल्यम् ५० रु० डाक व्ययः पृथक् —

★

त्वर्यताम् त्वर्यताम् त्वर्यताम्

प्रतयः स्वल्पा एव सन्ति

युगपत् पुस्तकत्रयं, अशीतिरूप्यकैः प्राप्यते

— प्राप्तिस्थानम् —

संस्कृत शोध संस्थानम्, भारती विहार मशोवरा, शिमला-७

# विषयानुक्रमः





## दिव्यज्योतिः,

**हिमाचलप्रदेश — पंजाब- हरियाणा-जम्मूकश्मीरमध्यप्रदेश — राजस्थान—महाराष्ट्र उत्तरप्रदेशशासन-स्वीकृतं केन्द्रशासनपुरस्कृतं सचित्रं संस्कृतमासिकम् ।**

### पत्रस्य उद्देश्यानि तथा नियमाः

सरल- रस-सुबोध-साधनैः सर्वस्मिन् संसारे संस्कृतस्य प्रसारः, साहित्यान्तर्गतानां सकलकलानां समन्वेषणं, संसारस्य हितसम्पादनम् , एवं लौकिक—अलौकिकस्वातन्त्र्यस्य प्राप्तिः।

"दिव्यज्योतिः" प्रतिमास पञ्चदशतारिकायाम् (आङ्ग्लमानेन) प्रकाशित भवति।

अस्य वार्षिक मूल्य २० रु० अर्धवार्षिकं १५ रु० एकस्याङ्कस्य च रु० १-७५ भवति।

वर्षारम्भः आश्विन—मासतः भवति। ग्राहकः कस्मादपि मासाद् भवितु शक्नोति।

ग्राहकैः, "सम्पादक, दिव्यज्योतिः, भारती विहार, मशोबरा, शिमला-१७१००७ हि. प्र.' इति संकेते धनादेशेन वा शु. प्रेषणीयम्।


## परिचयः

संस्थापकाः तथा आद्यसम्पादकाः आचार्यश्रीदिवाकरदत्तशर्माणः, दूरभाषः 3859

प्रधानसम्पादकः— प्रा० केशव शर्मा एम. ए., एम. फिल, साहित्यरत्नम्, 8-200

दिव्यज्योतिः कार्यालयः भारती विहारः, मशोबरा, शिमला-७ (हि.प्र.)

मुद्रकः प्रकाशकः—

भारतीमुद्रणालय भारती विहार, मशोबरा-१७१००७ शिमला (हि.प्र.)

स्वामी :—श्रीमती आचार्य रत्नकुमारी शर्मा

जून १९८७ अषाढ़ः २०४३ — वर्षम्-३१ अङ्कः ९

वार्षिक मूल्यम् २० रु०

# 'वेदान्तः—विश्वकल्याणम्'

कस्मिञ्चित् काले भारतदेशः विश्वे ऽस्मिन् ज्ञानस्य क्षेत्रे गुरुः मन्यते स्म । ज्ञानस्य आचरणमेव धर्मः विद्यते । भारतवासिनः तदा निजज्ञानस्य अनुसार-मेव आचरन्ति स्म । अतः कारणात् मनुना स्वस्मृत्यां इदं लिखितम् –

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः,
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ।।

अतः भारतीयानाम् आचरणं तस्मिन् समये धर्ममूलकं मन्यते स्म तथा भारतं एकं धर्मप्राणदेशं कथयन्ति स्म ।

ज्ञानस्य द्वे स्वरूपे उक्ते एकम् आध्यात्मिकं द्वितीयञ्च लोकव्यवहा-रस्य ज्ञानम् । इमे द्वे ज्ञाने प्राप्य एव मानवेन इहलोके परलोके च कल्याणं प्राप्तुं शक्यते । उपनिषत्सु एतयोः द्वयोः प्रकारयोः ज्ञानयोः नामनि क्रमेण पराविद्या तथा अपराविद्या स्तः ।

मनुष्यस्य चत्वारः पुरुषार्थाः धर्मशास्त्रे कथिताः - धर्मार्थकाममोक्षाः । मानवस्य सर्वोपरिपुरुषार्थः मोक्षः मन्यते । अस्माकं ज्ञानस्य यानि अपि शास्त्राणि वर्तन्ते तानि सर्वाणि निजनिजरूपेण मोक्षप्राप्त्याः मार्गं दर्शयन्ति । व्याकरणशास्त्रिणोऽपि ब्रह्मशब्दरूपं मत्वा शब्दस्य पूर्णज्ञानं प्राप्य मोक्ष-प्राप्तेः उपदेशं कुर्वन्ति अपरे, न्यायवैशेषिकसांख्ययोगवेदान्ताश्च, ये ग्रन्थाः अस्माक सभ्यतासंस्कृत्याचाराणां मूलाधाराः विद्यन्ते, तेऽपि स्वसिद्धान्तानु-सारं सरलमोक्षमार्गम् उपदिशन्ति । एषु सर्वेषु वेदान्तः सर्वोच्चसिद्धान्तः मन्यते । उपरिदृष्ट्या एतानि सर्वाणि दर्शनानि परस्परं विरुद्धानि इव प्रतीयन्ते, परं वस्तुतः इमानि स्थूलाद् सूक्ष्मं प्रति गन्तुं सोपानानि सन्ति । एकेन प्रकारेण एषां सर्वेषां शास्त्राणां मूलं वेदेषु प्राप्यते । तद् एव मूलवृत्या आधारं गृहीत्वा विविधर्षयः गंभीरं मननं कृत्वा स्वदर्शनानाम् शिलाधारं स्थापितवन्तः ।

सर्वेषां शास्त्राणां दर्शनानां वा विषयः साधारणतया एक एव अस्ति-'ब्रह्म' जगत् जीवो माया च । एषां परस्परं कः सम्बन्ध, कि स्वरूपम् इत्यादि-विषयाणां विवेचनं, सर्वेष दर्शनेषु कृतम् । उपनिषत्सु एषां तत्वानां विषये

अतिविस्तृतं चिन्तनम् मिलति । परं ते विचाराः शृंखलावद्धाः न वर्तन्ते । इमा उपनिषदः पठित्वा मननं च कृत्वा महर्षिवेदव्यासेन सूत्ररूपे आध्यात्मिकविचाराणां संकलनं कृतम् । तेषाम् इदं संकलनमेव 'ब्रह्मसूत्रं' वेदान्तः' वा कथ्यते । अस्य नाम 'उत्तरमीमांसा' अपि विद्यते । ब्रह्मसूत्रस्य प्रथमभागः 'पूर्वमीमांसा' उच्यते, यस्मिन् जैमिनिना वेदस्य कर्मकाण्डस्य विवेचनं कृतम् ।

ब्रह्मसूत्रे सर्वम् आध्यात्मिकज्ञानं अतिसंक्षप्तसूत्रशैल्यां लिखितम् अस्ति, यया प्रकृतविषयः पूर्णतया स्पष्टः न भवति । अतएव उत्तरवर्तिभिः आचार्यैः स्वमतस्य पुष्ट्यै तेषां सूत्राणां व्याख्यानं विविधै दृष्टिकोणैः कृतम् । एवं वेदान्तमार्गे अनेकसिद्धान्तानां प्रचलनम् अभवत्, यथा 'अद्वैतसिद्धान्तः' 'द्वैतसिद्धान्तः' 'विशिष्टाद्वैतसिद्धान्तः' इत्यादयः । स्वसिद्धान्तस्य पुष्ट्याम् एभिः आचार्यैः विविधानां तर्कयुक्तिवेदवाक्यानाम् आधारं गृहीत्वा स्वमतं स्थापितम् । एषु सर्वेषु सिद्धान्तेषु अद्वैतसिद्धान्तः सर्वोपरि मन्यते, यस्य सर्वेभ्यः अधिकंपुष्टिकर्ता सिद्धिकर्ता वा भगवान् शंकराचार्यः मन्यते । एषां सर्वेषां सिद्धान्तानां प्रभावः उत्तरवर्त्तिशास्त्रेषु साहित्ये च विविधेषु रूपेषु अभवत् । संस्कृतस्य अनेकेषु धार्मिकसम्प्रदायेषु विशेषतया भक्तिसम्प्रदाये एभ्यः सिद्धान्तेभ्यः कस्यचित् एकस्य आधारं गृहीत्वा उपासनामार्गाः प्रचलिताः अभवन् ।

'अद्वैतवादसिद्धान्तस्य' समाहारः शंकराचार्येण एकस्मिन् अर्धपद्ये एव कृतः

'ब्रह्म सत्यं, जगन्मिथ्या, जीवो ब्रह्मैव नापरः ।"

तस्य मते इदं यत् नामरूपात्मकं जगत् अस्ति, तत् शुक्तौ रजतम् इव अध्यासः अथवा भ्रममात्रम् अस्ति । माया, तेन स्वप्नवत् सदसद् अर्थात् विलक्षणा उक्ता

"सदसल्लक्षणा माया ।"

मायायाः द्वे शक्ती स्तः । एकशक्त्या इयं जीवस्य आवरणं करोति, अपरया विक्षेपम् उभाभ्यां शक्तिभ्याम् इव मयः जगत् रचितवती । जीवः मायावशीभूतः निजं कर्तारं मन्यमानः सुखदुःखयोः अनुभूतिं करोति । यदा स 'विवेकख्यातिम्" अथवा ज्ञानं प्राप्नोति तदा स जन्ममरणबन्धनात् मुक्तः भूत्वा आत्मस्वरूपे मग्नः भवति । आत्मब्रह्मयोः कश्चिद् भेदः नास्ति । जीवात्मनोः एकतायाः प्रतिपादकौ वेदान्ते द्वे महावाक्ये कथिते "सोऽहं, तत् त्वमसि ।" शंकराचार्यानुसारेण 'त्वम्' शब्दः अज्ञानमूलकः, 'अहम्' च ज्ञानमूलक अस्ति । अद्वैतवादस्य इदमेव साररूपम् अस्ति ।

'द्वैतसिद्धान्ते' ब्रह्मामाये उभौ सत् मन्येते । अस्मिन् मते प्रकृतिः अथवा माया तथा ब्रह्म उभौ एव अनादितत्त्वे स्तः । 'विशिष्टाद्वैतसिद्धान्ते' माया विशिष्टब्रह्मएव ईश्वरः कथ्यते यः पुनः सृष्ट्याः कारणं भवति । शक्त्यां शक्तिपति च अभेदः वर्तते । एवम् अस्मिन् मते माया विशिष्टब्रह्माद्वैतम् अस्ति । शुद्धा द्वैतवेदान्तसिद्धान्ते मायायाः स्वीकृतिः नास्ति । ब्रह्म मायायाः शुद्धम् अस्ति । अस्मिन् जड़चेतनरूपं सर्वंजगत् ब्रह्मणः एव रूपं अस्ति । जड़ः ब्रह्मणः सद्‌रूपः अस्ति । चित् चेतनस्य प्रतीकः आनन्दः च ब्रह्मणः प्रतीको जायते । अतएव ब्रह्म सच्चिदानन्दः कथ्यते । जीवस्य सच्चिद्‌रूपौ द्वौ अंशौ वर्तेते । ब्रह्मणि त्रयोऽशां पूर्णा सन्ति । जीवोऽपि यदा पुष्ट्या अर्थात् कृष्णस्य विशेष कृपया तदर्पितः भवति तदा तस्मिन्नपि इमे गुणाः आगच्छन्ति । अस्य सिद्धान्तस्य प्रतिपादकः श्री वल्लभाचार्यः अस्ति । तस्य मते कृष्णो साक्षात् ब्रह्म अस्ति । लीलायै तेन स्वात्मा द्वयोः अंशयोः विभाजितः एक अंशः कृष्णः अपरश्च राधा अभवत् ।

एवं वेदान्तमार्गे ब्रह्मसूत्रस्य विविधव्याख्यानानाम् आधारे वेदान्ताचार्यैः पृथक् पृथक् स्वमतानां स्थापना कृता । वेदान्तसम्बन्धिनी विचारधारा भारतं यावत् विकसिता तावत् अन्यस्मिन् कस्मिन्नपि देशे न अभवत् । भारतस्य ऋषीणां जीवनं अत्यन्तत्यागमयम् आसीत् । लोकस्य मोहमाययोः दूरं निवसन्तः ते जीवात्मविश्वब्रह्मप्रभृतीनां परोक्षाध्यात्मिकविषयाणां चिन्तनं तैः अभवन् । अतएव एषु विषयेषु यावत् गहनं सूक्ष्मं च चिन्तनं तैः कृतं तस्य शतांशोऽपि केनचिद् अन्यदेशेन न कृतम् अपरदेशानाम् अरस्तुसुकरातकंफयूशियससदृशमहापुरुषाः चिरंपूर्वं भारतात् एव आध्यात्मिकसिद्धान्तानां चिन्तनपरम्परां प्राप्नुवन्

अधुना विंशतिशताब्द्यामपि अयं केवलं वेदान्तः एव, येन भारतस्य प्रतिष्ठा समस्तसंसारे महती अस्ति । कस्मिँश्चिन् काले, इतिहासपूर्वयुगात भारते विज्ञानस्य अपि चरमोन्नतिः अन्यदेशानां तुलनायां अधिका आसीत् । वैज्ञानिक ग्रन्थाः यद्यपि वहवः लुप्ताः अभवन्, परं तेषां ये उपलब्धाः तेभ्यः इदं तथ्यं प्रमाणितं भवति । रामायणमहाभारतायुर्वेदगणितप्रभृतिशास्त्रेषु या उच्चसिद्धान्तानां स्थापना मिलति, सा अवैज्ञानिकाऽस्ति, एतस्य कल्पनाऽपि कर्तुं न शक्यते । वेदेषु अपि सृष्ट्याः विकास सम्बन्धिनः वहवः ईदृशाः सिद्धान्ता मिलन्ति ये शुद्धवैज्ञानिकविचारधारायाः प्रतीकाः सन्ति । एकः कालः आसीत् यत् नालन्दातक्षशिलाविश्वविद्यालययोः अतिदूरदेशेभ्यः छात्राः पठितुम् आगच्छन्, विविधज्ञानविज्ञानं शिक्षां च प्राप्य स्वदेशान् गत्वा ग्रन्थान् अरचयन् ।

अद्य अस्मिन् वैज्ञानिकयुगे यदा पाश्चात्यदेशाः वैज्ञानिकान्वेषणस्य शिखरे सन्ति, राजनैतिकतायाः अभावेन तथा शतशतवर्षाणां परतन्त्रतया

अयं देशः अस्मिन् क्षेत्रे पश्चाद्वर्ती जातः। तथापि यस्मिन् विषये अन्ये देशा भारतात् पश्चाद्गामिन सन्ति, तत् आध्यात्मिकचिन्तनम् अस्ति। पाश्चात्यचिन्तकाः भारतस्य उपनिषद्दर्शनैः गीताप्रभृतीन् ग्रन्थान् पठित्वा विस्मिता भवन्ति भारतऋषीन् प्रति च श्रद्धया नमन्ति। पाश्चात्यदेशानां यैः विद्वद्भिः संस्कृतसाहित्यस्य अध्ययनं कृतं, ते विचारयन्ति यत् भौतिकवादिपाश्चात्यदेशा।

अर्वाचीनमहावैज्ञानिकाः स्वस्थूलान्वेषणेन प्रायः भारतचिन्तनस्य निष्कर्षं प्रति आगच्छन्ति। ते स्वीकुर्वन्ति यत् स्थूलसृष्ट्याः मूले काचित् ईदृशी सूक्ष्मसत्ता अस्ति, या अवर्णनीया अस्ति, यस्या आधारे च एतस्याः सृष्ट्याः क्रमः चलति। ते अधुना इदं न स्वीकुर्वन्ति यत् सृष्ट्याः आध्यात्मिकक्षेत्रे अधुनापि भारतात् वहु शिक्षितुं शक्नुवन्ति। प्रारम्भः स्वाभाविकप्रक्रियया अभवत् अथ च तथा एव क्रियया अस्याः एकस्मिन् दिवसे नाशः भविष्यति। वस्तुतः आत्मपरमात्मसम्बन्धिनः पुनर्जन्मनश्च सिद्धान्ताः, तेषां दृष्ट्यां सर्वथा उपेक्षणीयाः न सन्ति। प्रत्युत एषु कश्चित् सारः विद्यते यस्य अन्वेषणाय ते प्रयत्नशीलाः सन्ति। एवम् इदं कथनम् असंगतं नास्ति यत् भारतस्य सम्मानप्रतिष्ठयोः पताका अद्यापि वेदान्तबलेन एव लोके उद्धूयते। वस्तुतः एतस्य आध्यात्मिक -- सिद्धान्तस्य आधारे एव वर्तमानकालिकसंघर्षग्रस्तविश्वमानवसमाजस्य वास्तविकं कल्याणं भवितुं शक्नोति।

-- शकुन्तला अवस्थी
प्राचार्या गवर्नमैंट, इन्स्टीट्यूट
आफ ओरियण्टल एन्ड माडर्न
इन्डियन लैंगुएजिज
पटियाला पञ्जाब

---

वर्हापीडं नटवरवपुः कर्णयोः कर्णिकारम् ।
विभ्रद्वासः कनककपिशं वैजयन्तीं च मालाम् ॥
रन्ध्रान् वेणोरधरसुधया पूरयन् गोपवृन्दैः ।
वृन्दारण्यं स्वपदरमणं प्राविशद् गीतकीर्तिः ॥

— श्री मद्भागवत

# "वेताल-पराजयं रूपकं तल्लेखकः श्रीशुकदेवो मुनिश्च"

ओम् प्रकाश शर्मा, आचार्यः

संस्कृत-शोधसंस्थान-भारती विहार मशोबरा शिमलायाः तत्त्वावधाने संस्कृतनाटकप्रतियोगितान्तर्गतगेटीथियेटर शिमलायाः विख्यातरंगमंचे प्रथमस्थानभाजिनः, अस्य रूपकस्य लेखकः श्री शुकदेबो मुनिरस्ति । अयं खलु पंजाव प्रान्तस्य नाभानगरे स्थितस्य सर्वकारीयसस्कृतमहाविद्यालयस्य प्रधानाचार्यपदम् अलंकुर्वन् तिष्ठति। भवान् १९५० तमवर्षादारभ्य संस्कृत भाषायाः तनुषा, मनसा, वसुना च सेवायां लीनः, एको महान् प्रतिभाशाली विद्वान् आस्ते । १९७२ तम वर्षादारभ्य प्रधानाचार्य रूपेण संस्कृत सेवायां सधर्षशीलो विराजते । अस्य अध्यक्षतायां शतशो विद्यार्थिनः संस्कृतम् अधीत्य अद्य उच्चपदेषु आसीनाः सन्तः स्व आजीविकाम् अर्जन्ति ।

भवान् पंजाबप्रान्तस्य पटियालामण्डलान्तर्गतस्य मण्डौड़-ग्रामस्य मूलनिवासी अस्ति । अस्य पिता श्री कैथलराममहोदयः, अस्य ग्रामस्य प्रसिद्धः पण्डित आसीत् स्वक्षेत्रे च अद्यापि श्रद्धया अस्य नाम गृह्णन्ति जनाः । भवतो ज्येष्ठसहोदराः पण्डिता वृजलालबलदेवकृष्ण-रुद्रदत्ताः स्वपाण्डित्यकर्मणि अधुनाऽपि प्रसिद्धाः । एतेषां संरक्षकतायाम् एव लेखकस्य अस्य शिक्षा-दीक्षा जाता । एवं हि सस्कृतज्ञानम् एभिः स्वकुलपरम्परात एवाधिगतम् ।

## रचनावृत्तम्

भवतः सर्वप्रथमरचना श्रीजपु जी साहिबस्य संस्कृतपद्यानुवादो वर्तते, या हि संस्कृतस्य स्तोत्रसाहित्य परम्परायां विशेषं स्थानं भजते। नानकस्तोत्रं भवतो गुरुषु प्रेम-श्रद्धामयी रचना । दण्डिनो दशकुमारचरितस्य प्रथमोच्छ्वासस्य पद्यानुवादः सर्वैः विद्वद्भिः प्रशंसितः। नाटकसाहित्ये क्रमशः प्रतिज्ञा' परिचयः, वेतालपराजयं च, इत्येतानि त्रीणि रूपकाणि एषु वेताल पराजयरूपकेण रंगमचीयदृशा बहूनाम अर्जितं सम्प्रति ।

एतद् अतिरिक्तम्, काश्चन समस्यापूर्तयः, एकादश-बालकथाः, कतिपये च छात्रोपयोगिनः लघुनिबन्धाः सन्ति । अद्यापि भवान् संस्कृतं प्रति सेवारतः स्वरचनाजातैः संस्कृतं नितरां सेवमानः तिष्ठति । एष लेखनप्रयासः संस्कृत साहित्ये गौरवाय कल्पमानः अस्ति ।

# वेताल-पराजयम्

## (शैतान की हार)

इदं रूपकं वर्तमान-काले अत्यन्तम् उपयोगि । अत्र साम्प्रदायिक-भावना उद्दिश्य उन्मत्तस्य राष्ट्रस्य उद्बोधनं राष्ट्रस्य अखण्डता हेतवे लोकमतजागरणं सरलया सरसया सुबोधया च भाषया प्रदर्शनाय प्रयासः कृतः । अत्र एक-एव ईश्वरः सर्वेषां नियामकः, धर्म-जाति प्रान्त-भाषागतान् भावान् अपाकर्तुम्, नारीणां च कृते सम्मानितं स्थानं दातुं तासां वर्तमानां दुर्दशां दूरीकर्तुं च अस्माकं सर्वेषां सम्मिलितः प्रयासः अपेक्षितः, इति एतस्य नाटकस्य अध्ययनेन अभिनयदर्शनेन च स्पष्टं भवति यद् वर्तमानः कालः शैतानहस्ते अस्ति । सोऽस्मान् यथा इच्छति तथैव चालयति । यत्र तत्र यदा कदा च स सफलोऽपि भवति । ततः देशवासिभिः सावधानैः भवितव्यम् । तस्य हस्ते खेलने च स्वार्थम् उद्दिश्य चलनेन च अस्माकम् अधः पतनं निश्चितम् । अतः ततो विरम्य संघीभूय सह नाववतु इति वेद-गुरु-ऋषिभिः प्रदर्शितेन पथा गन्तव्यम् ।

इदं रूपकं सर्वप्रथमं "संस्कृतशोधसंस्थान मशोवरा, शिमला द्वारा आयोजिते संस्कृत नाटकसमारोहे गेटीथियेटरे ४-११-८६ तमे वर्षे सर्व प्रथमम् इति घोषितमभूत् । अस्य दलस्य अध्यक्षाः श्री आचार्याः, ओम्प्रकाश शर्माणः, अभूवन्, निर्देशनं च अस्य आचार्य जीतसिंह खोक्खरेण गोल्डमैडलिस्टेन अकारि । एनत् पञ्जाब प्रान्ते भटिण्डानगरे पंजाबभाषा विभाग द्वारा आयोजिते संस्कृत नाटक समारोहेऽपि १६-११-८६ तमे वर्षे सर्वप्रथमम् इति सोल्लासं निर्दिष्टम् इदमत्र वक्तव्यं विशेषतः यत् सभ्याः भावमाविश्य रसाकुला भूत्वा महता हर्षेण नाटकदलं पुरस्कारेण योजयामासुः, उत्साहं च तस्य वर्धयामासुः । परिणामस्वरूपतः, इदमेव रूपकं पंजाबी भाषायां युवकसमारोहे मालेरकोटलानगरे नाभानगरे च कठोर प्रतियोगितायां 'द्वितीयम् इति निरूपितम् । मान्यानां पजाब गृहमन्त्रिमहोदयानां कैप्टन कमल जीतसिंहानाम् अध्यक्षतायां मण्डौड़-उपनगरे बापला-उपनगरे च मानार्हाणां प्रोफेस्सर चन्दूमाजरामहोदयानां कांजला महोदयानां च सन्निधौ संस्कृत विद्यालयस्यैव छात्रैः अभिनीतम् । हरियाणा प्रान्तेऽपि वार्षिक युवक समारोहे बराड़ा नगरे मुल्लाना कालिजस्य अध्यक्षतायां श्रीमत्याः चिरंजी-

विन्या: प्रोफेसर – आशिमाजोशी – महोदयाया निर्देशेऽपि इदं रूपक ३०-१-८७ तमे दिने वर्षे च 'द्वितीयम्' स्थानं लब्धवान् । सर्वत्र मन्त्रिभिः प्रजाभिश्च अस्य भावनायाः राष्ट्रीय - एकतायाः वर्तमान काले च संकटदूरीकरणोपायस्य चास्य भूयान् आदरः कृतः । यतः सर्वतः ईदृशानां नाटकानां प्रदर्शनाय सर्वकारोऽपि उत्सुकः, लोका अपि सहर्षम् इदं कर्म अभिनन्दन्ति ।

## पात्र परिचयः

इदमत्र निवेदितं भवति यत् हरियाणा प्रान्तं विहाय अस्य नाटकस्य अभिनयः सर्वकारीय संस्कृत महाविद्यालयस्य छात्रैः छात्राभिश्च कृतः एवं श्री जीतसिंह खोक्खर महोदयानां निर्देशनम् सर्वत्र अभवत् । पात्र परिचयश्च इत्थम्—

| | | |
|---|---|---|
| १. | भूषण प्रभाकरः | ... उन्मत्तः |
| २. | मुकुन्दसिंहः | ... सिक्खः |
| ३. | मदनसिंहः | ... मुसलमानः |
| ४. | देवशरणः | ... हिन्दुः |
| ५. | मनोहरलालः | ... समयः |
| ६. | कर्मजीत सिंहः | ... वेतालः |
| ७. | अनुशर्मा | ... भारतीया नारी |
| ८. | निर्देशकः | ... श्री जीतसिंह-खोक्खरः |
| ९. | लेखकः | ... श्री शुकदेव-मुनिः |
| १०. | रूपान्तरकारः (पंजाबी) | ... भूषण प्रभाकरः |
| ११. | रूपान्तरकारः (हिन्दी) | ... अरविन्द मोहनः |
| १२. | रूपसज्जकः | ... श्री डी. एस. शर्मा |

— सर्वकारीय संस्कृत महाविद्यालयः
नाभा (पटियाला)

# रक्तबीजं शाश्वतम् ।

डा० इन्द्रमोहनसिंहः

शाखाः पुष्पविहीनाः क्रियन्ते
परं नोपवननाशः शक्यः
तत् सौरभं नात्येष्यत्यभीक्ष्णम्
इदानीमपि
सांस्कृतिकबीजानि रक्ते गहनसन्नद्धानि
यस्यावलम्बनभ्रान्त्या स्थितः त्वम्
तत् तत्त्वं कामं तवाभिधानलज्जितमिव
मनुष्यो मनुष्यस्य वयस्यः
—इति शाश्वतसत्यम्
उन्माद एव जगति स्वन्धः
—इत्यपि शाश्वतसत्यम्
हिंसां हन्तजीवितस्यापि गृहं बन्धुः सन्ततिः......
सोऽपि क्रूर ! तव सदृशो मनुज एव
किन्तु निहितमत्र राष्ट्रियविडम्बनम्
यत्र वयं नाट्यपराः
कश्चित् सूत्रधारः समर्थोऽपरदेशीयः
स्वदेशोत्कर्षप्रतिज्ञाभृत्
अस्मदीयप्रयोगविज्ञान विनाशकृत्
पृष्ठे तिष्ठति
चालयति च सर्वं
विस्मृत भूमिकाः च वयम्
इति राष्ट्रियं विडम्बनम्
शतशः शकलायितमस्मद् जगत्
लोकसुखनभसा रविशशितारा आच्छादिताः
धूसरदिशा विकरालनिशाश्च
हे हिमालय ! किं त्वं कृष्णो जातः ?
कुत्र गता सा धवल प्रभा ?
हे गगन ! किं त्वं नीलरूपं नहि ?
हे समुद्र ! किं त्वं गहनो न ?
हे पञ्चाप ! किं त्वं न पूर्ववत् ?
नहि ! नहि !
सांस्कृतबीजानि गहनसन्नद्धानि
तत् सौरभं तथैव व्याप्तम्
नोपवनस्यास्यनाशः शक्यः
घनाच्छादितसूर्यवदावस्था । —

— पटियालास्थ पंजाबी
विश्वविद्यालयस्य सं० विभागे पंजाब

लघुकथा—

# मुक्तिः | रामनिवास 'मानव'

बन्धक श्रमिकाणां मुक्तये सर्वोदयि नेता राजपुरुषाणां संरक्षणे ट्रक यानं आदाय इट-भट्टा इति स्थाने अगच्छत् । तस्य आह्वाने सर्वे श्रमिकाः तत्क्षण एव स्व सामग्रीभारं बद्ध्वा चलितुं सन्नद्धा ।

यानं समया समागत्य सहसा श्रमिकाणां नेतुः पदाः अवस्थिताः । सहयोगिनः श्रमिकाः तं प्रति अवलोकितवन्तः भारं च स्वकीयं-स्वकीयं भूतले स्थापितवन्तः ।

सर्वोदयि नेता चकितः— 'स्थापयन्तु' स्थापयन्तु भवन्तः स्वकीयं-स्वकीयं सामग्री-भारं शीघ्रं ट्रक याने स्थापयन्तु । न भयस्य वृत्तम् । एते राजपुरुषास्तु अस्माकं रक्षकाः भवन्ति एते अस्माकं पक्षएव । युष्माकं स्वतन्त्रता रक्षार्थं आगताः ।'

परं सर्वे श्रमिकाः निस्तब्धाः अतिष्ठन् किमपि विचारयन्तः इव ।

'भो बुधरामः किं वृत्तम् ? किमर्थं निभृताः स्थिताः ? स्व सहयोगिनः सामग्रीभारं उत्थाप्य चालितुं कथय ।' सर्वोदयि नेताः एकान्ते निस्बन्धं स्थिरं नेतारं आदिशत् ।

'श्रीमन् अस्माकं भाग्ये तु इदमेव लिखितम् ।' नेतुः स्वरं अत्यन्तं शान्तं गम्भीरं च आसीत्—'इव न एतस्मिन् तु अन्यत्र अपरस्मिन् स्यात् यस्माभिस्तु एषः श्रम एव करणीयः ।'

'क...क... कथम् ?' नेतुः मुखे भावा आसन् ।

'एतस्मात् भट्टा कारागारात् तु भवन्तः मुक्तिं दापयिष्यन्ति । परं बुभुक्षाया मुक्तिं कः दापयिष्यति श्रीमन् ?' बुधरामः मन्दं स्मितपूर्वकं प्रत्यावर्तत—सहयोगि श्रमिकैः साकम् ।

— प्रवक्ता, श्री आर. एम. जाट कालिज,
हिसार (हरियाणा)

# युवाशक्तिः राष्ट्रञ्च

प्रो० सन्तोष वर्मा

तरुणा नाम साक्षात् राष्ट्रशक्ति निधिश्च वर्तन्ते । कस्यापि राष्ट्रस्य उन्नतिः अवनतिर्वा राष्ट्रस्य युवावर्गे एव सन्निहिता भवति विशेषतः राष्ट्रस्य नवनिर्माणे युवावर्गस्य भूमिका महत्त्वपूर्णा, यतो हि राष्ट्रभवनस्य सुदृढा भित्तय नवयुवका एव सन्ति अद्यतनाः युवका. युवतयश्च श्वोभाविनो नागरिकाः शासका, नेतार राष्ट्र-विधायकाश्च सन्ति युवकाः युवतयश्च जानन्ति यत जातश्रा मकशासनेन प्रशास्यमानोऽस्ति अस्माकं देशः विश्वस्मिन् जगति युगप्रवाहानुसारेण सर्वत्रैव जागरण दृश्यते ये हि राष्ट्रा परतन्त्रा आसन् इदानीं स्वतन्त्रताया अधिकार याचन्ते । अतः शिक्षणेन एषु बालकेषु युगप्रवाहोचितं सामर्थ्यं जागृतिश्चापि उत्पादनीया यतः राष्ट्रस्य भारवहनाय तेषां स्कन्धाः भारक्षमाः भवेयुः युगप्रवाहेण सह द्रुतगत्या प्रचलेयुः अस्मिन् राष्ट्रनिर्माणकार्ये विदुषां नीतिविशारदानां च सहयोगः नितरामपेक्ष्यते । अतः राष्ट्रस्य निर्माणे विद्यालयानां स्वकीयमेव महत्त्वमस्ति ।

अतः राष्ट्रचेतना जागरणाय, बुद्धिः प्रवणाय, नवविचाराणां भावनानाञ्च बुद्धे उत्कर्षाय च सर्वविधः प्रयासः स्फुरणाय विधेय । अतः युवजनस्य सुषुप्तशक्त्य प्रबोधनीया नवराष्ट्रनिर्माण- हेतोः आत्मनैव आत्मा अवबोधनीयः यत कामं जयतु मानव देशान्, कामं निसर्गनियमान् यस्तु आत्मविजयः सैव विजयः। देश-राष्ट्रोन्नत्ये सच्चरित्रतायाः वर्तते महती आवश्यकता , शिक्षयैव मानवेषु सत्यवादिता सच्चरित्रता, विश्वासपात्रता च आधीयते शिक्षां प्राप्य मानव मनसा. कर्मणा वाचा सच्चरित्रो जायते कर्तव्यञ्च परिपालयति सत्यनिष्ठ , व्यवहारशुद्धश्च आचरणं यदि आश्रीयेत् तर्हि एवं इदं राष्ट्रं वर्धेत समृद्धिम् चाप्नुयात नान्यथा ।

परं प्रचलितया शिक्षया स चोद्देश सम्पन्नो न भवति सर्वे वयम् आमूलचूल परिवर्तिता संदृश्यते हि सम्प्रति सर्वत्रापि गरीयान् परिवर्तः— के आस्म के च सम्प्रति सवृत्ताः इदानीं आचारभ्रष्टता अस्माकं देशस्य सर्वप्रमुखा समस्या यस्याः समाधाने सञ्जाते सति सर्वं सुसम्पन्नं सुसाधितं च भवेत् । अद्यतना तरुणाः न अनुशासनं पालयन्ति, न गुरुजनं सेवन्ते, न व्यायामं सेवन्ते, न अभ्यासे रमन्ते, न सद्गुणसम्पादनाय प्रयतन्ते । अद्यत्वे युवावर्गे न धर्माभिमानः, न श्रद्धा, न देवेषु भक्तिः, न गुरुषु गौरवं, न स्वदेशानुरागः, न देशभक्तिः न भ्रातृभावः, न सहिष्णुता,

न शौर्यम् साम्प्रतं विद्यालयेषु, महाविद्यालयेषु च आडम्बरपूर्ण-विलासविलासित जीवनं वहन्ति छात्रा क्वापि शीलशिक्षणं न श्रूयते, न दृश्यते । न गुरुजनं प्रति विनयाचारः । राष्ट्रजीवने शिक्षणक्षेत्रे क्वापि अराजकत्वमेव वृद्धिमायाति । स्वनेतृत्वं प्रकाशयितुं यत्किञ्चित निमित्तीकृत्य शिक्षणकार्यं स्थगयन्ति इमे स्वयं नष्टाः परान् नाशयन्ति सर्वे निस्तेजाः, दुर्बलप्रायाः, कातराः, भीरवः परपिण्डजीवत्वमेव जन्मनः साफल्यस्य हेतुं मन्वाना, पाश्चात्यान् देवतुल्यान् मन्वानाः प्रायेण सदृश्यन्ते ।

— एवं राष्ट्रस्य शैथिल्ये सति, अधोऽधः गमनञ्च दृष्ट्वा विचारवतां मनः शतधा दुनोति । एवंविधानास्थावति निरुत्साहे, समाजे उत्साह-जागरणं अति विषमं कार्यम् "पापलता नातिचिरात् पल्लविता जायते पुण्यलता तु चिरात् फलति" जायते एकतः भौतिकी समृद्धिः नवं नवं नभोवितानम् आरोहति अपरतस्तु नीतेः शक्तिः रसातलमवरोहति धर्ममूलत्वमेव राष्ट्रोन्नतिकरम् । सृष्टिसत्तामूलकस्तु धर्मः एव परमिदानीं धर्मनाम्नि लोकाः मिथः कलहायन्ते अद्यत्वे नितरां शोचनीया अवस्था संवृत्ता । नहि सम्प्रति सुदृढशरीराः धार्मिकाः, आदर्शभूताः आचारवन्तः पुरुषाः दृश्यन्ते अत्र भारतवर्षे

संस्कृतेन एव संस्कारितो भवति भारतीयः, संस्कृतिश्च भारतस्य जीवनम् । आर्य संस्कृतिः इयमस्ति यत् सा दुर्गुणानि दुर्व्यसनानि पापानि च सात्विकानि करोति अस्माकं भारतीयानां संस्कृतेः एता विशेषता सन्ति । अत्र भारते जना पापेभ्यो बिभ्यति स्म । सत्यं वदन्ति स्म अहिंसाम् आचरन्ति स्म । दया-परोपकार - धैर्य - त्याग सहानुभूत्यादि नियमान् पालयन्ति स्म । अतएव अस्माकं पूर्वजाः विश्वविख्याताः, यशस्विनः, पूजार्हा धार्मिका, जगद्गुरवः आसन् भारतीयाः कर्मानियमानां पालने प्राणपणेनापि व्यवहरन्ति स्म । ते कायेन, मनसा, वाचा धर्मरक्षणे सन्नद्धाः आसन् ईदृशी आसीत् भारतीया संस्कृतिः अस्माकं ऋषयोऽपि ज्ञान–विज्ञानपूर्णा आसन् । देशेऽस्मिन् परा शान्तिः समृद्धिश्चावर्तत । अस्माकं गौरवं विश्वव्यापी आसीत् ।

प्राचीन गौरवं पुनः कथं प्रतिष्ठापितं भवेत् इति विचारणीयम् । राष्ट्रशक्तिः, राष्ट्रचेतना, सज्जनशक्तिः देशभक्ति, पुनः कथं जागरणीया क्रियाशीलत्वञ्च कथं सम्पादनीयम् भवेत् यद् कर्मणि तदेव मनसि इति स्थितिं वयं वाञ्छामः राजनीतिगन्धोऽपि मास्तु शिक्षायाम् इति दिदृक्षामहे । अनक्षरेषु अपि जनेषु ज्ञानप्रसारः, राष्ट्रभक्तिभावः जागरणीयः एतेन राष्ट्रस्य शक्तिः वृद्धिमायाति । राष्ट्रोद्धार विहाय न भवेत् अस्माकं जीवितोद्देशः इति सर्वे वयं अस्माकं युवजनाश्च कृतसंकल्पाः भवेयुः इति वयं वाञ्छामः ।

अध्यक्षा -- संस्कृतविभाग, गान्धी आदर्श कालेज
समालखा (करनाल)
हरियाणा

# संस्कृत भाषायाः प्रारम्भः

आचार्य श्याम लाल शर्मा
व्याकरणाचार्य

वेदानां अपौरुषेयत्वं शाश्वतत्वञ्च सर्वं सममेव स्वीकुर्वन्ति। इति निश्चप्रचं यत् वैदिक मन्त्राणां साक्षात्कर्तारो महर्षयः प्रत्येकस्मिन् कल्पे बभूवुः, व्याकरणशास्त्रदृष्ट्या दर्शनेन विद् ज्ञाने धातोः घञि प्रत्यये सिद्ध्यति वेद शब्दः विद्यन्ते लभ्यन्ते वा धर्मादिपुरुषार्थो एभिरिति वेदाः।

भारतीयवाङ्मयानुसारं संस्कृतभाषायाः विकासो वेदादेव अजायत, स्वायम्भुवेन मनुना लिखितमस्ति यत् ब्रह्मणा सृष्ट्यादौ सर्वेषां पदार्थानां संज्ञा=नाम, पृथक पृथक् कर्माणि, शब्दार्थानां रचना विशेषः, विभक्तीनां वचनानि, रूपाणि च वेदशब्देभ्यः एव निर्द्धारितानि । उक्तं च मनुना—

सर्वेषां स तु नामानि कर्माणि च पृथक् — पृथक् ।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे । इति

एवं महर्षिभिः प्रारम्भे एव वेदाधारेण सर्वव्यवहारोपयोगिनी अतिविस्तृता या भाषा उपदिष्टा, सैव भाषा विश्वस्यादिव्यवहारिकी भाषाऽभवत्। देवा यां विश्ववाणीं प्रकटयन्ति तामेव भाषां साधारण जनाऽपि ब्रुवते। तदुक्तं चापि ऋग्वेदस्याष्टमे मण्डले—"देवा वाचमजनयन्त वेदास्तां विश्वरूपाः पशवो वदन्ति' ऋग्वेद (८-१००-११) "प्रयोगचोदनाभावार्थैकत्वम-विभागात्" १-३-३० इति जैमिनीय सूत्रस्य व्याख्यायां शबरस्वामी ब्रवीति "य एव लौकिकास्त एव वैदिकास्त एव तेषामर्थाः इति । व्याकरण महाभाष्येऽपि—

"केषां शब्दानां लौकिकानां च ।"

अतः एतेन स्पष्टमेव प्रतीयते यत् लौकिक वैदिकवाचां पदानां च भेदो नास्ति केवलं वर्णानुपूर्वीनियतत्वेऽनित्यत्वे च भेदो वर्तते। संस्कृत वाङ्मये सर्वसम्मतः सिद्धान्तोऽस्ति यत् प्रत्येक विद्यायाः प्रवक्ता ब्रह्मदेव एव, व्याकरण

शास्त्रस्यापि आदिवक्ता ब्रह्मैव प्रोच्यते, तथ चोक्तम् ऋक्तन्त्रे—"ब्रह्मा बृहस्पतये प्रोवाच् बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्य. "इति" अतः सरलतया सिद्ध्यति यत् वर्तमानकालापेक्षया प्राचीन - प्राचीनतर - प्राचीनतमकालेषु संस्कृतभाषा विस्तृता - विस्तृततर-विस्तृततमाऽऽसीत् । पतञ्जलिमुनिः संस्कृत भाषायाः प्रयोगविषयं निदिशन् ब्रवीति यत् -"सर्वे खल्वेते शब्दा देशान्तरे प्रयुज्यन्ते न चोपलभ्यन्ते । उपलब्धौ यत्नः क्रियताम् । महान् हि शब्दस्य प्रयोगविषयः सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदाः, सांगाः सरहस्याः बहुधा भिन्नाः । एकशत मध्वर्यु शाखा, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृचम्, नवधाऽथर्वणो वेद, वाकोवाक्य, इतिहासः पुराणं इत्येतावान् शब्दस्य प्रयोग विषयः ।

इत्यादिभिः प्रमाणैः सिद्ध्यति यत् कस्मिंश्चित् समये संस्कृतभाषायाः क्षेत्रमत्यन्तं विस्तृतमासीत्, यतो हि सर्वासां भाषाणामादिमूलं संस्कृतभाषैवासीत् महर्षि यास्केनाऽपि निरुक्ते वैदिक संस्कृताद् भिन्न सामान्य जन वचनं (बोली) भाषेतिपदेन व्यपदिष्ठ वर्तते । तथा तस्यां भाषायां व्यवहृतेभ्यो धातुभ्यो वैदिक कृदन्त शब्दानां व्युत्पादनं विहितमस्ति । - "भाषिकेभ्यो धातुभ्यो नैगमा कृतोभाष्यन्ते । निरुक्तकारः स्वसमये विभिन्नेषु प्रान्तेपु संस्कृत शब्दानाँ समुपलभ्यमानानां विभिन्नेषु अर्थेषु प्रयोगस्य उल्लेखं विदधत्—यथा-"शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते, विकार एव एनमार्या भाष्यन्ते शव इति" दातिर्लवनार्थे प्राच्येषु, दात्र उदीच्येषु इति (नि० २-२७)

अतोऽपि सिद्ध्यति यत् यास्क समये संस्कृत भाषा लोकभाषा आसीदेव । काष्टवाहकस्य—"भारो न बाधते राजन् यथा बाधति बाधते ।" तन्तुवायस्य—"कवयामि वयामि यामि" इति विद्वद्दोषदर्शकाभ्यां वचनाभ्यां अपि निश्चयेन वक्तुं शक्यते यत् संस्कृत भाषा अति प्राचीनकालस्य लोक भाषाऽऽसीत् भारतस्य संस्कृतभाषानुरागिणो राजानः पुरेषु संस्कृतेनैव व्यवहर्त्तव्यमिति नियमं कृतवन्तः आसन् इदं निर्दिशन् राजशेखरो नियामकेषु तेषु राज्ञो विक्रमस्य नामाङ्कितवानस्ति । एभिः प्रमाणैः अयमेव निष्कर्षो भवति यत् विक्रमाद् अनेकेभ्यः संवत्सरेभ्यः आरभ्य द्वादशीशताब्दीं यावत् संस्कृत भाषा लोक भाषाऽऽसीत् ।

भारतीयवाङ्मयानुसारं संस्कृतभाषा हि विश्वस्य आदि भाषाऽस्ति । विश्वस्यादिग्रन्थवेदोऽपि संस्कृतभाषायां एव समुपलभ्यते अस्माभिः । प्राचाम्मते लौकिकवैदिकशब्देषु सर्वथाऽभेदः । अर्थज्ञानसम्बन्धेऽप्येषैव-स्थितिः । अत्र विषये यास्कवचनानि सगौरवं प्रस्तूयन्ते । "व्याप्तिमत्वात् तु शब्दस्याऽणीयस्त्वात् च शब्देन संज्ञाकरणं व्यवहारार्थं लोके । तत्र मनुष्यवद् देवताभिधानम् । "पुरुषविद्याऽनित्यत्वात् कर्मसम्पत्तिः मन्त्रो वेदे" अस्यायमभिप्रायः—यत् शब्दो व्यापकोऽणीयाश्च, अत एव लोकव्यवहारार्थं

शब्देभ्यः संज्ञाया निर्धारणं कृतम् । वेदे मन्त्रो देवता शब्देन गृह्यते तत्र वेद मन्त्रेषु येऽर्थाः सन्ति ते सर्वथा लौकिकार्थाननुहरन्ति ।

अथर्व वेदे दैवी वाक् मानुषीवाक् च द्विधा समुपवर्णिता दृष्टिविषयता आयाति । यथोक्तञ्च—'अहं सत्यमनृतं यद् वदामि । अहं दैवी परिवाचं विशश्च" (अथर्ववेदे ६·६·६१-२ अत्र सत्या दैवी वाक् । असत्या सर्वतः प्रसृता च मानुषी सैव लौकिकीतिनिगद्यते इत्थं वैदिकया लौकिकया-श्च वाचः स्वरूपं निर्दिष्टम् । तत्र केवलं दैवीवाक् — पौरुषेयत्व प्रधाना मानुषी किं वा लौकिकीवाक् पौरुषेयत्व प्रधानाच इति निष्कर्षः । किं बहुना संस्कृत भाषायाः प्रारम्भः सर्वभाषा प्राचीनः दृश्यते संस्कृत भाषा विश्व-स्य सम्पूर्ण-भाषासु प्राचीनतमा । अस्या रचना ईस्वीतः अष्टसहस्रवर्षाणि पूर्वं बभूव । संसारे नास्ति तावद् एतादृशी प्राचीनतमा भाषा या अद्य यावत् सुरसरिसमा प्रवहति ।

संस्कृत भाषा विश्वस्य अखिल भाषाणां जननी । वस्तुतः ग्रीक् - फ्रेञ्च-लेटिन-ट्यूटानिक—जर्मन इंगिलश-प्रभृतयः सर्वाऽपि भाषाः संस्कृत भाषात एव प्रादुरभवन् इति भाषातत्वविदां मतम् । किं बहुना संस्कृतभाषा साक्षात् देव भाषा अस्याः प्रारम्भः प्राचीनतमेति सर्वं मान्यम् ।

श्री रामानुज संस्कृत महा विद्यालय
पञ्जगाईं जिला व त. बिलासपुर
(हि० प्र०)

# श्रीरामदासचरिते म्लेच्छ-यवनौ

डा० सुरेन्द्र अज्ञातः

श्रीरामदासचरितं पण्डितया क्षमारावमहोदयया रचितं चरितप्रधानं काव्यम्। तदिदं महाराष्ट्रस्य मुनेः समर्थरामदासस्य चरितं शिवाजिमहोदयस्य गुरोः।

तस्मिन् काले म्लेच्छाधीनमासीदिदं भारतम् ते दूरीभवेयुरिति मनसि कृत्वा शिवाजेः साह्यं चकार सः। तेन गुरुणा निर्दिष्टेन पथा विचरन् शिवाजिस्तेषां विरोधं चकार सुष्ठु। स शिवाजिकृतकृत्यजातस्य जीवातुभूत इति।

## म्लेच्छसंहारार्थमवतारः

श्रीरामदासस्य जन्म म्लेच्छैराक्रान्ते भारते वभूवेतस्त्रिषु वर्षशतेष्विति। स हनुमतोऽवतार इति काव्यरम्भ एवलिखति कवयित्री क्षमारावमहोदया

आस्कन्दो यवनैर्व्यधीयत यदा वर्षत्रिशत्याः पुरा,
धर्मग्लानिरभूत्तदाऽखिलमहाराष्ट्रावनीमण्डले।
तत्काले समवातरत्क्षितितले संरक्षितुं पीडितान्
धीमान् श्रीपवनात्मजः स हनुमान् सर्वोऽपि यँ वन्दते ॥ (१-१)

एकनाथो मुनिस्तं दृष्ट्वा वालकमेव, तस्य पितरमकथयत यदयं स्वदेशजान् म्लेच्छेभ्यो रक्षयिष्यति, नूतनं युगञ्च स्थापयिष्यति भुवि —

सोऽयं नूतनयुगस्य हन्त भविता संस्थापकः कीर्तिमान्।
त्रात्वाऽऽर्तान्निजदेशजान् परयुगात्साधून्नतिं नेष्यति ॥ (१-३३)

तृतीये सर्गे प्रसन्नो मारुतिर्यदा रामदासस्यानुरोधतस्तं रामचन्द्रं दर्शयति तदा रामस्तमादिशत्येवं त्वं स्वार्थमुत्सृज्य तथा कुरु येन म्लेच्छैर्दूषिता वसुमतीयं सुखवती स्यात्। तदर्थं रामस्त्वया कृष्णारोधसि तपस्तपनीयमित्यपि निर्दिशति

पुरः शिशोर्नीरदनीलतेजसा विभासमानो रघुनन्दनस्तदा।
निधाय हस्ताम्बुजमस्य मस्तके सुधारसस्रावि वचो जगाद सः ॥

निखिलवसुमतीयं दूषिता म्लेच्छलोकैः। स्वजनसुखमभीप्सुस्त्वामहं शास्मि तस्मात्।
निजहितमनवेक्ष्य स्वार्थमुत्सृज्य तीव्रं व्रतमनुचर कृष्णारोधसि त्वं पवित्रे। (३-२३-२४)

रामदासो गृहं त्यक्त्वा वनं जगाम। गृहे तस्याम्बा पुत्रवियोगवह्निना दह्यमाना तिष्ठति। तां तस्या ज्येष्ठः पुत्रो सान्त्वयन् वदति यत्त्वमेकनाथस्य वचः स्मरणीयम्। तेनोक्तमासीद् यत्तव पुत्रोऽस्य देशस्य रक्षां करिष्यति दुष्टेभ्यो म्लेच्छेभ्य इति।

स्मर्यते न किमिह त्वया चिरादेकनाथमुनिरब्रवीत्पुरा।
य-ममावरज एष भक्तिमान् कीर्तिमाप्स्यति निजौजसा भुवि॥
म्लेच्छनिर्दयविचेष्टिताकुलां राष्ट्रभूमिमविता निजां तथा।
स्थापयिष्यति जने सनातनं धर्ममेष च पुनस्तवात्मजः। (८-८-९)

अनेन स्पष्टं यन्न रामदासोऽपि तु तस्य कुटुम्बस्य सदस्या अपि तस्य म्लेच्छनाशक वं प्रति श्रद्दधति।

पंचवटीनामके स्थाने स तपस्तताप द्वादश वर्षाणि। द्वादशेषु वर्षेषु समाप्तिं गतेषु रघुपतिः पुनस्तस्य पुरतः प्रादुर्बभूवोवाच च तमेवम्-तत्रास्ति शिवाजिनामको नृपतिः। त्वया तस्य साह्यं कार्यम्। म्लेच्छैर्महती चमूरेका स्थापिता वर्तते। शिवाजेः सहायको भूत्वा त्वया सा चमूर्नाशनीयेति। लिखति कवयित्री

अजनि पूर्वमितः शरदां नवद्वितयतः शिवनामकपुरुषः।
व्रजितुमर्हसि वत्सल दक्षिणां दिशममुष्य विधेहि सहायताम्॥
धरणिभारकरं समुपार्जितं बहुबलं यवनैर्विजिगीषुभिः।
लघु तदस्तमयं व्रजतु त्विषा नरपतेश्च रिपुः स विनश्यतु॥
(६-६-७)

## ध्वंसलीलावर्णनम्

रामादेशानुसारं यदा रामदासो निजमाश्रमं परित्यज्य धराऽटनार्थं निर्गच्छति तदा स सर्वत्र यवनानां ध्वंसलीलां पश्यति शृणोति च। यवनैः कीदृशी संहारलीला कृतेत्यस्य वर्णनं कुर्वन्ती क्षमारावमहोदया विस्तरेण लिलेख, तद्यथा

नाकर्णि देवायतनेषु घण्टानादो नसन्ध्यार्चनवाद्यघोषः।
प्रकम्पमाना यवनोग्रखड्गाद् भक्ताश्च देवालयतो विलीनाः॥
यस्मिन् समाकर्णि पुरा मठेऽलं भ्रोच्चैर्व्रतीनां श्रुतिपाठघोषः।
निश्शब्दता तत्र यथा श्मशाने विषण्णभावं जनयांबभूव॥

विलुण्ठय रत्नानि सुरालयेभ्यस्ततः सुवर्णप्रतिमाश्च हृत्वा ।
व्यनाशयंस्ता यवना वितेनुर्देवालयान् हा मसजीदरूपान् ।।
योषाः कुलीना अपहृत्य दुष्टा म्लेच्छा हठात्ताः परिणिन्युरार्ताः ।
हृत्वा रुरुत्सुं क्वचिदाप्तवर्गं वीथ्यां ववर्षुं रुधिराम्बुधारा ।।
प्रदह्य पल्लीर्ज्वलताऽनलेन व्यधायि मत्तैर्यवनैर्विनाशः ।
निर्वासितानां वनिताऽर्भकाणामश्रावि हन्त क्वचिदार्तनादः ।।
विध्वंसवृत्तं पथि रामदासं न्यवेदयन् व्याकुलघोषवद्धाः ।।
(७-३-८)

अनेनातीवदुःखितमानसस्स स्वधर्मसंस्थापनाय दृढतरं निश्चयं चकार । पूर्वं तु तेन रामादेश एव श्रुत आसीत् यवननाशाय, परमधुना स्वीयैर्नेत्रैरपि तद् सर्वं दृष्टवान् स यवनकुकृत्यजातम् । तेन तस्य निश्चयः पूर्वापेक्षया पुष्टतरो जातः ।

## जनोत्पीडनम्

रामदासश्शहापुर एकस्याः स्त्रिया पतिं निर्दोषमपि यवनैर्गृहीतं तेभ्यो मोचयति (१०-१-३९-४०) पुना रामजन्मोत्सव-प्रसंगे देवालयस्यान्तिकं स्थितस्याम्रवृक्षस्यैकस्य शाखाश्छेत्तुमिच्छन्त्स "कृच्छ्रादनुज्ञां यवनाधिपस्य संप्राप्य शिष्यं मुनिरेकमाह वृक्षं समारुह्य लुनीहि शाखाभागान् भवेयुः प्रतिरोधका ये" (१०-४३)

अस्मात्तस्य राजनियमपालनं सिध्यति स राजा यवनोऽपि किन्न स्यात् । परमिदमपि प्रत्यक्षं यत्तदा वृक्षस्य शाखालवनादपि प्राग्राजाज्ञा प्राप्तव्याऽऽसीत् । जीवनयात्रायां जना कीदृशान् विघ्नान् पदे पद अनुभवन्ति स्मेत्यनुमेयं सुधीभिस्स्वयमेव ।

इदमत्रावधेयं, यवनान् प्रतिकर्तुं रामदासस्य वा हनुमतो वा रामचन्द्रस्य वा न काप्यलौकिकी शक्तिर्भवति क्षमा । कवयित्र्येवंविधे व्यतिकरे समुत्पन्ने सर्वविधं लोकोत्तरत्वं विस्मरतीत्याश्चर्यकरमेव । यदि वस्तुतः काचिच्छक्तिरस्त्यलौकिकी, तया तदा स्वीयमस्तित्वमवश्यं प्रदर्शनीयं यदा तस्या अस्तित्वमतीवावश्यकं जनपीडकानां प्रतिकारायेति । यदि कार्यकाले समुत्पन्ने न सा शक्तिर्दृश्यते क्वचित्तदा कार्याभावकाले तस्या प्रदर्शनं जनप्रवञ्चनमेवेत्येव कथनीयतामापतति ।

रामदासः सन्यासी । परं यदा शिवाजिस्तं शरणं जगाम, तं सन्यासं च ययाच, तदा स तमादिदेश त्वया म्लेच्छग्रहात् स्वीया जन्मभूमिर्मोचनीया । तव प्रथमं कर्तव्यं कर्मेदमेव । संन्यासग्रहणस्येच्छा पूर्णतस्त्याज्येति । कवयित्र्याह

राजन्यधर्मं प्रतिपद्य राजन् समहसि त्रातुमिदं स्वराज्यम् ।
म्लेच्छ ग्रहान्मोचय मातृभूमिमित्येष धर्मः प्रथम तवेह ॥
(११-३६)

रामदासनिर्दिष्टमार्गानुसरणाच्छिवाजिःविजयी बभूव । तस्य महतौजसा हतः सार्वभौम - यवनो व्यकम्पत (१३-१) गुरो रामदासस्याशिषा स अफझलखानं म्लेच्छवीरविददार नखैः (१३-५)

एव रामदासा रामचन्द्रेणादिष्टं यवननाशात्मकं कर्म शिवाजिना कारयित्वा स्वं नयोगमशून्यञ्चकार, शिवाजिश्च महाराष्ट्रभुवमलंचकार ।

आक्रान्तमेवं यवनैर्नितान्तं विमोच्य राष्ट्रं स रिपून्निरस्य ।
व्यधान्महाराष्ट्रभुवं स्वतन्त्रां शोकाकुलं शत्रुकुलं शिवाजिः ॥
(१२-१६)

म्लेच्छयवनौ किमर्थकौ ?

अत्र काव्ये कवयित्री म्लेच्छ यवन शब्दौ प्रययोज । तत्र म्लेच्छशब्दः कस्य वाचकः ? यवनशब्दश्च कस्य वाचक इति प्राप्ते ब्रूमः-शतपथब्राह्मणे म्लेच्छशब्दो दृश्यते । तत्र स असुरवाचकः, तेषां भाषायाश्च परिचायकः । असुरा अस्य इति वाच्ये अलव इत्यूचु १ । यः कोऽपि तथावदति, तथाविधां भाषाञ्च भाषत सोऽपि म्लेच्छ इति शतपथीया श्रुतिः२ ।

महाभाष्ये पठामो यद् अपशब्द एव म्लेच्छ इति३ । अत्रापि म्लेच्छ-शब्दो भाषया सम्बद्धः ।

पूर्वमसुरानां भाषा म्लेच्छशब्दवाच्याऽऽसीत् । असुरा आर्येभ्यो भिन्ना इति तेषां भाषाऽपि तेभ्यो भिन्ना । तेनार्यभाषयाऽननुज्ञाताश्शब्दाः तेषां प्रयोक्तारश्च सर्वेऽपि म्लेच्छशब्दवाच्या अभूवन् । एवं शब्दस्यार्थो विस्तृतोऽभवत्

उत्तरकाले म्लेच्छानामाचारादिकमपि म्लेच्छ शब्द वाच्यमभवत् । ते गोमांसभक्षणपरा आसन्, आर्याणां विरुद्धं च वदन्तिस्म । तेन गोमांस-खादकः, विरुद्धं वक्ता, आर्याचारहीनश्च म्लेच्छ इति ख्यातिर्बभूव ४ ।

---

१. सायणस्तु 'हेलयो हेलय' इति पठति स्वीयामृग्वेदभाष्यभूमिकायाम् ।
२. तेऽसुरा आत्तवचसो हेऽलवो इति वदन्तः पराबभूवुः । तत्रैतामपि वाचमूदुः उपजिज्ञास्यां स म्लेच्छस्तस्मान्न ब्राह्मणो म्लेच्छेदसुर्या ह्येषा वाक् । ]शतपथब्राह्मणम्, ३-२-१-२३-२४]
३. म्लेच्छो ह वा एष यदपशब्दः [महाभाष्यम्, १-१-१]
४. गोमांसखादको यस्तु विरुद्धं बहु भाषते ।
सर्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते ॥ (बौधायन)

पुरा त्वसुरा एव म्लेच्छशब्दवाच्या आसन् । पर पश्चाद् येऽन्ये जनाः आर्याणां सन्निधिं प्राप्ता स्तेषामपि भाषा भिन्नाऽऽसीत् । तेऽपि गोमांसखादका आसन्निति । तेन तेऽपि म्लेच्छशब्दवाच्या बभूवुः ।

असुराननु यूनानदेशजा अत्रागतवन्त । आचारभाषादिभिन्नत्वात्तोऽपि म्लेच्छा इति प्रसिद्धिं जग्मुः । वाराहमिहिरः स्पष्टमेव यवनान् म्लेच्छा इत्युक्तवान्[१] ।

तदुत्तरं भारतं महामदानुगाः मुस्लवन्तः[२] आगतवन्तः । तेषामप्याचार-भाषादिकं सर्वमार्येभ्यो भिन्नमासीत् । तेन तेऽपि म्लेच्छा इति प्रसिद्धिं गता ।

पुरा 'यवना म्लेच्छा' इति प्रसिद्धिरासीत् । तेन जनैरिदं गृहीतं यद् म्लेच्छ – यवनौ पर्यायवाचिनाविति । अस्ति यदा 'माहामदा म्लेच्छा 'इति प्रथा बभूव, तदा ते यवना इत्यपि प्रसिद्धिर्बभूव । तेन माहामदानां पर्यायवाचकौ म्लेच्छ यवनाविति लोके बभूव प्रथितम् ।

अतः पुराणेषु यवनशब्दो माहामदपरकः[३] पण्डितराजो जगन्नाथोपि प्रयुयोजैवमेव शब्दममुम्[४] ।

एषोऽत्र निर्गलितोऽर्थः सर्वस्यास्य वाक्प्रपंचस्य-म्लेच्छ-यवन माहामद-मुसलवानादिशब्दा संस्कृते पर्यायवाचिनः । तेन कवयित्री समानार्थकान् यथेच्छ प्रयुक्तवती स्वीये काव्य इति ।

-- सुरेन्द्र अज्ञात
३-५७ अज्ञातवास, वंगा
पिन १४४५६५

---

१. म्लेच्छा हि यवनाः, बृहत्संहिता २-१५

२. भविष्यपुराणे, प्रतिसर्ग-पर्व ३, खण्ड ३, अ० ३ श्लो० २६-२७

३. न वदेद् यावनीं भाषाम् । भविष्य पुराणम्. प्रतिसर्गपर्व ३, खं. ३, अ. २८, श्लो. ५३

४. (क) यवनी नवनीतकोमलांगी ।
   (ख) यदि हि यवनकन्यां पापिनीं मां पुनीहि ।
   (ग) यवनी रमणी विपदः शमनी ।

लघूपन्यासः-

# शिखा

— केशवचन्द्रः

★

अहरहो विरहः।

अविरता विरुतिः। आलोके न पुलकः। कामना लीना ....विलीना...। वासना विवसना दृश्यानि वेश्याभूषणानि। मनो वनभूमिरेव।

"तथापि तव नवनवनीततनुरेका ललितलता रजनि .... !"

रजनी चिन्तयति। परम् आश्रयः कुत्र? आश्रयो नापेक्षते। आलय आवश्यकः। न वरणम्, अपितु शरणमपेक्षते। किं चरणरेणु? तदेव शरणम न शरणम्, अपितु सरणिः। आलयनिमित्तमेव ..। आलये ... सहलयः। सहलये......महालयः।

"पितृलोकं परित्यज्य आगता ये महालये उज्ज्वलं ज्योतिषां मार्गं प्रपश्यन्तु व्रजन्तु ते।" कुलमणिः दीपार्पणे मग्नः। सः कुलीन। शेषवयो निवासी। वसने तस्य परम्परा। आसने संस्कृतिः अशने प्रकृतिः। व्यसने विकृतिः। शयने स्वप्नो जागतिकः। चलने विश्वासो भौतिकः। स हि जनकः। पुत्रो विलासः। कन्या रजनी किन्तु स विपत्नीकः। तथापि अद्य तस्य बाल्यसखी मस्तकस्य शिखा।

अपरा सखीयं दीपशीखा।

अद्य देहे न उत्तेजना। नेन्द्रिये शक्तिः। स्मृतितले समयस्य चपलता। सरलकुटिलपथे अतीतलहरी। अभितः जीवनम्। न सत्। नाऽसत् न सदसत्, न वा सदसद् भिन्नम् केवलं प्रभिन्नम्।

कुलमणिनयने न सा प्राचीनकुटी। परित प्रासादाः। वृक्षतले न छाया न वा देवता सर्वत्र शिल्पानां वर्जितम्। पवने न सुरभिः। केवलो धूमः। उत्तापो भवति। परं कर्दमं न शुष्यति। वृष्टिः भवति किं तु दूषितं न प्रधूयते।

कुलमणिः आकारयति। मुम्मों!

मुम्र्मुः सद्य उपस्थितो भवति। नित्यनैमित्तिकं प्रस्तौति। करणीयं च पृच्छति। कुलमणिः शान्तो भवति : तस्य चित्तान्तराले जृम्भते मुर्मोः इतिहासः।

महादेवमन्दिरनिकटे तद्दिने मुर्मुः रुदन् आसीत्। निकटे तस्य मातृशवः। माता यायावरी। सा पुनः गिरिजनः। कर्मनिमित्तमेकदा ग्रामाञ्चलम् आगमत्। मन्दिरस्य पश्चात् विसतिमकरोत्। मुर्मुः पितरं न दृष्टवान्। माता एव तदर्थं सर्वम्, इदानीं तु अज्ञातरोगे सा शेषश्वासं परित्यक्तवती। दिनद्वयं यावत् शवः तत्रैव पतित। तन्निकटे मुर्मुरपि तथा। यदा तु क्षुधा बाधते स्म तदा मुर्मुः प्रतिदिनमिव अद्य प्रसादनिमित्तं मन्दिरमुपगतः :

कुलमणिः अपृच्छत्।

किं, रे ! किमर्थं विषण्णः ?

भगवन् ! मम माता अस्वस्था।

कदा प्रभृति... ?

दिन-त्रयतः।

तत्क्षणमेव कुलमणिः मन्दिरस्य पश्चात् आगतः। पूतिमयं शवं विलोक्य सः स्तब्धः। ततः संस्कारनिमित्तं सर्वमायोजितवान् चिताशिखायां मुर्मुः ग्रासस्यैव चित्रं विलोकयन् आसीत। यदा शिखा अवनता तदा मुर्मुः उच्चैराक्रोशत्।

भगवन् ! मातरं मे भस्मसात् कृतवान् ?

कुलमणिः गम्भीरभावेन स्मरन् आसीत्, नैनं दहति पावकः। पावकः पुनाति एव। किन्तु मुर्मुः कातरभावेन तस्य चरणतले शरणमगृह्णात्। पादोपरि च मस्तकं निधाय व्यलपत्।

भगवन् ! मातरं मे प्रत्यर्पय..। प्रत्यर्पय..। प्रत्यर्पय...भगवन्...!

कुलमणिः गम्भीरभावेन तम् उत्थाप्य प्रत्यावर्तत।

मुर्मुहस्तं धृत्वा प्रतिष्ठते कुलमणिः। मुखे चिन्तायाः गभीरस्पर्शः।

पश्चात् चिताया अवशेषः। परितः तस्य पादुकाशब्दः कालस्य उपहास एव।

तदनु मुर्मुः सेवकः...पुत्रः...।

दिननेपथ्ये इत्थं जीवनकथा अतीत ग्रस्ता। विषयविस्तारे मर्मु रद्य वयस्कः। परिवारे स आत्मीयः। लघुसमाजे च अविच्छिन्नसदस्यः।

तदा प्रभृति मुर्मुः भ्राता। रजनी भगिनी। कर्मपरिसरः कुलमणेः निर्देशः। आशामूले प्रगतिः। विश्वासमूले श्रीकृष्णरतिः : समस्यातले संसारप्रीतिः।

विलासो वणिक्।

वाणिज्यनिमित्तं तस्य गृहसंपर्कः छिन्नः। पिता कुलमणिः तन्निकटे दैन्यस्य उपासकः। दरिद्रता च विलासः तदर्थम्। अभावमूले ईश्वरो महीयान्। अभाव एव शान्तये मार्गं निर्माति। अभावे जन ईश्वरमुपास्ते। शान्तिं लभते आधितो मुक्तिं प्राप्नोति अत अभावः आवश्यकः किन्तु विलासः अन्यैव मनोभावस्य विरोधी। अर्थनीतिरेव जीवनस्य मानदण्डः। यदि अर्थनीतिः न सुविन्यस्ता तर्हि सर्वाऽपि नीतिः वृथा एतदर्थं विलासो बाल्यात् वाणिज्यप्रणयी। बाणिज्ये हि वसते लक्ष्मीः

अद्य जनपदे विलासः प्रसिद्धवणिक्। स मान्यो गण्यश्च स नेता सकलकर्मणि स जननायकं। अतो यत्र निवास तत्र गृहम् जन्मगृहं तु अख्यातग्रामे यत्र पिता कुलमणि शीर्यते यत्र मूर्खमुर्मु प्रतिदिनं घासं संगृह्णाति, काष्ठानि आहरति? गाश्चारयति, सायं च वृद्धं सेवते। यत्र च भगिनी रजनी अद्यापि विधवा।

रजनी विधवा

सा अशुभदर्शिनी पूर्वजन्मनो दुष्कृतिनिमित्तमेका अभिशप्तसैकतशय्या।

एकस्मिन् गृहे रजनी कन्या भगिनी जाया जननी। अद्य जगति तदर्थं न किंचिदपि वर्तते खादयितुम् ... उपभोक्तुं वा जरज् जनकस्य बाहुच्छायातले सैका प्रत्यूषतारका कियत्क्षणकृते आविर्भूय पुनस्तिरोभविष्यति सा कन्या गृहस्य भगिनी साधारणजनस्य। जाया प्रेमपुरुषरसेश्वरस्य जननी जीवमात्रस्य।

किन्तु सरलकामनातले रजनी तथापि ललितललना प्रच्छन्नमनसि तस्या अभिलाषा अनेके कर्मप्रेरणामूले कृत्यं बहुः आस्वादनभावनायां पृथिवी तथाऽपि बहुरूपा ममत्वचेतनायां दिवसा विचित्रवर्णा परमद्य अश्रुधारे तस्या न परमपुरुष, न वा परपुरुषः... केवलं पुरुषो य आगत आसीत् किंचित् निजत्वं वहन् .. किंचिन् ममत्वं वहन् किंचित् एकत्वं वहन्।

घटना तु घटते एतस्याः प्रतिरोधो वा अवरोधो वा सर्वमत्र घटनैव। सर्वोऽपि घटनावशवर्ती इत्थं घटना ...प्रवाहे सः पुरुष आगतः। विगतोऽपि। रजनी तु साक्षिणी। सा प्रतिभूः मनाक् उच्छिष्टस्य... मनाक् अवशिष्टस्य _।

अग्र परिशीलनाय अवसरः पुष्कलः । को वा लाभः ? कर्मपरिसरे अद्य पितु निर्देश । शान्तये च पूजा उपासना...उपवासः... । रजनीसम्मुखे अद्य बहुसौभाग्यवत्यः । तासां वसन-भूषणादीनि च प्रतिदिनं रङ्गविचित्राणि। व्यवहारे च नवीना भङ्गी । वचने नाना कथाः । अहंकारे सामाजिकप्रतिष्ठा । अभिमाने मातृत्वगौरवम् । अभिजात्ये दाम्पत्यस्य परिवर्तितशैली ।

शम्पा एका संकतरेखा

समाजे सम्मानिता सौभाग्यवती । सा शिक्षिता संसारस्य वार्ता तदर्थं मुक्ता । बहुजनसंपर्कः तदर्थं मधुपर्कः । सा नेत्री परिवारस्य । उन्नेत्री परिवेशस्य अभिनेत्री पारिपार्श्विकसंपर्कस्य तस्याः समतलप्रवृत्तिस्तरे नाना पदचिह्नानि । विभिन्ना आकृतयः । अगण्याः प्रतिमाः । अतुलानि रूपाणि पुनश्च मधुरसम्बोधनानि । तथापि उच्चारणकलायां तन्निकटे प्रहेलिका अर्थस्य ललितनिह्नुतिः । किन्तु परिचितानामानुक्रमणीषु प्रियतमं "निशान्त" इति श्रद्धानाम् ।

दाम्पत्यस्य अभिषेकनेपथ्ये निशान्तः चतुरो लिपिकः । तस्य प्रथमसेवा-वृत्तिः राज्यस्य सचिवालये । अतः राज्यस्य नीतिविषये स निष्णातः । जनानां भाग्यविषये स भविष्यद् वक्ता । स जानाति अत्र केन प्रकारेण धनम् आगच्छति । केन प्रकारेण च शासनं प्रचलति । धनोपार्जनेमार्गः तन्निकटे सरलः । इतस्ततो विक्षिप्तपुस्तिकासु हि स राज्यस्य भाग्यलिपिं नियमिततया पठति । अतः जनान् असौविध्ये निक्षेप्तुं स कौशलं जानाति । तदपि कार्यं सम्यक् रूपयति । धनम् उपार्जयति । जनान् शोषयति राज्यं दूषयति । निजकार्यमपि कलुषयति । अनेन स आनन्दं लभते । समृद्धया समेधते । नगरे क्षेत्राणि क्रीणाति गृहाणि निर्मापयति याने च गमनागमनं करोति । तन्निकटे नीतिदुर्नीत्योः पार्थक्यं नास्ति । तस्य समग्र वृत्तितले जनानां असौविध्यसृष्टिरेव संकल्पः जनपदस्य विलासपूर्णेषु अट्टशूलेषु कतिचिद्वणिग्बन्धूनां सम्मेलने त्रियामायापनं जीवनस्य महीयसी धारा इत्येव तस्य दर्शनस्य सारांशः वृत्तिः सचिवालये भोजनं अट्टशूले निजगृहाणि तु भाटकीयानि । न स्त्रीचिन्ता न निजचिन्ता केवलः सचिवालयः

--क्रमशः

प्रवक्ता-श्रीजगन्नाथ संस्कृतविश्वविद्यालयः ,
पुरी ,उड़ीसा ,भारत

## निवेदनम्

कृपया वा० शुल्कं शीघ्रतया प्रेषयित्वा अस्माकं साहाय्यं विधेयम् ।

सम्पादकः

# भारतीय दर्शन एक अनुशीलन (हिन्दी)

लेखकः– प्रो. केशव शर्मा, शास्त्री, दर्शनाचार्य, एम. ए. एम. फिल.

मूल्यम् ३० रु०

प्रा. स्थानम् :- आर्य प्रकाशन मण्डल, महावीर चौक,
गान्धी नगर, दिल्ली–११००३१

प्रो० श्री केशवराम शर्मा संस्कृतस्य सरसः कवि — वर्तते तथापि हिन्दी-भाषायां निर्मितमिदं पुस्तकं श्रीशर्मण कामपि सर्वोपकारिणीं तामिच्छां प्रकटयति यस्या वशीभूतोऽसौ निगूढमपि दार्शनिकज्ञानं सर्वजनसुखाय सर्वजन-हिताय च प्रायच्छत्—पुस्तकस्यास्य माध्यमेन ।

दशसंख्यक् निबन्धेषु दर्शनानां सारः हिन्दीभाषायां दर्शनजिज्ञासूनां कृते उपायनी कृतोऽस्ति विदुषा लेखकेन । विषयस्पष्टीकरणस्य सरणिरतीव ललिता, सरसा, सरला च वर्तते । लोका अस्याः सुस्वागतं कुर्युरिति कामनाऽस्मदीया ।

पुस्तकस्यावरण कलात्मकं, सुन्दरं समाकर्षकञ्चास्ति । दर्शनशास्त्रे एम. ए. आचार्यादि-परीक्षादित्सूनां छात्राणां कृतेऽपि पुस्तकमिदं सहायकं सेत्स्यति ।

●

# कथामृतम् (संस्कृते)

लेखकः- गणपति शुक्लः, आचार्यः ।

मूल्यम्:- १० रु०

प्रा. स्थानम्:- श्री अग्रवाल जनरल स्टोर्स, वडवाह,
(म. प्र.) ४५१–११७

पुस्तिकायामस्यां पञ्चविंशतिसंख्यकाः कथाः सन्ति । कथा सरलाः सरसा भावपूर्णाश्च । निखिलेऽपि जगति कथानां कियन्महत्वमस्ति—इति नाविदितं केषांचि जनेषु समाजेषु वा । बालकानां सम्बन्धस्तु विशेषतः कथाभिः सह भवति ।

अस्य पुस्तकस्य वैशिष्ट्यमिदं यदस्मिन् पुस्तके बालकथानामेव संनिवेशः। सर्वा अपि कथा लघ्व्यः हिन्दी-अनुवादसहिताश्च सन्ति। अनेन पुस्तकमिदं संस्कृत—हिन्दीज्ञानां सर्वेषामपि कृते समानरूपेण लाभदायकम्।

संस्कृतस्य मुद्रणमपि शुद्धमावरणञ्च समाकर्षकम्। संस्कृतहिन्दीपठिताः लोकाः पुस्तकस्य समादरं करिष्यन्तीति—आशा।

## यौतुकम् (संस्कृते)

लेखकः- श्री जीतसिंह खोखरः, प्रवक्ता-राजकीय संस्कृत कालेज नाभा (पंजाब)

प्रा. स्थानम् :-जय श्री प्रकाशन ४। ११५ विश्वासनगर, शाहदरा, दिल्ली - ११००३२।

पुस्तकेऽस्मिन् लेखकेन द्वात्रिंशत् लघुतमकथासु वर्तमानाः सामाजिक-सांस्कृतिकराजनैतिक-विषयाः समेकी कृताः। वर्तमानसमाजस्य शल्यमस्मिन् साधुतया सम्पादित तस्य रिक्तता, आडम्बरपूर्णता च स्पष्टरूपेण प्रकाशिता येन समाजः अस्य पुस्तकस्य प्रकाशे स्व लोचनानि समुद्घाटयेत् अनेन समाजस्य कल्याणं भविष्यति नात्र सन्देहः।

आवरणं समाकर्षकं मुद्रणञ्च शुद्धम्।

## नूतनपाणिनीयम् (हिन्दी)

लेखकः- राजनारायण प्रसाद मिश्र 'नूतन'

प्रा. स्थानम् :-नूतन प्रकाशन, १७१ आसफजान, पीलीभीत (उ० प्र०)

द्वादश पृष्ठात्मके लघुतम पुस्तकेऽस्मिन् लेखकेन प्रश्नोऽयमुत्थापितोऽस्ति यत्पाणिनीयव्याकरणं दुरूहं वर्तमानकालानुरूपं नास्ति। लेखकस्याय विचारो वर्तते यदत्र व्याकरणे सूत्राणामाहुल्यानां विसर्जनञ्च समयस्य दुरुपयोग एव। अतः संस्कृतस्य वर्तमानावश्यकतापूर्त्यै नूतनपाणिनीय-व्याकरणस्य संकलनमावश्यकम्। लेखको यद्यपि पाणिनीयनियमानां सर्वथा समर्थनं करोति तथापि—असौ दोषप्रक्रियायाः—विरोधं करोति यतोहि सूत्राणां गमनागमनेन छात्राः व्याकरणं प्रति रुचिहीनाः—भविष्यन्ति। अत्र वयमपि व्याकरणपण्डितान्—विचारयितुं प्रार्थयामः येन संस्कृतछात्राणां कल्याणं स्यात् संस्कृतस्य रूपमपि च विकृतं न स्यात्।

— सम्पादकः

# चायकाव्यम

चायः कर्म च धर्मश्च चायश्च परमं सुखम् ।
नास्ति यस्य गृहे चायः, जीवनं तस्य निष्फलम् ॥

सोमपानान्मधुपानात् जलकैम्पापानयोरपि ।
अस्मिन् जगति हे लोकाः ? चायपानं विशिष्यते ॥

कविर्भवेत् नर्तको वा संगीतज्ञस्तथापि च ।
परिश्रान्तः क्षुधार्तो वा चायमाश्रयते सदा ॥

धियो जाड्य प्रहरति देहं स्फूर्त्यास्तु सिञ्चति ।
चित्तं प्रसादयेन्नित्यं चायः किन्न करोति वै ॥

यथा नारी मण्डनैश्च पुरुषः सुगुणैर्यथा ।
तथाल्पाहारफलकं चायेनैव सुशोभते ॥

स्वदेशे परदेशे वा आंग्लदेशेऽथ यावने ।
यत्र यत्र प्रपश्यामश्चाय एव हि दृश्यते ॥

प्रातश्चायस्तथा सायं मध्यान्हेऽपि च वाञ्छितः ।
रात्रौ च भोजनान्तेऽपि चायपानं प्रशस्यते ॥

मृतं दुग्धं हतं तक्रं गतं च रसनं सदा ।
नत द्राक्षारसं वृद्ध चायास्वादनमागतम् ॥

ब्राह्मणश्चापि पिबति क्षत्रियोऽपि च सेवते ।
वैश्यश्चाय नुरक्तश्च शूद्राणां का गतिस्तथा ॥

यथा ह्येकेन चक्रेण रथस्य न गतिर्भवेत्
तथाहि चायपानेन विना कार्यं न सिद्ध्यति ॥

यथा पुराणाः कवयः चिन्तयित्वालिखन् पुरा
तथा अद्यतनालोकाश्चायं पीत्वा लिखन्ति हि ॥

प्राचीनभारते दुग्धदध्नोः नद्यश्च प्रावहन् ।
तथैवाद्य हि देशेऽस्मिन् चायनद्यः प्रपश्यताम् ।

विद्यालये महाविद्यालयेष्वपि च सन्ततम् ।
विश्वविद्यालये चापि चाय एव प्रवर्तते ॥

विवाहेष्वपि पश्यन्तां जन्मोत्सवदिनेष्वपि ।
कविगोष्ठ्यां तथान्येष्ठ्याम्-चायनादो प्रगर्जति ।।

'च' चमत्कार संयुक्तः 'आ' तु आयाति द्योतकः ।
'य' तु यन्त्रमिव स्फूर्तिदाता चायः प्रभाषितः ॥

-- डा० श्रीमती सुधा सहाय,
एच, १६ बी, साकेत
नई दिल्ली - ११००१७

# अ० भा० संस्कृत लेखिका- विदुषी - सम्मेलनम्

१९८७ ख्रीष्टाब्दस्य जुलाई मासीयेषु १०, ११, १२ दिवसेषु त्रिदिवसीयमिदं सम्मेलनम् शिमलायामायोज्यते। अत्र देशस्य प्रदेशस्य च प्राचीन-नवीनसंस्कृतलेखिकाः, विदुष्यश्च भागं ग्रहीष्यन्ति। संस्कृतविदुषीनां सम्मेलनायोजनस्य प्रथमोऽयं प्रयासः। अस्मिन् समारोहे या अपि संस्कृत-विदुष्यः विद्वांसो वा सम्मिलितुमिच्छन्ति तैः संयोजकेन साकमविलम्बं सम्पर्कः स्थापनीयः येन तासां तेषाञ्च निवासभोजनादिव्यवस्था कृता स्यात्। जूनमासस्य २८ तिथिपर्यन्तं येषाम् आगमनसूचना समागच्छति तेषां कृत एव व्यवस्था करिष्यते। अतः सर्वैरपि - आगन्तुकैः-यथाकालं सूचना प्रेष्या।

हिमाचलप्रदेशस्य संस्कृताध्यापकाः, अध्यापिकाः। प्राध्यापकप्राध्यापिकाश्छात्राश्चाधिकाधिकसंख्यायां सम्मिलेयुः संस्कृतप्रसारविकासकार्याणि कथमग्रेसराणि स्युरत्र सम्मिल्य विचारयेयुः। एवंविधविचारणाया कृतेऽमूल्योऽयमवसरः भवतां कृते अथ चास्यायोजनमस्माभिः क्रियते।

अहं पूर्णतः- विश्वसिमि यदत्रागत्य भवद्भिः ज्ञानयज्ञस्यास्य सफलतायै पूर्णप्रयासाः करिष्यन्ते। विशेषपरिचयाय पत्रेण प्रष्टव्यम्।

## श्री हरिमन्दिरे ऽपूर्वः सप्ताहयागः

हिमाचलप्रदेशस्य सोलननगरे गतवर्षाणीव वर्षऽस्मिन् २२ मईतः ३० मई पर्यन्तं त्रयोदशः श्रीमद्भागवतसप्ताहयागः पूर्णसफलतया सम्पन्नः।

श्रीमद्भागवत पुराण पाठप्रवचनादिकं दिव्यज्योतिषः सम्पादकेन प्रा. केशवशर्मणा कृतम्। प्रातः सप्तवादनतः द्वादशवादनपर्यन्तं पाठः, २—३० तः पंचवादनं यावत्-पुराणप्रवचनम् भवतिस्म। रात्रौ अष्टवादनतः द्वादशवादनपर्यन्तं रासलीला विभिन्नविदुषां विदुषीनां सन्तमहात्मनां भाषणादिकं संगीतभजनकीर्तनादिकं च भवति स्म। एवमहर्निशं सप्ताहेऽस्मिन् हरिचर्चा प्रसंगः प्राचलत्। अन्तिमदिवसे आचार्य श्री दिवाकरदत्तशर्मभिः अपि सहस्रशः लोका शुभाशीर्वादेन कृतार्थिताः।

श्री हरिजी महाभागाः मन्दिरस्याधिष्ठातारः नवदिनानि पर्यन्तं न किमपि अन्नादिकं गृहीतवन्तः। केवलं स्वल्पतमदुग्धमेव गृहीतम्। एवञ्चाय-माध्यात्मिकः यागः पूर्णसाफल्येन पूर्तिं गतः।

सम्पादकीय — —

## हिमाचल में प्रशासन के गत चार वर्ष–

हिमाचल प्रदेश में श्री वीरभद्र सिंह के प्रशासन के चार वर्ष पूर्ण हो चुके हैं। जब आपने यहां प्रशासन की बागडोर सम्भाली तो प्रदेश में प्रति दिन नेतृत्व में परिवर्तन की अफवाहें सुनने को मिलती थी। प्रशासन में इनके कारण इतनी ढील आ चुकी थी कि जिसका कोई हिसाब नहीं। कार्यालयों में कर्मचारियों की नाम मात्र उपस्थिति रहती थी। परन्तु आपके प्रशासन सम्भालते ही इसमें क्रान्तिकारी परिवर्तन हुआ।

## कार्यालयों में एक मास

प्रशासन सम्भालते ही आप जब सचिवालय में एकमास के करीब बैठे तो बड़े से बडा अधिकारी भी ८ बजे तक काम करते हुए कार्यालय में देखा गया। कर्मचारी दफतरों में समय पर आने लगे। लोगों के काम जो वर्षों से पैण्डिग में पड़े थे वे आगे बढ़ने लगे। इस प्रकार टूटते हुए शासन को सम्भाल कर आपने प्रथम सफलता प्राप्त की।

## अपने घर से ही

दूसरी महत्वपूर्ण विशेषता आपकी यह रही कि आपने मुख्यमन्त्रित्व अपनी कोठी से ही चलाया। सरकारी भवन में निवास ग्रहण न कर एक महत्वपूर्व परम्परा आपने चलाई जिसकी देश के बड़े २ पत्रों ने भी प्रशंसा की है।

## सभी लोगों के लिए द्वार खुले

ये दो बातें पिछले मुख्यमन्त्रियों से भिन्न आपने की और जनता ने इस का पूर्ण स्वागत किया। इसके उपरान्त मुख्यमन्त्री महोदय ने जो सभी लोगों से मिलने का कार्यक्रम रखा वह सर्वथा जनहित में है। पिछला अनुभव था कि लोग मुख्यमन्त्रियों से मिल नहीं पाते थे। मिलने के लिए बड़ा ही सीमित समय रखा गया था। आपने अपने दरवाजे सभी लोगों के लिए सर्वदा खोल दिये।

## क्या यह उचित है ?

कुछ विचारकों का कहना है कि ऐसा कर आपने उचित नहीं किया। इतने लोगों से न तो मिलने से कोई प्रतिदिन लाभ है। अपनी अशान्ति ही बढ़ती है। इतने ढेर सारे लोग जो मिलते हैं क्या उनके सभी के काम हो जाते हैं ? यदि नहीं तो फिर इस का क्या लाभ ?

यहां मुझे यही कहना है कि मौलिक रूप से मुख्यमन्त्रि महोदय का निर्णय सर्वथा उचित है। जनता का प्रतिनिधि यदि जनता से इस प्रकार न मिले तो फिर वह जनप्रतिनिधि कैसा ? हां काम कितने लोगों के होते हैं यह प्रश्न विचारणीय है। परन्तु इसके लिए मुख्यमन्त्रि महोदय ने अपने दोनों स्थानों में अधिक लोगों को रखा है। सचिवालय में भी कर्मचारी बढ़ाए गए हैं ताकि जो भी कागज मुख्यमन्त्रि महोदय के माध्यम से यहां सचिवालय में पहुंचे वह मुख्यमन्त्रि सचिवालय के कर्मचारी यथास्थान पहुंचाएं एवं उनकी क्या दशा हुई इसका जायजा लें। यह सारा उत्तर दायित्व सचिवालय के मुख्यमन्त्रि कार्यालय के कर्मचारियों का है। इसके लिए मुख्यमन्त्रि महोदय को दोष देना व्यर्थ है। परन्तु इतना अवश्य है कि कभी कभार मुख्यमन्त्रि महोदय यदि इसके विषय में पूछ ताछ करते रहें या किस प्रकार लोगों को अधिक लाभ हो सकता है इस पर गम्भीरता से विचार करें तो यह अवश्य ही दोनों जनता एवं मुख्यमन्त्रि के लिए उपयोगी हो सकता है।

इस सन्दर्भ में मैं यह लिखना भी अपना कर्तव्य समझता हूं कि जो लोग बेकार की बातें लेकर वहां पहुंचते हैं उन्हें इसका अवश्य ही ध्यान रखना चाहिए बेकार मे मेरा आशय उनबातों से हैं जो सीधे मुख्यमन्त्रि महोदय से सम्बन्धित नहीं हैं। परन्तु वहां तो जनसमुद्र उमड़ा रहता है। तो भी अधिकांश लोगों का भला इस से होता होगा ऐसा मेरा अपना अनुमान है।

## एक और गलत फहमी

अधिकांश लोगों से निरन्तर सम्पर्क बना रहता है उनमें से वहुतों का कहना यही होता है कि सभी कार्य या फैसले मुख्य-मन्त्री महोदय ही करते हैं। निदेशक, सचिव, कमिश्नर अन्य

मन्त्री सभी यही कहते हैं कि यह कार्य तो मुख्यमन्त्री ही कर सकते हैं। लोगों की यह ग्राम शिकायत है। इस से क्या होता है कि अन्य सभी की इमैज तो बनी रहती है परन्तु मुख्यमन्त्री की छवि अवश्यमेव प्रभावित होती है। ऐसे में सभी उल्लिखित लोग अपने २ काम कर लेते हैं और जो नहीं करने होते उन्हें मुख्यमन्त्रि पर थोप देते हैं।

इधर हमने यह भी सुना है कि मुख्यमन्त्री जी ने तो ब्यूरोक्रेटों को सारी स्वतन्त्रता दे, रखी है। यदि ऐसा है तो जो लोग यह कहते हैं कि यह सब मुख्यमन्त्री जी ही करेंगे वे स्वयं ही गलत कहते है लोगों को यह समझना चाहिए।

## भ्रष्टाचार उन्मूलन

के लिए भी गतचार वर्षों में काफी काम हुआ है परन्तु भ्रष्टाचार यदि यत्र तत्र है तो लोगों को स्वयं उसे नष्ट करने के लिए आगे निर्भीकरूप से आना चाहिए। तभी इसमें कमी हो सकती है।

### वनसंरक्षण:

वनसंरक्षण में जो कार्य आपने किया है वह अन्य के वश की बात नहीं थी। पेड़ों का अवैध कटान काफी मात्रा में बन्द हुआ है।

### विद्युद्दोहन :

बिजली उत्पादन की दिशा में जो विशाल योजनाएं आपने बनाई हैं वे देशका प्रदेश का रूप ही बदल देंगे इसमें कोई सन्देह नहीं।

### शिक्षा में प्रगति:

आपके गत चार वर्षों के शासनकाल में प्रदेश में शिक्षा के क्षेत्रों में महत्वपूर्ण विकास हुआ है और बागवानी विश्वविद्यालय प्रदेश को आपकी बहुत बड़ी देन है।

साहित्य, संस्कृति, कला, शिक्षा, उद्योग विद्युतीकरण, पेयजलसुविधा फलों आदि का मूल्यनिर्धारण ये सभी काम आपके बेजोड़ गिने जाते हैं। खास कर के गरीबलोगों के हितों के

लिए ग्राम विकास के लिए जो धन का आयोजन किया गया है वह सर्वथा प्रशंसा ही है।

सब से बड़ी एक और बात भी है और वह यह कि एक सन्तुलित छोटा मन्त्रिमण्डल कायम करके आपने प्रदेश का बहुत ही हित किया है।

## संस्कृत के क्षेत्र में

संस्कृत के विकास के क्षेत्र में अभी तक सभी लोग आपकी सफलताओं की प्रतीक्षा में हैं। क्या शिक्षा विभाग की उदासीनता के कारण संस्कृत का पक्ष अभी तक भी उपेक्षित है अथवा कोई अन्य कारण है। मेरे विचार में इस दिशा में आपके महत्वपूर्ण कार्य युगयुगान्तरों तक स्मरण रहेंगे यदि आप उन्हें कर पायें जो आपके पास कई बार प्रस्तुत किए जा चुके हैं।

## लघुपत्रकार गोष्ठी

गतमास लघुपत्रकारिता गोष्ठी हि. प्र. अकादमी ने आयोजित की थी। इस में भाषा विभाग और लोकसम्पर्क विभाग के निदेशक भी उपस्थित थे। लघुपत्रकारिता, शीर्षक की कुछ लोगों ने गोष्ठी में जो आलोचना की थी उस के उत्तर में बहुत अच्छा कहा भाषा विभाग के निदेशक ने कि "मैंने यहां आकर बहुत सी वे बातें ज्ञात की जिन्हें मैं अभी तक नहीं जानता था पत्रकारिता के क्षेत्र की।" नाम चाहे कुछ भी दिया जाय। उसके परिणाम से ही लाभ होता है न कि नाम मात्र से। वैसे नाम भी कोई गलत नहीं था। लघुपत्रकार ही प्रदेश में हैं और उनसे सम्बद्ध लघुपत्रकारिता हुई। याने लघुपत्रकारों से सम्बद्ध पत्रकारिता लघुपत्रकारिता।

हम इस से भी सहमत नहीं जैसा कुछ लोगों ने कहा कि सरकारी सहयोग से पत्रकारिता समाप्त हो जाती है। आजका अथवा कभी का भी युग अर्थ की महत्ता को अवश्यमेव स्वीकार करता है। अतः सरकारी सहायता देना पत्रों के और पत्रकारिता के उत्थान के लिए आवश्यक है। जो पत्र इस समय चल रहे हैं वे या तो पूंजीपतियों के है अथवा सरकार के। अतः हवा में पत्र कैसे विना अर्थ से चल सकते हैं। और हमारे जैसे छोटे

पत्रकारों के लिए तो सरकार से आर्थिक सहयोग लेना जरूरी है। तभी तो ये छोटे २ पत्र जीवित रह कर कुछ सेवा कर सकेंगे लोगों की जनता की। परन्तु जिन लोगों का यह विचार था कि सरकारी सहयोग लेकर पत्र चलाना व्यर्थ है उनमें से कोई भी पत्रकार नहीं था। नियत समय पर चार पृष्ठ निकालना भी शूरता है और फिर यहां प्रदेश में तो कई लोग वर्षों से हर प्रकार के खर्चे स्वयं पूरा करके अपने आपको अथक आर्थिक संकटों में डाल के भी पत्र चला रहे हैं जिनसे कला, संस्कृति, साहित्य और भाषाओं की सेवा हो रही है उनका विकास हो रहा है। अतः ऐसे स्वयं सेवी पत्रकारों के चरणों में हम नत-मस्तक हैं।

क्योंकि पत्र भाषा संस्कृति और साहित्य का प्रचार करने वाले महत्वपूर्ण साधन हैं अतः विभाग द्वारा अथवा अकादमी द्वारा ऐसी गोष्ठियां बुलाने का औचित्य सदा बना रहेगा।

श्री विजयसहगल का शोधपत्र उत्तम था और जो न्यूनताएं उसमें थीं उन्हें अन्य पत्रकार बन्धुओं ने सामने लाने का उचित प्रयास किया। इस प्रकार इस गोष्ठी के आयोजन पर हम अकादमी को वर्धापन देते हैं।

## कर्मचारियों की बदलियां

अब सभी मन्त्रिगण अपने अपने विभागों के कर्मचारियों के तबादले स्वयं कर सकेंगे इससे पूर्व मुख्यमन्त्रि महोदय की स्वीकृति-इनके लिये बनी रहती थी। अब यह आवश्यक नहीं परन्तु जिनके साथ तबादलों में कुछ अन्याय हुअ हो वे मुख्यमन्त्रि महोदय के पास अपना प्रतिवेदन कर सकते हैं

इस नीति से जो निरन्तर यह शिकायत करते थे कि केवल मुख्य-मन्त्री ही सबके तबादले कर रहे हैं या कर सकते हैं उनकी शिकायत दूर हो जानी चाहिए, तथा जो मन्त्री अथवा अधिकारीगण इस विषय में केवल मुख्यमन्त्री का नाम लेकर अनेक समस्याओं से बचते रहे हैं उन्हें अब सावधान रहने की आवश्यकता रहेगी

-- केशव शर्मा

---

# संस्कृतलेखिकानां विदुषीनाञ्च सम्मेलनम्

जुलाईमासे संस्कृतशोधसंस्थानस्य संयोजकत्वे अ० भा० संस्कृत-लेखिकानां विदुषीनाञ्च सम्मेलनं शिमलायामायोज्यते अस्यां दिशि संस्कृत-क्षेत्रे प्रथमोऽयं प्रयासः। संस्थानेन संस्कृतप्रसारविकासमधिकृत्य गतेभ्यः त्रिंशद् वर्षेभ्यः संस्कृतमासिकं सञ्चाल्यते। संस्थानस्य सर्वविधव्ययपूर्तिः श्री आचार्यचरणैरस्माभिश्च क्रियते। तथापि स्वल्पसाहाय्यं सर्वेषां सकाशात्-सादरं गृह्यते। पत्रप्रकाशनस्योपरि एव प्रतिमासं पञ्चसहस्रात्मक-व्ययपूर्तिः- अस्माभिः क्रियते। वार्षिकशुल्केन तु मासचतुष्टयस्य कर्गजपूर्ति-रपि न जायते। तथापि ये अस्माकं नियमितग्राहकाः लेखकाश्च सन्ति नि शुल्कं पत्रं सेवन्ते वार्षिकशुल्केनापि च सहयोगं कुर्वन्ति। तथापि एवं विधाः किल अगुंल्यग्रगण्या एव। अस्तु,

मया तु सम्मेलनविषयेऽत्र निवेद्यमासीत्। सर्वेऽपि आचार्याः हिमाचल-प्रदेशसंस्कृतविद्यालयानां (स्कूल कालेजानां) चापि अध्यापकाश्छात्राश्च प्रार्थ्यन्ते यत्ते विशेषरूपेणात्र सहभागिनो भवन्तु। सम्मेलनायोजनेनास्माकं न किमपि स्वार्थमपितु मासद्वयमहर्निशं कार्यं करणीयं भवति सम्मेलन सफल-तायै। महिलासम्मेलनस्यायमर्थो नास्ति यदत्र पुरुषैः भागो न गृहीतव्यः। हिमाचलप्रदेशस्य विदुषां विदुषीनां कृते विशेषतः, सामान्यतश्चाखिल-भारतीयविदुषां विदुषीनाञ्च कृते एकमञ्चप्रदानमेतस्य मुख्यलक्ष्यजातम्। अत्र समवेताः सर्वेऽपि विद्वांसः संस्कृतस्य लेखकाः, अध्यापकप्राध्यापकाः, छात्राः कर्मकाण्डमर्मज्ञाः, आयुर्वेदज्ञाः ज्योतिर्विदः पुराणप्रवक्तारः संस्कृतो-त्थानाय एकध्वनिना स्वीयां शक्ति जागरयितुं विश्वोपरि च प्रभावपातनाय अर्हाः भवन्ति।

अतो मया विनीतभावेन प्रार्थ्यते यदत्र ११, १२ जुलाईदिवसयोः प्रदेशस्य सर्वैरपि संस्कृतज्ञैः स्वीयमेवेदं भवदीयं कार्यमिति कृत्वा उपस्था-तव्यम्। आर्थिकसहयोगदानाय न वयं भवद्भ्यः निमन्त्रणं प्रयच्छामः अपितु अत्र समुपस्थातुमेव प्रार्थयामः येन संस्कृतप्रसारविकासविषये सर्वेषामेकमतं प्रकटितं स्यात्। अतः सर्वैः निमन्त्रणमेव न प्रतीक्षणीयम्। अनेनैव निवेदनेन वयं सर्वानपि समागन्तुं सादरं प्रार्थयामः। विशेषज्ञातव्यविषये पत्रव्यवहारो विधेयः यदि एकः एकोऽपि संस्कृतज्ञ स्वकर्तव्यपालनं करिष्यति तु सहस्रशः-एकत्रिताः भविष्यन्ति। यदि च केवलं एक एकोऽपि किं कर्तव्यविमूढो भविष्यति तर्हिउपेक्षायामेव सर्वं नंक्ष्यति। पूर्वमपि एवमेव बहुत्र जातम्। अपरे संयोजकानामेवोत्तरदायित्वमिदं सम्मेलनादिकमिति चिन्तयन्ति समायोजितसमारोहेषु चोपस्थिताः न भवन्ति। यदि ते एव न उपस्थिताः भवन्ति येषां कृते सर्वमिदमायोज्यते तर्हि सम्मेलनैः किं प्रयोजनम्?

अतः संस्कृतज्ञैः समयस्य गतिः ज्ञातव्याः सम्मिल्य च स्वोत्थानाय पन्था निश्चेतव्यः। — सम्पर्क सूत्रम्:

केशव शर्मा
सचिवः, संस्कृत शोध संस्थानम्
भारती विहार मशोबरा, शिमला

# भूचालः

कांगड़ायां समारब्धः भूकम्पस्तु भयानकः ।
कम्पते भूः विशाला सा पापाक्रान्ता पुनः पुनः ॥
धर्मशाला भागसूश्च चेतड़ू द्राड़िका पुरी ।
वेपन्ते भुवि भारेण कम्पन्ते वनवाटिकाः ॥

भग्नाः विद्यालयाः केचित् भग्नाः देवालया अपि ।
भग्नानि गृहकोष्ठानि मृत्तिका निर्मितानि च ॥

कृषिर्नष्टा विनष्टाश्च ग्रामाः कम्पप्रपीड़िताः ।
गावो वत्साः महिष्यश्च व्याकुलाः भुवि शेरते ॥
बाला वृद्धाः युवानश्च यत्र तत्र प्रधाविताः ।
त्राहि त्राहीति त्राहीति क्रन्दमाना इतस्ततः ॥

केचिच्च पतिताः गर्त्ते केचिन्नद्यां निमज्जिताः ।
हिममण्डितश्टङ्गेभ्यो वात्या चक्रेण चाहताः ॥
सुप्ताः सुप्ताः चलन्तश्च शिरोभागेन खण्डिताः ।
वहन्तः रुधिराश्रूणि वमन्तोऽसृग् मुहुर्मुहुः ।

सर्वकारेण संवीक्ष्य जनतायाश्च पीड़नम् ।
समारब्धा योजनैका पीड़ितानां कृते पुनः ॥
काष्ठानि संप्रदत्तानि गृहनिर्माणहेतवे
दरिद्रेभ्यो धनं दत्तं भोज्य भक्ष्यं च भोजनम् ॥
आवासानां च वीथीनां नवीनी करणाय च
वज्र चूर्णस्य चेष्टीनां प्रदानं वहुशः कृतम् ॥
कोटि कोटि रूप्यकाणि केन्द्रेणाप्यर्पितानि च ।
सर्वकाराय निर्विघ्नं नवजीबनहेतवे ॥
अशीति वर्षपूर्व यो भूकम्पोऽत्र समागतः ।
लक्षशस्तत्र जन्तूनां निधनं समपद्यत ।
नरपुर ग्राम वास्तव्यः चक्रधारी समाह्वयः ।
रचयामास भूचालात् कांगड़ाया विनाशनम् ।

— चक्रधारी शास्त्री
सम्पादक, कल्पद्रुम, नूरपुर (हि० प्र०)

★★★
★

## जयन्त्यवसरे शुभे

इयं क्षमाराव सुपण्डिता खलु
विभिन्न–काव्यानि विनिर्ममे पुरा ।
कथाश्च लघ्व्य सुरभारतीगिरा
लिलेख दिव्या जगतो हिताय ॥

# दिव्य ज्योतिः

…म् ३१ संस्कृतस्य सचित्रमासिकम् अङ्कः १०

मला,

लाई,

८७,

यथा विशाले गगने विभाति
निशान्धकारे खलु चन्द्रिका सा ।
तथैव साहित्यशुभाम्बरेऽस्मिन्
चकास्ति साहित्यसुचन्द्रिकेयम् ॥

# विषयानुक्रमः



## दिव्यज्योतिः,

हिमाचलप्रदेश — पंजाब- हरियाणा-जम्मूकश्मीर मध्यप्रदेश - राजस्थान — महाराष्ट्र उत्तरप्रदेशशासन-स्वीकृतं केन्द्रशासनपुरस्कृतं सचित्रं संस्कृतमासिकम् ।

### पत्रस्य उद्देश्यानि तथा नियमाः

सरल- (रस)-सुबोध-साधनैः सर्वास्मिन् संसारे संस्कृतस्य प्रसारः, साहित्यान्तर्गतानां सकलकलानां समन्वेषणं, संसारस्य हितसम्पादनम् , एवं लौकिक — अलौकिकस्वातन्त्र्यस्य प्राप्तिः ।

"दिव्यज्योतिः" प्रतिमासं पञ्चदशतारिकायाम् (आङ्गलमानेन) प्रकाशितं भवति ।

अस्य वार्षिक मूल्य २० रु० अर्धवार्षिकं १५ रु० एकस्याङ्कस्य च रु० १-७५ भवति

वर्षारम्भः आश्विन—मासतः भवति । ग्राहकः कस्मादपि मासाद् भवितुं शक्नोति

ग्राहकैः, "सम्पादक. दिव्यज्योति", भारती विहार, मशोबरा, शिमला–१७१००७ हि. प्र.' इति संकेते धनादेशेन वा शु. प्रेषणीयम् ।

## परिचयः


संस्थापकाः तथा आद्यसम्पादकाः आचार्यश्रीदिवाकरदत्त शर्माणः, दूरभाषः 3855 8-200

प्रधानसम्पादकः — प्रा० केशव शर्मा एम. ए., एम. फिल, साहित्यरत्नम्.

दिव्यज्योतिः कार्यालयः भारती विहारः, मशोबरा, शिमला-७ (हि.प्र.)

मुद्रकः प्रकाशकः —

भारतीमुद्रणालय भारती विहार, मशोबरा-१७१००७ शिमला (हि.प्र)

स्वामी :—श्रीमती आचार्य रत्नकुमारी शर्मा

महान् लाभोऽभविष्यत् । लाभांशेन च वाणिज्यान्तरमपि अकारष्यम् । भवान् निजयोजनां करोतु । निजवृत्त्या च जीवनं निर्वाहयतु ।

कुलमणिः अगर्जत् ।

धूर्त... ! निशाचर.... ! इयान् ते साहसः ? किमहं ते वाणिज्यस्थली... ? किमहं ते उत्पादनशीला शिल्पसंस्था.... ? अथवा ते वञ्चकरः... ? यत् त्वं वदेः तदहं करिष्ये... ? नय ते धनम्... । त्वत्तो जलमपि ग्रहीतुं नेच्छामि । याहि ..., शीघ्रं गृहमिदं परित्यज । अद्य प्रभृति न ते स्थानमिह । वाणिज्य-भूमौ निवस । तत्रैव धनसंचयं कुरु ।

पितापुत्रयोः कलहे रजनी सहानुभवविधुरा । म्लानमनोमूले तस्याः प्रसंगतस्वप्नानां समष्टिः । उन्नतचिबुके स्थिरतरङ्गः । सम्मुखे गङ्गाजलस्य पुनः वियोगस्य पूर्वरङ्गः । मङ्गलमहोत्सवस्य आयोजने पिनाकिनो धनुभङ्गः साङ्गोपाङ्गः ।

पापपुण्य विचारे मुमूः मर्माहतः कलहे दोषमन्विष्यन् सः प्रश्नपरः-कुत्र दोष ? गङ्गाजले... ? धनव्यये .... वा ? धनसंचये ... वा ? अथवा परोपजीवने .... ?

तदा प्रभृति विलासः प्रवासी ।

जीवनधारा निजानुमता । कर्मश्रीः स्वैरिणी । वचने वैपणीकता । व्यवहारे आपणिकीयो मधुपर्कः । संपर्को न ऐकिकः । धनाय स तु सतर्कः । व्यापारे सर्वोऽपि ग्राहकः । नात्र गृहम् । न वा परिवारः न बन्धुः न वा कश्चित् आत्मीयः । सर्वोऽत्र हि पारिवारिकः । केवलो व्यक्तिकेन्द्रिकः ।

विलासस्य गमनतः परं रजनी अवसन्ना । पुनर्विवाहस्य आशा तस्याः मलिना । भौतिकी इच्छा अवदमिता । प्रवृत्त्यग्रे अद्य दण्डायमाना गृहदेवता । आरतीनिखातले छायाप्रतिमो वृद्धपिता द्वारदेशे मङ्गलशंख धमति मुमूः । रजनीकरे मङ्गलारती । तस्याः अङ्गुल्यग्रे आरात्रिकतैलम् । निमीलने ज्वलत्-शिखा । उन्मीलने शुष्कवर्त्तिका ।

अंधकारे मुमूः, मार्मिकः ।

स्नेहसाहित्ये तस्य रजनी एका मुग्धा माधवी । वैधव्येऽपि व्यवहारेण सा विदग्धा वधूः । पितुरभिधाने समस्या तस्याः वैधानिकी । परं मुमूः निर्बोधबाधे विधिरयम् असाधुः ।

स एकदा कुलमणिमपृच्छत् ।

पितः ! किमर्थं भगिन्याः पुनर्विवाहं नायोजयसि ?

कुलमणि: विषण्णभावेन अवदत् ।

क्व कुत्र .... ?

अहमन्वेषयामि ।

तर्हि अन्वेषय ।

यदि मिलेत् ... ?

तर्हि अचिरं संपादयिष्यामः ।

मुर्मुः विस्मितः । स ज्ञातुं न प्रभवति—किमर्थं वृद्धोऽयं निजपुत्रं वराऽन्वेषणतो वारयति । कथं च भृत्यं कार्येऽस्मिन् अनुमन्यते । तथापि मुर्मुः तदा प्रभृति स्वजनोतिमित्तं वरमन्वेषयति । अन्वेषणे तस्य अनेके धनिनः । बहवः सुन्दरपुरुषाः । नैके राजपुत्राः । किन्तु न कोऽपि तथा उपयुक्तो दृश्यते ।

एकदा कुलमणिः तमबोधयत् ।

अरे...मुर्मो ! त्वमपि निर्बोधः.... ? विधवां कोऽपि परिणयति वा ? किमर्थं वृथा भ्रमसि ? अद्यत्वे तु अविवाहिताः कन्या विधवा इव जीवनं नयन्ति । यदा अनूढानामेतादृशी दशा तर्हि विधवां को वा पृच्छेत् ? वैधव्यम् अभिशापः । प्राग्जन्मनो दुष्कृतेः परिणामः ।

तर्हि, अभिशापस्य निवृत्तिर्नास्ति... ?

सम्भवेत् ... किन्तु ... ?

कोऽयमुपायः.... ?

उपाय उपासना । भगवति भक्तिः । प्रवृत्तेः निरोधः पुनश्च संस्कारः ।

जनस्य..., देशस्य..., जातेः..., समाजस्य..., तव...मम च... ।

भवान् तु सर्वं जानाति । कथं न करोति ?

कुलमणिः गम्भीरोऽभूत् । मनसि संलग्नानि संस्कारस्य कियन्ति विधानानि । किन्तु सहसा स विहस्य अवदत् ।

अरे... ! प्रथमतो गृहस्य संस्कार आवश्यकः । तदनन्तरं देहस्य... ।

मुर्मोः अल्पप्राणमनस्तत्वे संस्कारपद्धतिः यथा अरण्यस्य निष्कर्मविशालता । स किंचित् विशङ्कमानः अपृच्छत् ।

गृहसंस्कारः केन प्रकारेण भवेत् ?

सत्येन ... ।

किमिदं सत्यम्... ?

निर्मलो भावः ।

वचनेऽस्मिन् मुर्मुः द्विविधाग्रस्तः । अवबोधे तस्य किमपि न आतिफलत् । निजमूर्खतां धिक्कृत्य स पराङ्मनाः । कुलमणिः मनाग् विहस्य पृष्ठे तस्य

करमचालयत्; निजवक्षसि च तस्य मस्तकं न्यवेशयत्। केशोपरि करं सञ्चालयन् अवदत्।

वृथा मा चिन्तय। त्वं मे पुत्रः। बाल्यात् मदङ्के परिवर्धितः। अतः आवयोः पार्थक्यमिह गौणम्। इदानीं ते शिक्षणस्य वयः; गृहं च शिक्षणस्य मुख्यं स्थानम्। अत्र द्विधावसरो नास्ति। किमर्थं त्वं हीनमनाः...?

अपूर्ववात्सल्ये मुर्मुः नितरां प्रसन्नः। अनुभवे प्राथमिकः प्रथमा। नयने तस्य आनन्दस्य अश्रु न कोऽपि कस्मै किमपि ददाति केवलो व्यवहारः। परस्परं सेवामनोवृत्तिः, मनाक् त्यागः, सामान्य च आनुगत्यम्, साहाय्यनिमित्तं किञ्चित् कृतज्ञता, अनुज्ञार्थं च स्तोकं प्रस्तुतिः, अननुमतस्यापि किञ्चित् स्वीकृतिः; सर्वमेतत् स्नेहबन्धनम्।

मुर्मुः चिन्तयति, कुलमणिश्च बोधयन् प्रवर्तते। सम्प्रेऽस्मिन् पूजा समाप्य उपगता रजनी, सा सामान्यमहसत्।

अरे...मुर्मो... ! किम् ..., अनुदिनं बालः संजायसे,... ?

रजनीवचनं निशम्य मुर्मुः कुलमणिवक्षसो मुखमपानयत्। अपूर्णयुवकस्य सुलभवचसा अवदत्।

'किमर्थं तथैव पिता... ? न मम... ?

रजनी स्फुटमहसत्। प्रसार्य समस्तं आश्लिष्यत्।

अरे... याहि...। काष्ठानि आहर। अन्यथा पाकशोषः।

रजनी अन्तः प्रविष्टा। मुर्मुः काष्ठानि आहर्तुं गृहीत्वा कुठारमचलत्। आहरणसमये बहिः कश्चित् आश्राविषयात्।

मुर्मुः अपश्यत्—बुधे! अधुनाप्येवं इतस्ततः भ्रमसि? प्रतिवेशिनी बूतः 'मेघुः'। मुर्मुः तमुपागमत्। मेघुः प्रावदत्।

बुधे: अपरपार्श्वमागच्छ।

नहि..., किं वदसि... ?

अद्य अहं पश्यामि।

कुत्र...... ?

गृहम्... ?

किमर्थम्... ?

अद्य अनुपमया सह कलहोऽभवत्।

कथम् ... ?

सा तु सदा मां ताडयति, भर्त्सयति, यस्मिन् कस्मिन्नपि कार्ये निन्दति, कुटुम्बसदि अपि।

अये ... ! एतदर्थम्... ?

नहि... । अद्य अहं क्रुद्धः । सा मां ताडितवती । भृशं भर्त्सितवती ।

अन्ततो मां बहिष्कृतवती ।

तर्हि, ग्रामं गत्वा किं करिष्यसि ... ?

अन्यत्र कुत्राऽपि कर्मान्वेषणं करिष्यामि ।

मेघः प्रस्थितः ।

पुनश्च भृत्यवृत्तिः... ? पुनरपि ताडनम् ... ?

एवं विचिन्त्य मुमुः चिन्ताशीलः स्कन्धे काष्ठानि निधाय पाकशालासमीपमागतवान् । काष्ठानि संस्थाप्य किंचित् त्वरया अवदत् ।

भगिनि ... ! भगिनि ... !

देहलीमाश्रित्य साक्षात् दण्डायमाना रजनी ।

किमभवत् ... ?

अद्य मेघः गृहं प्रत्यागतः ।

किमभवत् ... ?

तस्य प्रभुपत्नी तं ताडितवती ।

तर्हि, नूनं तेन किमपि अननुमतं कृतं स्यात् ।

एतदर्थं बहिष्कृतवती ?

हुं ... । किं वा अकरिष्यत् ?

तर्हि, मामपि त्वमेकदा बहिष्करिष्यसि ?

रजनी अहसत् ।

मुमुः सव्यलीकतया अवदत् ।

तस्य गृहं वर्तते । स तत्र गमिष्यति । मम तु तदपि नास्ति, कुत्राऽहं गच्छेयम् ...... ?

अरे ... ! इदं ते गृहम् । एतद्, विहाय अन्यत्र गमनस्य का आवश्यकता ? स तु अपरगृहे आसीत् । अतो निजगृहं पलायितः । तव तु एतदेव सर्वम् । कथमन्यथा चिन्तयसि ... ?

रजनी निष्क्रान्ता ।

मुमुः पितरमन्विष्य बहिर्गतः ।

रजनीमनसि पूजापवित्रता । संपूर्णगृहस्य ऐकिकविश्वस्तायां तस्य भावना राजसिकी, राजसिकी । तत्र पुनः पुनः शाश्वती भवति राधामाधवयोः विरहाकृतिः । उभयोर्मध्ये रहस्यमयः कश्चित् उपलपन्थाः । यदि अस्मिन् तथापि कथास्वयं प्रियस्य पाथेयम् । कति संकेताः । कियन्ति च चिह्नानि । तदनन्तरं चरणाङ्कः ... एक ... द्वौ ... बहवः । अन्तराले प्राथमिकी पुनश्च

आकृतिः। तदर्थं मोहः। मोहे च ममता। तदनु तत्र अस्थिरो भवति संचित-रुधिरस्य किंपरिणामिमयो बिन्दुः। तद् विमोचनसंचयप्रकारः। तदर्थमेका मनोवृत्तिः काचित् दैहिकी उत्तेजना। सृष्टये च... तुष्टये च प्रगल्भता। आत्मप्रसाराय विकल्पशून्यता, ततो विलीनता। ततश्च निमग्नभावे स्वयंकामस्य विकलितिः फलमुखी।

रजनी चुल्लिकायामग्निशिखामेव पश्यति। धूमसम्मेलने नयने तस्या लोलकलीला। धमनसमनन्तरं चिबुकतले श्वासराशेः खेदसकेतः। ताम्बुलोपमलपने पुनश्च उष्णाम्बु यथा तुहिनोपलम्। एवं नित्यनैमित्तिकधूमधमने रजनोजोवनस्य कार्यशैली जलीयसी।

कुलमणिस्तु आवेगशिथिलः।

पार्श्ववासिनः अग्रेसरा अभवन्। तेषाम् अपत्यानां समृद्धिः अग्रमाण्या। ते पदवीस्थाः। ते च अधिकारिणः। भिन्नेऽपि मूल्यबोधे ते सुखिनः। तेषां भावप्रकाशे संसारो गरिष्ठः। आहरणे च प्रवृत्तिः अर्थनैतिकी। विहरणे मर्यादा भौतिकी। विनिमये स्नेहो धनग्रहः। ते प्रभवः—एवं विकलकलासु कुलमणिः दुष्कुलीनः। मनसि तस्य आघातः—पुत्रो विलासः चिरप्रवासी कन्या च विवाय निजावलम्बिनी।

का वा दुष्कृतिः तस्य प्रगतिं प्रतिरुणद्धि? केयं वा परम्परा आग्रहे सेतुकल्पना अतीते तस्य नश्वरस्य भग्नांशः। भविष्यद्द्वारे महाभूतानां मिश्राणुः। द्विधागधवर्तमाने अनेकान्ता प्रकृतिः। इच्छाग्रे अनेकबन्धः। तथापि लक्ष्ये मुक्तिः। मुक्ति... पातकिनाम्... पुण्यवनामपि।

किन्तु शिखातले तमसा।

विलासो विलासो। वणिग्वृत्तो आभिचारिकता तस्य सरणिः। अवसत्वे स बन्धुनिशान्तस्य गृहे अतिथिः। शम्पादेवो आतिथ्यं समर्प्य उपहारं गृह्णाति। अनेनैव उपहारेण उभयोः बन्धुत्वं चिरतरायते। इयं चरीतिः नैकवासरिकी। परं बन्धुत्वस्य प्रारम्भस्मारकी। अभ्यासगतसौजन्ये रीतिरियं शम्पानिकटे केवलं नवीभवति। विलासनिकटे आतिथ्यं च तथा।

शम्पा अपृच्छत्।

किमर्थमद्य विलम्ब...?

विलासः औदासीन्येन अवदत्।

किमस्ति अस्माकम्...? सदैव तु कार्यप्रकार एकः। तस्य च आवृत्तिः। अतः कर्म विरक्तिकरं भवति। अपनोदनाय इतस्ततो भ्रमणे विलम्बो भवत्येव।

अथवा अन्यदीयम् आतिथ्यं स्वीकृम ?

तत् सर्वदा। परं निशान्तो मे आत्मीयः। ह..., बन्धो! भवत्कार्यालये कार्यं मे स्थगितं, मन्ये...।

निशान्तः सामान्यमौजन्ये न कुटिलं विहस्य अवदत।

तत् इदानीमपि न मे हस्तगतम्। अपरस्य पार्श्वे वर्त्तते। यदा आगमिष्यति तदा कार्यसमापने कियन्निमेष वा लगेत्। किन्तु पश्य, बिना भोज्यं कार्यं न भवेत्।

विलासः अहसत्।

अरे...! विषयेऽस्मिन् मयि अविश्वासः... ?

जाने..., त्वं वदान्यः तथापि वक्तव्यं भवति। किमर्थमिति त्वं जानासि। साधारणकार्येऽपि सरलभावेन काचित् पुस्तिका अधीक्षकसमीपं न गच्छति। यथा मदर्थं व्यवस्था तथा तत्र अनुकूलमतम्। अन्यथा को वा किं कुर्यात् ? अधीक्षकस्तु अस्माकं मतानि गृहीत्वा आदेशं प्रदास्यति। नोचेत् पुस्तिका तत्रैव तिष्ठेत्।

यदि अधीक्षकस्ते एतादृशं कार्यं जानीयात् ?

ज्ञात्वाऽपि स किं करिष्यति? स तु अधिकाधिकं वर्षद्वयं वा त्रयं वा आसने उपविशेत्। तदनु स्थानान्तरम् रीतिषु यदि सः स्नायात् तर्हि नूनं निमंक्ष्यति। क्रमशः

# वर्तमानेन कालेन वर्तयन्ति विचक्षणाः

शुकदेव मुनि

दिष्ट्या वर्धते भवान्
क्षणं तिष्ठ तात ! सहैवचलामि,
त्वां विना नो जीवनं कल्पयामि
समालपन्नहमपि जिगमिषामि,
त्वया यात्रामिमां सुखदां सुगमां भावयामि ।।

त्वं तु त्वरितैस्त्वरितैरेव पदैर्यासि,
न मे वाचमपि कर्णे करोषि ।
न मे क्षमता त्वया सह चलितुम्,
त्वामनुधावतः कठिनमपि श्वसितुम् ।।

अयि शोभनमुख,
कोऽसि ? कुतोऽसि ? कुत्र च त्वं प्रयासि ?
अपरिचितो यद्यपि नैवं प्रष्टव्योऽसि ?
मां श्रोतुमिच्छा मुखरी करोति,
इति कृपया, प्रतिवचनं दातुमर्हसि ।।

अज्ञ ! वैधेय !
न पन्थाः कदापि, धीमता, मुधा क्व यासि ?
इति प्रश्नयितव्यः ।
अथास्ति ते शक्तिभक्तिश्च सह चलितुम्,
अहमनुसर्तव्यः ।
एहि, चलाव, धावाव, गन्तव्यं च गच्छाव,
लब्धव्यं चाप्यधिगच्छाव ।।

अपि मया सह पदक्रमां कर्तुं प्रभवसि ?
ममाज्ञां पालयसि ?
अहं युगयुगान्तरात्—चलामि ।
चलन्न विरमामि
किं नो वेत्सि ? किं न स्मरसि पाणिनेरमृतं वचः ?
न मे विरामो न च मेऽवसानम् ।
"विरामोऽवसानम् ।।"

यो मां रुणद्धि, यो मां विरुणद्धि,
यो मां निषेधति यश्च मां नावगच्छति ।
ध्रुवोऽसौ महामूर्खः ध्रुवं स च विनश्यति ।
नाहं कस्यचित् वशे, सर्वं मम वशे,
आम्, मम वशे ।
इच्छानि यथा तथाऽखिलानेतान् चालयितुं शक्नोमि,
आम्, मोडयितुं पारयामि ॥
परं ओम्, विद्वांसो मनीषिणो जनाः,
प्रातः द्यूत — प्रसङ्गेन,
मध्याह्ने स्त्री—प्रसंगतः,
रात्रौ चौर - प्रसङ्गेन
मां गमयन्ति ।

हा हन्त ! हन्त ! हन्त ! सन्ति तेऽपि,
ये "रात्रिर्गमिष्यति भविष्यति सुप्रभातम्"
इति विभावयन्ति, आत्मानं वञ्चयन्ति,
निद्रया, कलहेन, व्यसनेन च मां क्षपयन्ति ।
ते के ? इति न जाने, इति न ।।
ये मम सदुपयोगं कुर्वन्ति
मया सह चलन्ति, मम संकेतमवगच्छन्ति,
मम गतिमनुगच्छन्ति, ते किं नाधिगच्छन्ति ?
तैः किं दुरधिगमम् ?
को वा तेषां कृते विदेशः ?
को वाऽपरो मानवः ?
वयस्य,
एषोऽहं कलियुगे, कलिप्रथमचरणे
अष्टाविंशतमे युगेऽस्मिन् ईशातः
चलन् १९८७ तमे शकाब्दतश्च १९०९ तमे
वर्षे बसामि
विक्रमादित्यतश्चाद्य २०४४ तमे वर्षे नवानि वस्तूनि, नवानादेशान् नूतनान् भव्यान् वेशान् नूतनान् सम्बन्धान् च सहादाय पटीयसि नवीयसि चाब्दे प्रविशामि ।
दिष्ट्या वर्धतां भवान् । इति प्रार्थयामि ॥
नवेऽस्मिन् महीपाले नवं सर्वं महीतले ।

नवाभावा नवालापा, नवागावो नवं पयः ।

नवा कारा नवा धारा, नवं बीजं नवोऽङ्कुरः ।।

नवतुरगी नवाश्चाथ तुरङ्गमाः ।

इति भावयामि ।

किमन्यत्,

पश्यन्तु लोका मम कौतुकानि ।

ये मां जानते, ये च मां परिचिन्वते मया च सममयन्ते,

ते महात्मानो विलक्षणाविचक्षणाश्चतुराः

प्रगल्भा एव मां परिचेतुं पारयन्ति ।

नेतरे प्राकृताः जनाः ।।

अथावगतं कोऽहमस्मि ?

आ हाः हाः हा ! अहमस्मि कालः ।

यं मां नाद्यापि कोऽपि प्रतिरोद्धुं नाशक्नोत्,

न शक्नोति, न च शक्ष्यति । सोऽहं कालः ।

"कालः कलयतामहम् ।"

मयि समायाते सर्वं स्वतः समेति

सर्वं सिध्यति ।

मया सह वर्तस्व. जिजीविषसि चेत्सखे

मा शुचः,

'सहस्व कतिचिद् मासान् मीलयित्वा विलोचने ।'

स्मर्यताम्

"हिंस्रः स्वपापेन विहिंसितः खलः ।

साधुः समत्वेन भयाद् विमुच्यते ।।"

अवधीयताम्, चित्ते च चिरमिदं स्थिरं क्रियताम् वर्तमानेन कालेन वर्तयन्ति विचक्षणाः

प्राचार्य,
रा. स. कालेज
नाभा (पञ्जाब)

—

# "मातृ-पितृदेवो भव"

आचार्य सुरेश

संस्कृतसाहित्ये रामायण आदर्शकाव्यं वर्तते यद्यपि रामायणस्य सम्पूर्ण-पात्राणि विश्वस्य कृतेऽनुकरणीयानि सन्ति: तथापि अस्य नायकः भगवान् श्रीरामः अस्माकम् समक्षे आदर्शप्रजापालक—आदर्शलोकनायक—आज्ञापालक— रूपेणायाति अतः श्री रामस्य विषये केचन प्रेरकप्रसंङ्गा संक्षिप्तरूपेण अत्र प्रस्तूयन्ते

यदा दशरथः स्वज्येष्ठपुत्रश्रीरामस्य राज्याभिषेकघोषणां कृतवान् तस्मिन्नेव काले "सैषा मन्थराभिधानपिशाचिका वेशपरवशनिजाशया पूर्वं दण्डके वैजयन्तपुरवास्तव्यः शम्बरासुरसंगरसंगतवेदनापनोदनार्थमात्मने वितीर्णवराय दशरथाय वरद्वयं न्यवेदयत् —

"तयोरेकस्य संरम्भो भरतस्याभिषेचनम्
अन्यस्य वन्यवृत्त्यैव वने रामस्य वर्तनम् । (चम्पू० रा०)

इत्याकर्ण्य नृपस्य हृदयात् दावानलाद् मृगीव चेतना निर्जगाम । तथापि कथमपि लब्ध संज्ञः कैकेयीमभाषत्

"वत्सं कठोरहृदये ? नयनाभिरामम्"
राम विना न खलु तिष्ठति जीवितं मे

धातुर्बलादुपयमस्त्वयि जातपूर्वः
कैकेयिमामुपयमं नयतीति मन्ये ।" (च० रा०)

एवं भर्त्सितापि कैकेयि निजप्रतिज्ञां न तत्याज । तदनुमुहूर्तमात्रमपि राममुखम-वलोकनसुखमननुभूय दशरथः कुमारमानयेति सुमन्त्रमादिदेश वृत्तान्तं विज्ञाय रामः बद्धाञ्जलिरेनां प्रतिव्यजिज्ञपत्—

"भीतो नु भरतः किमम्ब भरत किं वा वनात्पावनात्
जातोऽहं सगरान्वयायककुदस्तातः कुतः शोचति ।
दिव्यायाः सरितो निवापकरणाल्लब्धो प्रतिज्ञामिमां
यावाभ्यामभिपूरयिष्यति न चेत्पुत्रो कथं स्यादयम् ॥

अन्यदपि

वनभुवित नुमात्रत्राणमाज्ञापितं मे सकलभुवनभारस्थापितो वत्समूर्ध्नि तदिहसुकरतायामावयोस्तर्किताया मयि पतति गरीयानम्ब ते पक्षपातः—।

## भ्रातृस्नेह–

रामस्य विरहेण नृपः प्राणानमुञ्चत्। भरतश्च समस्तवृतान्तं विज्ञाय दुःखाधिक्येन कैकेयिं प्रति एवमुवाच

अविरत कृषितान्तं वत्समालोक्य धेनो-
रपि वर्षशतानां मातुरस्त्रं बभूव
तदिह तनयशोकान्तरेदेकपुत्रा
कथय कथमिदानीं कौशलेन्द्रस्य पुत्री ॥

अन्यदपि

"अपि वद मम मात? कालयोगान्नरेन्द्रे वरयुगनाम्यौं प्राणवायुमृतदीयम्।
अपकारमुदयावर्तनं युक्तरूपं पितृवन वसुमत्यां क्वापि वल्मीकवत्याम् ॥

एवमुक्त्वा रामस्य प्रत्यागमनार्थ अरण्ये जगाम तत्र च भ्रातरं न्यवेदन् यथा कश्चिद व्रती स्वेष्टदेवाराधानं कुर्वन् तदनुग्रहपर्यन्तं भूमौ शेते तथैव भरतशिरोरपि श्रीरामचरणयो पुरतः पादुका प्रदानरूपप्रसादपर्यन्तं भूमौविपर्णिमतिष्ठत्, अत पुनः श्री रामस्य वचनमिदं शिक्षाप्रदमस्ति यथा-

"त्वया मया च कर्तव्य सत्यवाचः पितुर्विधिः।
इति प्रत्यादिशद्रामो भारतीमपि भारतीम्"

अतः रामायणं आदर्श-अनुकरणीयं काव्यम् तथा श्री रामस्य चरित्रात् निःस्वार्थभावनया प्रजापालनस्य भ्रातृस्नेह—आज्ञापालन—धैर्यव्रतादीनाञ्च शिक्षा पदे पदे मिलति।

बरयाड़ी, सोलन
(हि० प्र०)

## निवेदनम्

कृपया वा० शुल्कं शीघ्रतया प्रेषयित्वा अस्माकं साहाय्यं विधेयम्।

सम्पादकः

# संस्कृत गीतम्

(फिल्मी तर्ज – तुझे क्या सुनाऊं ऐ दिलरुबा)

जय त्वत्समा हे देवभाषे
त्वत्समा अन्या नहि ।। जय त्वत्समा
आत्मज्ञानं वर्त्तते
जीवज्ञानमपि त्वयि
ब्रह्मज्ञानं वर्तते
वर्तते आंग्लापि भाषा
त्वत्समा हे देवभाषे
त्वत्समा अन्या नहि ।।

ये वदन्ति त्वां मृता
ते मृताः सन्ति स्वयम्
त्वां वदामो ऽहर्निशं
त्वत्समा अन्या नहि
भाषासु मुख्या च मधुरा
दिव्या गीर्वाण भारती
तस्मादपि मधुरं च काव्यम्
तस्मादपि च सुभाषितम् ।
जय त्वत्समा हे देवभाषे ?
त्वत्समा अन्या नहि ।।

शशि कान्त शर्मा
आचार्य, ओ. टी, रिसर्च स्कालर
रा. मा. विद्यालय हारसी
जि० कांगड़ा (हि. प्र.)

★

# "गीतिका द्वयम्"

प्रेमलाल गौतम आचार्य

## (१)

चिर-वंदिता या सुरगणैः, विश्वम्भरा,
भो संस्कृतज्ञ ! संस्कृतमनुसर
भो संस्कृतज्ञ ! संस्कृतम् मा विस्मर ।

निगमागमैः नु गीयते ते संस्तुतिः
न परिचिनोति त्वामम्ब ते सन्ततिः
वर्ततेऽद्य भारतस्य हा का स्थितिः

निष्क्रिया भवन्ति अत्र वे किंकराः भो...
चिर पोषिताऽऽरक्षिता या पूर्वजैः,
पश्यन्तु तां भारतीं स्वामात्मजैः
मुग्धा भवन्ति श्रुत्वा ते धवल-गुणान्
मूकाः तिष्ठन्ति पश्चिम-जनाः
भो ...

समागता अत्र पूर्वं म्लेच्छआंग्लकाः
विनाशिता च संस्कृतिः अहो सदा,
न संस्कृतिः मृता तथापि अत्र सा
शृण्वन्तु संस्कृति संस्कृताश्रया भो ..

प्रयत्नान् सततं कुर्वन्तु संस्कृत प्रति,
तीव्रतरा भूयात् भारती गतिः,
यावत् दिवाकरो दिवि विराजते
गीर्वाण गिरा तावदिह चकास्ति भो ..

## (२)

अयि मम प्रेयसि, प्रेयसि प्रेयसि,
अत्रायाहि त्वं कुत्र गन्तुमिच्छसि ।
पश्य चेत् त्वं मयि न स्निह्यसि,
त्वया साकं अहमप्यत्र प्राणान् मोक्ष्यामि ।।
अयि मम ... ।।

मानसमन्दिरे त्व हि मदीये—?
वारं वारमायासि हे प्रिये ।
जायते महती पीड़ा हृदये
किमहं करवाणि त्वं वद प्रिये :
चेत मम त्वदाकारो हरसि
त्वया साकं ... ... :।?।।

त्वयि महदिच्छा मां सन्तापयति—?
अहर्निशम् प्रिये अशान्तिमाप्नोमि ।
आगच्छ, आगच्छ प्रिये, क्षणं विरम्
प्रतीक्षायामेवऽभवदति चिरम् ।।
इतोऽपि मुग्धं मयि कुप्यसि,
त्वया साकं ... ... ।।?।:

— राजकीय संस्कृत महाविद्यालय
नाहन, जिला-सिरमौर,
पत्रालय सूच्यङ्क १७३००१,
(हिमाचल प्रदेश)

# व्यास गीतम्

रचयिता–गिरिराज किशोर व्यास 'शास्त्री'

हा ? किमिदम्भवति
स्वदेश - वासिन एव ।
स्वदेश - मूलोच्छेदाय
वद्धपरिकरा सन्ति ॥१॥

देशस्य रक्षका एव
शत्रु - प्रेरिताः भूत्वा ।
देशस्य विघटनाय
हा ! हा !! सन्नद्धा स्सन्ति ।२।

लोभाविष्ट - चेतसा ते
स्वकीयान् भ्रातॄन्नेव ।
दुर्दान्त - नृशंसाः भूत्वा
हा ! सु-पीडयन्ति ।३।

देशस्य स्वातन्त्र्यं
देशस्याऽखण्डत्वम् ।
देशस्यैकी भावत्वं
संकट - पराणि सन्ति ।४।

साम्प्रदायिक - भावनानां
वर्द्धते विष-लता नित्यम् ।
येन हा ? सौहार्दस्य
भावनां हा ? विलुप्ता भवति ।५।

क्षेत्रीय - भावनायाः
लहर्यो हि लहरिताः ।
येन दृढ़तरा भविता
पृथकतावादि - भावना ।६।

जातीय - भावनायाः
सु-स्पष्टं प्रभावोऽयम् ।
यज्जनेषु पल्लविता
द्वेष - विद्वेषस्य भावना ।७।

भ्रातृ भ्रातृत्व - वादस्य
शासन प्रशासन - कु-चक्रस्य ।
भ्रष्टाचार - कदाचारस्य
एकच्छत्र - राज्यमस्ति ।८।

हा ? देशस्य कोणे कोणे
क्षुद्र-स्वार्थ - साधनाय ।
तत्रत्याः जना स्सर्वे
विप्लव-ग्रस्ता स्सन्ति ।९।

देशस्य सम्मानमपि
स्वार्थाग्नौ क्षिप्त्वा
निरीह - जन - संहारे
हा ? ते सु-रतास्सन्ति ।१०।

लोकतान्त्रिक-मूल्यानां
ह्रासो भवति दिनाऽनुदिनम् ।
संविधानं प्रति नास्ति
निष्ठा हा ? कृतघ्नानाम् ।११।

हा ? राष्ट्र गीतं प्रति
नास्ति तेषामादर - भावः ।
राष्ट्रीय - भावनाऽपि
तेषु विलुप्ताऽस्ति ।१२।

स्वार्थ - भाव - भाविताः
भविता स्तेऽन्धा इव ।
अतस्स्वकीयान्नेव
हा ? न ते पश्यन्ति ।१३।

देशेऽराजकतायाः
ताण्डव - नृत्यम्भवति
तच्च जनाः मूका इव
हा ! हा !! पश्यन्ति ।१४।

दृष्ट्वा प्रस्तुत-स्थितिं
व्याकुलोऽतीव व्यासोऽयम् ।
कथं हा ? देशस्यास्य
यास्यति नौ पारम् ।।१५।

व्याख्याता शासकीय संस्कृत उच्च विद्यालयः, विदिशा,
(मध्य–प्रदेशम्)

★

# मदीयं मनः

डा. ओम् प्रकाश शर्मा 'सुबन्धुः'

★

मदीयं मनः
वन्ध्याभूमिरिव वर्तते
यत्र क्षिप्तानि बीजानि
न पुनः, उद्भवन्ति । (१)

मदीयं मनः
अम्बरवद् वर्तते
यत्र मेघाः परिभ्रमन्ति
परं न कोऽपि खण्डः
धरण्याः पिपासिताम्
शान्तिं नयति । (२)

मदीयं मनः
पोतपक्षी इव वर्तते
यश्च सर्वतो दूरं यावत्
परिभ्रमन्
पुनस्तस्मिन्नेव
पोतेऽऽगत्य तिष्ठति । (३)

मदीयं मनः
मरुभूमिरिव वर्तते
तप्तायां यस्यां न कोऽपि
पादौ स्थापयितुं शक्तोऽस्ति । (४)

मदीयं मनः
समाधिरिव वर्तते
यत्र कियन्त एव
घृतदीपान् ज्वालयतु
तेषां सर्वेषां वर्तिकाः
भस्मीभूताः सन्त्यः
समाधिरूपा भवन्ति । (५)

मदीयं मनः
वर्षाकालिकी
नदी इव वर्तते ।
यत्र वर्षाऋतौ एव
जलम् आयाति
यत्र अन्य - ऋतूनां
न कोऽपि प्रभावः पतति । (६)

मदीयं मनः
आकाशे उड्डीयमान-
गृध्रपक्षी इव वर्तते,
यः स्वकीयानि
वृहत्पत्राणि प्रसारयन्
उदरपूर्त्यर्थं न कुत्रापि
आहारं प्राप्नोति । (७)

मदीयं मनः
मरुस्थलस्य कूपो वर्तते
यस्य अन्वेषणे भ्रष्टः पथिकः
प्राणान् त्यजति
परं न कुत्रापि जलं लभते । (८)

मदीयं मन।
बदरीफलमिव वर्तते
यच्च बाह्यमनोरमंसदपि
आन्तरिककाठन्यम्
न कदाऽपि जहाति । (६)

मदीयं मनः
अम्बुधिरिव वर्तते ।
यत्र वीचयस्तु उच्छलन्ति
परं न काऽपि वीचिः
किमपि मौक्तिकम्
वटे प्रक्षिपति । (१०)

प्रवक्ता— सर्वकारीय संस्कृत कालेजः
नाभा

★

# हिमाचलः

श्री लोकनाथ मिश्रः

★

श्रीखण्डकैलाशत्रिलोकनाथाः
ज्वालामुखीहाटक - नैनदेव्यः ।
वात्सल्यभावाः वितरन्तु बुद्धिं,
दृश्यं वदिष्यामि हिमाचलस्य ॥१॥

हिमप्रान्तस्य सौन्दर्यं व्याख्यातुं नास्ति मे मतिः ।
यतोऽयं देवता गेहं वैषम्येन स्थलं पुनः ॥२॥

## श्रद्धेय विषयः

तपोभूमिः क्वापि क्वचिदपि च देवोद्भवधरा,
ध्वनिः गन्धर्वाणां असुर-वध-भूमिः क्वचिदपि ।
सुराणां यात्रा वै क्वचिदपि च मेलोत्सव इह,
छविः प्रान्तीयेयं जनयति सुखं हृद्यनुपमम् ॥३॥

क्वचित्पूतः शृंगः क्वचिदपि सरः पावनतरम्,
सरोऽस्त्युष्णं क्वापि प्रकटयति ज्वाला क्वचिदपि ।
क्वचिद् भूताबाधा क्वचिदपि च देवैः वरकृपा,
छविः प्रान्तीयेयं जनयति सुखं हृद्यनुपमम् ॥४॥

क्वचिन्नागो मान्यः क्वचिदपि च पूज्यः पशुपतिः ।
क्वचिद्वै योगिन्यः जनमनसि दुर्गा क्वचिदपि ।
क्वचिद्विष्णोः स्थानं क्वचिदपि च वेतालभवनम् ।
छविः प्रान्तीयेयं जनयति सुखं हृद्यनुपमम् ॥५॥

गुरोर्द्वारं क्वापि पवनसुतभक्ताः क्वचिदपि ।
क्वचिद्बुद्धोदेवः क्वचिदपि महावीर सदनम् ॥
तथैसामासीह्ाः क्वचिदपि खुदाह्वाननिरताः ।
छविः प्रान्तीयेयं जनयति सुखं हृद्यनुपमम् ॥६॥

## प्राकृतिक सौन्दर्यम्

क्वचिज्झर्झरनादः क्वाचिदपि हिमेनाकुल - महिः ।
क्वचिन्नद्याः वेगः क्वचिदपि च शान्तोदकसरः ॥
क्वचिन्नातस्पूर्णा क्वचिदपि तृषाव्याकुलजनाः ।
छविः प्रान्तीयेयं जनयति सुख हृद्यनुपमम् ।७।

क्वचिदुष्ण स्रोतः प्रवहति क्वचिच्छीतलजलम् ।
दिने पूर्णारश्मिः क्वचिदपि च छायाहीनि तथा ॥
क्वचिच्छीताधिक्यं क्वचिदपि महोष्णं परिवृता ।
छविः प्रान्तीयेयं जनयति सखं हृद्यनुपमम् ।८।

लतागुल्मैः व्याप्ता क्वचिदपि च नग्ना विनयति ।
क्वचिद्वृक्षारण्यं क्वचिदपि फलानि मुपवनम् ॥
क्वचित्कण्टा कीर्णाः क्वचिदपि च पुष्पाणि लभते ।
छविः प्रान्तीयेयं जनयति सुखं हृद्यनुपमम् ।९।

क्वचिदायुर्हन्त्री क्वचिदपि च दात्र्योषधिरिह ।
क्वचिद्वर्षतिमेघः भवति हिमपात क्वचिदपि ॥
क्वचिन्मेघाछन्नं क्वचिदपि च सूर्यः उदयति ।
छविः प्रान्तीयेयं जनयति सुखं हृद्यनुपमम् ।१०।

गिरीणां शृंगाणि क्वचिदपि तु गर्तं विकसितम् ।
समा भूमिः क्वापि क्वचिदपि च उच्चावचमही ।
क्वचिच्छैलं घोरं क्वचिदपि च दिव्यस्थलमयी ।
छविः प्रान्तीयेयं जनयति सुख हृद्यनुपमम् ११।

क्वचित् ग्रावाः सन्ति क्वचिदपि सखे कंकरभरा ।
क्वचिद्दृश्यः सरित क्वचिदपि धरित्री गुहमयी ॥
क्वचिद्धूतोः गर्भा क्वचिदपि महा सर्पसदना ।
छविः प्रान्तीयेयं जनयति सुखं हृद्यनुपमम् ।१२।

क्वचित्सम्यङ्मृत्तिः क्वचिदपि च रेतोभरधरा ।
क्वचित्सास्यं क्षेत्रं क्वचिदपि तु शष्पावृतवनम् ॥
क्वचित्तीर्थाकारं क्वचिदपि च क्षेत्रं समतलम् ।
छविः प्रान्तीयेयं जनयति सुखं हृद्यनुपमम् ।१३।

क्वचिद् गर्जति सिंहः क्वचिदपि शृगालो विरुदति ।
क्वचिद् बीणाधावन् क्वचिदपि च भल्लूनिकसति ॥
क्वचिद्हिंस्रैर्जीवैः क्वचिदपि हि ग्राम्यं पशुमयी ।
छविः प्रान्तीयेयं जनयति सुखं ह्यनुपमम् ।१४

क्वचित्केकावाणी क्वचिदपि पपीहा विकलतो ।
पिकानां कूजन् वै क्वचिदपि च कुपर्फूविदिशति ।
क्वचित्काकाशब्दः क्वचिदपि च हंसावलिरिह ।
छविः प्रान्तीयेयं जनयति सुखं ह्यनुपमम् ।१५।

## सामाजिकव्यवस्था

क्वचिद भृंगो ब्रूते क्वचिदपि च वाद्यं मधुतरम् ।
मनुष्याणाम् नृत्यं क्वचिदपि पशुः कूर्दनपरः ॥
क्वचिद गीतं ग्राम्यं क्वचिदपि च छात्राः रवपराः ।
छविः प्रान्तीयेयं जनयति सुखं ह्यनुपमम् ।१६।
कवचित्साक्षरलोकः क्वचिदपि च गूर्टैः विलिखति ।
कवचिद्कर्गलमग्नाः कवचिदपि जनाः क्षेत्रनिरताः ॥
क्वचिच्छून्यं स्थानं क्वचिदपि जनानां च निवहः ।
छविः प्रान्तीयेयं जनयति सुखं ह्यनुपमम् ।१७।
प्रलापो लोकानां क्वचिदपि खगानाम् कलरवम् ।
नगर्यः विद्यन्ते क्वचिदपि गृहैकं विरमति ॥
क्वचिद् हर्म्यं दृश्यं क्वचिदपि कुटीरं कलयति ।

छविः प्रान्तीयेय जनयति सुखं ह्यनुपमम् १८
क्वचिद् यानं लभ्यं क्वचिदपि पदाभ्याम् प्रचलति ।
क्वचिद् विद्युद्ज्योतिः क्वचिदपि विधिः पूर्वनिहितः ।
फलैः काष्ठैः जीवी क्वचिदपि च शष्पैः निवहति ।
छविः प्रान्तीयेयं जनयति सुखं ह्यनुपमम् ।१९।
प्रजोमेषोभिर्वा क्वचिदपि नराः पाहनरताः ।
क्वचिदव्यालुर्वृतिः क्वचिदपि सखे ओषधिपरः ॥
क्वचिल्लाक्षाभिश्च क्वचिदपि जनः किंकर समः ।
छविः प्रान्तीयेयं जनयति सुखं ह्यनुपमम् ।२०।

## देवालयरचना

हिमाचलीय पैगोडा, शैलेटा रूपकं तथा ।
शिकारा चापि वै अत्र चतुर्थो मन्दिरं स्मृतम् ।२१।

## भावात्मकविषयः

विभिन्नखाद्य च विभिन्नछाद्यम् ।
विभिन्नभाषापि प्रथा विभिन्नाः ॥
विभिन्नसत्त्वेऽपि एकात्मकत्वम्
समस्तप्रान्ते परिदृश्यते वै ।२२।
रम्यिति लोकाः मनसो लयेन ।
गीतेन वाद्येन सुगुंजितेन ।
योगी यथाध्यानगतः समाधौ ।
तादृक्सुखं तैरेनुभूयते किल ।२३।
प्रशान्तवातावरणात्सुखिनः
जनो नगर्याः परिधावितोऽपि ॥
धरामिमां पर्वतपंक्तिसज्जाम् ।
समागतः शान्तिमुपैति सद्यः ।२४।
प्रभुर्निर्विकारी मतः सर्वलोकैः ।
तदेवर्षिभिः कल्पितो मूर्तरूपैः ॥
असावत्र वास्वान् हरिजंगमोऽपि ।
निगूढोऽयमात्मा हिमासुप्रदेशे ।२५।
यत् प्रान्तभूमौ मुनिभिः ह्यसाध्या ।
प्रागग्निकल्पैः विहिता तपस्या ॥
नृत्यन्ति देवाश्च सुविग्रहेण ।
वन्द्या मया सा हिमपूतभूमिः ।२६।

## प्रार्थना

चिन्तापूर्णी महेशो वधिरभगवती कांगड़ास्थापि दुर्गा—
मण्डी भूतेशशम्भु- दशवदनपतिः बैजनाथो महेशः ।
डोमो भेखाड़ी देवी जमलुऋषिवरः ऋष्यशृंगो मुनीन्द्रः ।
एते यच्छन्तु देवाः निखिल हिमजनेभ्यो सखं प्रोन्नतिं च ।२७।
बाड़ा देवः सुरेशः परशुभगवता पूजिता ह्यम्बिकासौ ।
श्राईकोटौ महेशूर विषहरसुरो देवटस्यापि सिद्धः ।
तारादेवी महासूः त्रिदशसनिहरु रेणुका माहूनागः ।
एते यच्छन्तु देवाः निखिलहिमजनेभ्योः सुखं प्रोन्नतिं च २८।

## कविपरिचयः

हिमाचलपते रम्ये नृमुण्डस्य निवासिना ।
काशिकस्नातकेनेदं लोकनाथेन निर्मितम् ।२९।

— लोकनाथ मिश्रः
शास्त्री प्रभाकर निर्मण्ड हि० प्र०

## Appeal to Students and Lovers of Sanskrit

Govt. of Maharashtra resolution No. ASC 9078/50921/XX-XXI dated 15th January, 1980 and Maharashtra State Board of Secondary and Higher Secondary Education letter dated 15th Janury, 1980, permit candidates of the Arts, Science and Commerce streams, if they so desire, facility to offer Sanskrit or any other classical language as a snbject at the Standards XI and XII levels, (In order to provide this facility the minimum number of candidates required is ten. of. p. 218 of S. S. Code dated 31-12-1978)

According to the Govt's Language curriculum, study of two languages is obligatory at the XI and XII standard levels. English being compulsory to all as medium of instruction. a candidate may offer as second language any Modern Indian Language. Sanskrit, Pali or any other classical language or any Modern Foreign Language (excepting English).

Sanskrit as the most suited language for the effective and proper use of computer in this scietific age, has been certified by the well-known Scientists of the world.

In view of the above, the managements, Principals/Professors and parents are requested to enlighten their wards by bringing to their notice the advantages of offering Sanskrit Paper at the XI and XII Standards.

### BENEFITS OF OFFERING SANSKRIT

1. Character-building is one of the most important aims of education. Learning of Sanskrit helps character-building.
2. Learning Sanskrit imparts knowledge of proper Grammatical usage which is essential or the study of all languages.
3. For gaining eloquence and developing personality the study of Sanskrit is of special help.
4. Knowledge of Sanskrit is essential for the study of Ayurveda.

   Note : Sanskrit, Ayurveda, Yoga and other original Indian lores of knowledge have attained high esteem in the U. S., Europe. Australia and other foreign lands. In London proper, there are two separate schools viz, "St. James Independent School" for boys and girls wherein study ol Sanskrit is compulsory.
   Herein although annual tution fee charged is *L* 1600, several students seeking admission are turned away.
5. Sanskrit like Mathematics is a scoring subject and helps candidates to score very high marks. Consequently, most of the candidates who find place in the merit list at the secondary and higer secondary school levels are those who have offered Sanskrit.
6. Passing in the composite paper (with 50 marks for Hindi and 50 marks for Sanskrit) depends upon the total marks obtained in the two subjects. Hence students scoring low marks in Hindi get through by dint of the higher marks they score in Sanskrit. (Candidates at the VIII to X Std. level are permitted to offer, as a subject, a hundred mark paper in Sanskrit or any other classical language).
7. Sanskrit with its rich vocabulary could atrract the coming generations of scientists to acquire knowledge of the language because the basic texts of several scientific and technical subjects are in Sanskrit.

Under these circumstances candidates desirous of offering Sanskrit at the XI/XII Standards (Arts, Science & Commerce) are advised to apply to their respective Principals. In case of any difficulty, Surabharati may be contacted at the address given on page No 24

संस्कृत

यदि मुझसे पूछा जाय कि भारत की सबसे विशाल संपत्ती क्या हैं? और उत्तराधिकारके रूपमें उसे सर्वोत्तम कौनसी वस्तु प्राप्त हुई है? तो मैं निःसंकोच उत्तर दूंगा कि यह संपत्ति संस्कृत भाषा और साहित्य एवं उसके भीतर जमा सारी पूंजी ही है।

मैं संस्कृत के अध्ययनको प्रोत्साहन देना और भारतीय विद्वानों को इस भाषा के साहित्य की जो प्रायः भुला दिया गया है छानबीन में लगाना पसंद करूंगा।

पं जवाहरलाल नेहरू

मैं उस पीढ़ी का हूं जो प्राचीन भाषाओं के अध्ययन में विश्वास रखती थी। प्रत्येक राष्ट्रवादी को संस्कृत का अध्ययन करना चाहिये, क्योंकि इससे प्रान्तीय भाषाओं का अध्ययन अन्य उपायों की अपेक्षा सुगमतर होता है। किसी भी भारतीय बालक या बालिका को संस्कृत के प्राथमिक ज्ञान से वंचित नहीं करना चाहिये।

★

महात्मा गांधी

---

## तव माधुर्यम् ।

-- डा० इन्द्रमोहन सिंहः

गहने तिमिरे त्वं किरणवत् ।
नीरदेषु गृहविहीनेषु भिन्नेषु
त्वं चपला प्रणयमयी
विरहानले कठिने
त्वं मिलनगीतिका रम्या ।
मरुभूमौ मध्याह्ने
त्वं तरुच्छाया शीतला
वा वर्षा सौख्यमयी ।

★

तपनतापितसिकतासु
त्वं दूर्वा हरिता ।
रीतिबद्धे काव्ये
त्वं सुक्ती रसस्यन्दिनी ।
प्रथितकवेः कीर्तेः
त्वं श्रेष्ठकविता ।

— प्रवक्ता पटियालास्थ पंजाबी
विश्व-विद्यालयस्थ
संस्कृत विभागे

# कस्मै प्रदया ?

लेखराम शर्मा

★

न मां प्रयच्छ मातर्
नीचानां लोभिनां गृहे ।
बुभुक्षितास्ते भवन्ति
निर्धनादधिका सदा ॥

तेषां न पूर्यते लोभो
कुबेरेणापि कदाचित् ।
याचन्ते ये यौतुकाख्यं
राक्षसं अतोष्यं सदा ॥

राशिं संगृहाण मा त्वं
दु:खदां सदा वराय ।
यच्छेश्चैव त्रिलोकीं त्वं
तस्मै नैव पर्याप्स्यते ॥

स्कूटरस्ते गृहे नास्ति
कारश्च दिव्या मारुति: ।
नैव त्वया (फ्रिज:) क्रीत:
लक्षं नैव च सञ्चितम् ॥

एकं याचिष्यते वस्तु
वरेण तु प्रतिपदे
पदाच्च सप्तमात्पूर्वं
यथेच्छं स: याचिष्यते ॥

सुखं नैव दास्यति मां
(दहेज:) कुटिल: सदा ।
अतो नैव इच्छामि
जीवितं (दहेजेन) ॥

(दहेजस्य) हि लोभी मां
जीवितां नैव त्यक्ष्यति ।
अत: प्रयच्छ मां मातरं
उद्योगिनं निरलौभिनम् ॥

प्रयच्छ मां त्वं मातर:
लोभिनां यत्राऽसस्थिति: ।
बुद्धिमान् वरो भवतु
श्रमं खादतु सर्वदा ॥

श्रमं बहुं करिष्यामि
वरेण तेन सर्वदा ।
स्वकरार्जितेन नित्यं
भवाव: श्रेष्ठिनौ तदा ॥

प्रवक्ता
गव० संस्कृत कालेज
सोलन

★

# कर्मकाण्ड–विद्यालयः

कर्मकाण्डं हि सनातनधर्ममूलम्। हिन्दूधर्मस्याधार एव कर्मकाण्डम् अद्यापि प्रायः हिन्दूपरिवारेषु धार्मिक-व्रतोत्सव-जन्म-मरण संस्कारादिषु पूजनहवनादिकं जायते हिन्दूमानसमनेन सदा परिपूर्णं स्थास्यति न कश्चिदपि एनां श्रद्धां विनाशयितुं शक्ष्यति हिन्दूमानसात् न केवलमत्रैव अपितु समस्तजगति विभिन्नधर्मेषु कर्मसु कर्मकाण्डरीतिनां परिपालनं भवति। अतः सनातनेऽस्मिन् धर्मेण कर्मकाण्डस्य भावो नाश्चर्यम्।

परन्तु पारम्परिकपरिवारेषु कर्मकाण्डं प्रति-अद्योदासीनता दृश्यते। विद्वांसोऽद्य न मिलन्ति एतेन श्रद्धालुजनेषु निराशा दृश्यते यत्क स्तेषां संस्कारादिकर्मसु भागं ग्रहीष्यति सविधानं-कर्मकाण्डं-सम्पादकाः अद्य विरला एव। अनेन धर्मस्य ह्रासो भवति।

अस्या आवश्यकताया पूर्तये एकस्य कर्मकाण्डविद्यालयस्य स्थापनाया विचारः पूर्तिमगात्। एष विद्यालयः शिमलामण्डलान्तर्गतठियोगोपमण्डलस्य माईपुलः स्थाने स्थापितोऽभूत्। अस्य सञ्चालनं शीतग्रीष्मावकाशयोः राजकीय महाविद्यालय (सोलनस्य) संस्कृतप्राध्यापकाः श्री केशवराम दर्शनाचार्याः- निशुल्कसेवारूपेण कुर्वन्ति। २०४४ विक्रमाब्दस्य ज्येष्ठमासीय-दशप्रविष्टेकेषु अस्योद्घाटनं जातम्। ठियोगक्षेत्रस्य विभिन्नस्थानेभ्यः एकादशसंख्यकाश्छात्रा अत्र सम्मिलिताः। एतत्कर्मकाण्ड-शिविरं-अष्टदिनानि यावच्चलितम् अस्मिन्-सन्ध्योपासनं, दैनिकचर्याया शास्त्रीयविधानम् पञ्चयज्ञ-वेदपाठ-सर्वदेवपूजन-मण्डपनिर्माण-देवादि-स्थापनपुरुषसूक्त-कुष्कण्डिका-हवनविधि-ग्रहणक्षेत्रराशिआदीनां ज्ञानं एतत्सर्वं प्रशिक्षितम्। धर्मस्य वैज्ञानिकसामायिकव्याख्यां कृत्वा पौरोहित्य-कर्मणः गौरवपूर्णसरणिः तेभ्यः प्रदत्ता स्पष्टीकृता च चरित्र-निष्ठात्याग-राष्ट्रसेवादीनां प्रेरणा अपि तेभ्योऽदायि। शिविरान्ते व्यायामशिक्षकः श्री मोहनलालः योगस्य उपयोगितायां तथा तस्यावश्यकतायां प्रकाशं न्यपातयत्। लाभदायकासनानामपि प्रदर्शनं कृतम्। छात्राश्च धर्मरक्षाया व्रतं गृहीत्वा स्वान् २ गेहान् ययुः।

प्रातः चतुर्वादनवेलातः नववादनं यावत् आश्रमप्रणालिमाश्रित्य प्रयोगात्मिक धर्मकर्मशिक्षा प्रदत्ताऽभूत। छात्राणां समग्रव्ययभारः श्रीशमगा संचालकेनैव स्वयं गृहीतः भोजनपुस्तकादिषु न छात्राणां किमपि व्ययादिकं जातम्। अस्य शिविरस्यायोजनं पौषमाघमासयोः शीतकालेऽपि भविष्यति। एतत्कृते-प्रशिक्षणार्थिषु महीयानुत्साहो दृश्यते। केवल दशछात्राणां व्यवस्था कृता वर्तते तथापि विंशतीनां आवेदनानि समागतानि। शास्त्रिणोऽप्यत्र भाग गृहीतुमिच्छुकाः।

अस्य पावनकार्यस्य पूर्तये माईपुलमन्दिरसमिति सदस्यैः पर्याप्तसहयोगो दत्तः। शीतकालीन शिविरस्य कृते सज्जा प्रारब्धा। भाविनि काले अन्यत्रापि प्रदेशे एवं विध शिविराणामायोजनं करिष्यते।

## यज्ञविशेषज्ञानां सेवायाम् निवेदनम्

मातृ मन्दिर कन्या गुरुकुलस्य यज्ञशालाया निर्माणं - प्राचीन ऋषिशैल्या करिष्यते। यत्र वेदमन्त्रध्वनिमिश्रित सूर्यरश्मीनां प्रभावाः परीक्ष्यन्ते सम्बन्धेऽस्मिन् यज्ञविज्ञानवेतृणां पथप्रदर्शनम् सहयोगः च अपेक्ष्यते।

एतादृग् यज्ञशालायाः चित्रं उपकरणानां सूची यदि कश्चित् विद्वान् प्रेषयति। महत्कृतज्ञान् अस्मान् करिष्यति आवश्यकव्ययो अर्पिष्यते। उत्तरेषिणी।

डा० पुष्पावती पी. एच. डी दर्शनाचार्य
विद्याबारिधि अध्यक्षा
मातृ मन्दिर कन्या गुरूकुल, डी० ४५-१२६,
नई वस्ती, रामापुरा, वाराणसी।

---

## मण्डीमण्डलस्य संस्कृतशिक्षकपरिषदः पदाधिकारिणः

मण्डी। हि. प्र संस्कृत शिक्षक परिषदः मण्डीशाखायाः [illegible] चिने निम्नाङ्किताः पदाधिकारिणः निर्वाचिता बभूवुः।

प्रधानः श्री रोशनलाल आचार्य।
उप ,, श्री लक्ष्मीचन्द्र शास्त्री।
सचिव ,, श्री विनय चन्द्र शास्त्री।
कोषाध्यक्ष ,, श्री विधिचन्द्र शास्त्री।
प्रचारमन्त्री - श्री अतर सिंह सेन शास्त्री।
कार्यकारिण्याः सदस्याः- १ श्री जयकृष्ण शास्त्री। २ श्री परसराम शास्त्री। ३. श्री रमेशचन्द्र शास्त्री। ४. श्री धनीराम शास्त्री।

सूचयति विनयचन्द्र शास्त्री
उत्तम वाच कम्पनी, पत्रा पुराना बाजार
सुन्दर नगर ३ जि. मण्डी (हि० प्र०)

सम्पादकीयम्

# दूरदर्शनोपरि संस्कृतम्

मान्याः सुरगिरः समुपासकाः । भवन्तः सर्वे जानन्ति यदद्य प्रचार-माध्यमानि वृद्धिं गतानि । त्रीणि प्रचारसाधनानि प्रमुखानि १. पत्राणि, २. आकाशवाणी, ३. दूरदर्शनम् । एतानि प्रतिदशकमभूतपूर्वां वृद्धिं स्वीयां दर्शयन्ति परन्तु वृद्धिरेषा संस्कृतक्षेत्रे सर्वेभ्यो क्षीणाः । संस्कृतपत्राणां पाठकसंख्या दशकत्रयानन्तरमपि क्षीयमाणा एव । आकाशवाणी यत्किमपि संस्कृते प्रसारयति तदुचितानुचितटिप्पणी न केनापि क्रियते अत एव तत्कार्या-लयः सर्वमपि यथापूर्वमेव कल्पयति । श्रोतृणामुपेक्षामालोक्य च समाचारादिप्रसारणमपि क्वापि विलुप्तमेव न स्यादिति आशंका ? दूरदर्शन-स्योपरि तु शून्यमिव संस्कृतप्रसारणम् । यद्यपि धन्यवादार्हा सुश्री कमलारत्नम् महाभागा यस्याः प्रयासैः यदाकदाचित् केचन संस्कृतकार्यक्रमाः दूरदर्श-नस्योपरि समायान्ति ।

अत्र भवतां सेवायां मदीयं सविनयनिवेदनमिदं वर्तते यत् दूरदर्शनस्योप-र्यपि संस्कृतसमाचारप्रसारणं प्रतिदिनं भवेत्–अथ च प्रतिपक्षं न्यूनातिन्यूनं संस्कृतस्य मनोरंजककार्यक्रमस्थापनमपि स्यात्, संस्कृतनाटकानि, संस्कृते-कथाप्रसारणम्, संस्कृतलेखकानां नूतनकृतीनां परिचयः समालोचनादिकं, संस्कृतकाव्यगोष्ठी चेतिविविधकार्यक्रमाः दूरदर्शनेन प्रसार्याः, एतत् कृते भवद्भिः कार्डोपरि स्वनामसंस्थादिनामसहितं पत्रोपरि अनेके प्रस्तावाः पारयित्वा सामूहिकरूपेण, पृथक्तश्चापि निम्नसंकेतेषु प्रेष्याः :—

१. भारतस्य राष्ट्रपतिः, राष्ट्रपतिभवनं देहली ।

२. श्री राजीवगांधी. प्रधानमन्त्री, भारत, प्रधानमन्त्री सचिवालय नई दिल्ली ।

३. सूचना एवं प्रसारणमन्त्री, भारत, सूचना एवं प्रसारणमन्त्रालय दिल्ली ।

४. महानिदेशक, दूरदर्शन, केन्द्रीय कार्यालयदूरदर्शन नई दिल्ली ।

५. निदेक, दूरदर्शन केन्द्र जालन्धर पञ्जाब ।

एवमेव च भारतस्यान्यप्रान्तेभ्यः तेभ्यः २ दूरदर्शनकेन्द्रनिदेशकेभ्यः विलिख्य मिलित्वा च अस्यां दिशि-आवश्यकप्रयासाः विधेयाः येन दूरदर्शनमाध्यमेन संस्कृतं सर्वजनसुलभं स्यात् ।

आशासेऽत्र विद्वांसः- विदुषां संस्थानां पदाधिकारिणश्चाथ विचार्ययित्वा ऽवश्यमेव सहयोगं दास्यन्ति ।

★

## शिथिलायमाना हि. प्र. सं. शि. परिषद्

यद्यपि कतिपयवर्षपूर्वं हिमाचलप्रदेशसंस्कृतशिक्षकपरिषद् - महदुल्लासेन गठिताऽभूत् परन्तु इदानीं शनैः २ तत्र शैथिल्यं समायातीति प्रतीयते । द्वित्राः तत्र कार्यशीलाः पदाधिकारिणः अन्ये च केवलं नाममात्रसदस्याः । प्रादेशिकशाखानामपि कापि कार्यसरणिर्नास्ति । न सम्मेलनं, न गोष्ठ्यः, न संस्कृतरक्षार्थं संस्कृतप्रसारविकासकृते एव वा कश्चित् प्रयासः यदि वयं स्वकायाजिविकाविषयमपि रक्षितुं न क्षमास्तदाऽन्यत्किं करिष्यामः । इति परिषदः पदाधिकारिभिः सदस्यैः सर्वैर्विचार्यम् । अत्र बहूनि परिषदः कार्यकलापसमालोचकपत्राणि समायान्ति सदस्या आगत्य च विभिन्नप्रश्नान् पृच्छन्ति । अतः पदाधिकारिभिः सावधानैर्भूय परिषदः-उन्नयनाय प्रयासाः विधेया इति मामकीनः परामर्शः ।

## संस्कृतविदुषीलेखिकासम्मेलनं ४, ५, ६, सितम्बरमासीयदिवसेषु

पूर्वप्रतिज्ञातमिदं सम्मेलनं ११, १२, १३, जुलाई स्थाने इदानीं ४, ५, ६, सितम्बरदिवसेषु १९८७ खीष्टाब्दस्य भविता । सर्वैरपि संस्कृतज्ञैः—ज्ञातव्यमिदम् ।

केश्चिदपरिहार्यकारणैरत्र परिवर्तनमिदं विहितम् । असुविधार्थं महानुभावाः क्षमादानं करिष्यन्ति । सितम्बरमासे च पूर्णसहयोगदानेन कृतार्थयिष्यन्ति ।

हिमाचलप्रदेशस्य सर्वेषां संस्कृतमहाविद्यालयानां आचार्याः मया पुनरपि स्वसहयोगदानाय प्रार्थ्यन्ते ।

— केशव शर्मा

सुश्री शकुन्तलाऽवस्थी, प्राचार्या, विदुषी परा
संरक्षिकाऽस्य पत्रस्य लेखिका संस्कृतस्य च ।
संस्कृतस्य प्रचारार्थं सदा यत्नरता इह
पटियालानगर्यां वै सुधन्येयं विराजते ॥

(सं)

वर्षम् ३१ संस्कृतस्य सचित्रमासिकम् अङ्कः ११

शुकदेवमहाभागः संस्कृतोत्थानतत्परः
नाभायां शोभते नित्यं प्राचार्यपदवीं गतः ।
महान्नाटककारोऽयं शुकदेवोपमः सुधिः
संरक्षकश्च पत्रस्य पञ्चाम्बुप्रान्तभूषणः ॥

(सं.)

# विषयानुक्रमः



## दिव्यज्योतिः,

हिमाचल प्रदेश–पंजाब-हरियाणा-जम्मूकश्मीर - मध्य प्रदेश–राजस्थान–महाराष्ट्र उत्तरप्रदेश शासन-स्वीकृतं केन्द्रशासनपुरस्कृतं सचित्र संस्कृतमासिकम् ।

पत्रस्य उद्देश्यानि तथा नियमाः

सरल--सरस-सुबोध-साधनैः सर्वस्मिन् संसारे संस्कृतस्य प्रसारः, साहित्यान्तर्गतानां सकलकलानां समन्वेषणं, संसारस्य हितसम्पादनम्, एवं लौकिक - अलौकिकस्वातन्त्र्यस्य प्राप्तिः।

"दिव्यज्योतिः" प्रतिमासं पञ्चदशतारिकायाम् (आङ्गलमानेन) प्रकाशितं भवति।

पत्रस्य वार्षिक मूल्य २० रु० अर्धवार्षिकं १५ रु० एकस्याङ्कस्य च रु० १-७५ भवति ।

वर्षारम्भः आश्विन—मासतः भवति ग्राहकः कस्मादपि मासाद् भवितुं शक्नोति।

ग्राहकैः, "सम्पादक, दिव्यज्योतिः, भारती विहार, मशोवरा, शिमला-१७१००७ हि० प्र०" इति संकेते धनादेशेन वा शु, प्रेषणीयम्।

## परिचयः


संस्थापकाः तथा आद्यसम्पादकाः आचार्यश्रीदिवाकरदत्त शर्माणः, — दूरभाषः 3859

प्रधानसम्पादकः— प्रा० केशव शर्मा एम ए., एम, फिल, साहित्यरत्नम् — ,, 8-200

दिव्यज्योतिः कार्यालयः भारती विहारः, मशोबरा, शिमला-७ (हि. प्र.)

मुद्रकः प्रकाशकः—

भारतीमुद्रणालय भारती विहार, मशोबरा-१७१००७ शिमला (हि. प्र,)

स्वामी:- श्रीमती आचार्य रत्नकुमारी शर्मा

अगस्त १९८७ भादो: २०४४ – वर्षम्–३१ अङ्कः ११

वार्षिक मूल्यम् २० रु०

# श्रीतुकारामचरिते ब्राह्मणा शूद्राश्च

डा० सुरेन्द्र अज्ञात

★

महाराष्ट्रस्य विख्यातः साधुः श्रीतुकारामश्शूद्रेषु जातो बभूव । स परमो भक्त आसीद् भगवतः । भक्तिवशात् स ब्राह्मणान् भगवत एव प्रतीति मन्यतेस्म, 'ब्राह्मणोऽस्य मुखमासीदिति' स्मरणात् ।

परं तात्कालिका अनेके मुखजा जात्यभिमानग्रस्ता बभूवुः । तेन ते भूसुरत्वाच्च्युता स्वसुरत्वमध्यारूढाश्च जाताः ।

क्षमादेव्या श्रीतुकारामचरितनामके चरितप्रधानकाव्ये तस्य भूसुरपूजनपरस्यानेकानि शब्दमयचित्राणि प्रस्तुतानि । तद्यथा

तृतीये सर्गे पश्यामो यत्तुकारामो धननाशवशादतिदीनां गतिं जगाम तस्य पत्नी यथाकथंचन कानिचिद् रुप्यकाणि प्राप्य तस्मै ददौ वाणिज्यार्थम् । स क्रयविक्रयाभ्यां लाभं लेभे । परं यदा स गृहं प्रत्यागच्छति, मध्येमार्गं विप्रमेकं ददर्श 'गले हलं दारुमयं विमुण्डनं ग्रन्थिलदीर्घकूर्चम्' (३-५८)। यदा तुकारामो जानाति यद् विप्रोऽसौ सम्बन्धिभि प्रतारितोऽस्ति, कृच्छ्रगतोऽस्ति, तदा स सर्वं मूलधनं लाभञ्च तस्मै दत्त्वा तं मोचयति । मुक्तं तं भोजयति, अन्यांश्चापि दश भूसुरान् भोजयति तेन सह पुण्यार्जनाय ।

क्षमारावमहोदया लिखति यत्तुकारामेण यो द्विजोऽदर्शि, स गद्गदकण्ठमुच्चैर्देहि प्रभो किञ्चिदिति ब्रवीति स्म । तस्मै कश्चिदल्पं ददाति स्म, कश्चित्तस्य तिरस्कारं करोति स्म । अनेन तुकारामस्तमुपेत्य तस्य रोदनस्य याचनस्य च कारणं पप्रच्छ

स च द्विजो गद्गद्कण्ठमुच्चैर्देहि प्रभो किञ्चिदिति ब्रुवाणः ।
अनिच्छयाऽदीयत कैश्चिदल्पं तिरस्कृतश्चान्यजनैर्वराकः ॥ ५६
द्रवीकृतात्मा करुणस्वरेण सौम्यस्तुकाराम उपेत्य विप्रम् ।
पप्रच्छ किं रोदनकारणं ते वदेति सोऽपि द्विज इत्युवाच ॥ ६०

स द्विजः प्रतिवक्ति—मम संबंधिभिर्मे रिक्थापहाराय राजकुलेऽभियुज्य मम सर्वस्व नाशितम् । राजतमुद्रिकाणां शतत्रयं मयि राज्ञा दण्डः पातितः ।

मया पंचाशत् मुद्रिकास्तु दत्ता:, परमधुना सार्द्धशतद्वयं देयमस्ति । अतो मे दुर्दशा राजपुरुषै: क्रियत इति

रिक्तापहाराय निरागसं मां सम्बन्धिनो राजकुले ऽभियुज्य ।
सर्वस्वनाशं जनयाम्बभूवुर्हं तो विधि तुष्यति नेयतापि ॥
दण्डश्च राज्ञा मयि पातितोऽभूच्छतत्रयं राजतमुद्रिकाणाम् ।
अशोधयं कृच्छ्रगतोऽपि तस्मात्पञ्चाशतं दैवकृपावशेन ॥
अद्यापि सार्धद्वितयं शतानामस्ति प्रदेयं न च दातुमीशे ।
तदर्थमेते यमकिंकराभाः परीत्य मां राजभटास्तुदन्ति ॥३-६१-६३

तस्य कथां श्रुत्वा द्रवीभूतचेतास्तस्य बन्धतो मोक्षं साधयति, तेन सह दशान्यान् ब्राह्मणांश्च भोजयति

आपत्कथां तस्य निशम्य भक्तो हरेः सपद्येव दयार्द्रचेता ।
विश्राव्य सर्वं तदभीष्टमर्थं व्यमोचयद् बन्धनतस्तमार्तम् ॥
ततस्तुकाराम इमं स्ववासे द्विजं समानीय कृताभिषेकम् ।
अभोजयत्तं दश भुसुरांश्च भुक्तोत्तरं प्राप तदाशिषश्च ॥ ३-६४-६५

तुकाराम: श्री पाण्डुरंगालयस्य जीर्णोद्धारोर्ध्वं ब्राह्मणा भुञ्जन्त्वित्यैच्छत् । तस्य सन्तुष्टेन हरिणोत्पादितं धान्यं, यद्धि तेन स्वप्रयोगार्थमस्वीकृतमतः ग्रामाधिपस्य सविधे स्थितमासीत्, अस्मिन् कर्मणि प्रयुक्तं बभूव । क्षमाराव-महोदयाऽऽह

नवीकृते देवगृहेऽथ हर्षादैच्छद् द्विजान् भोजयितुं महात्मा ।
निराकृतं धान्यमदायि तस्मै ग्रामाधिपेन द्विजभोजनाय ॥ ५-५६

यथा पूर्वं ज्ञातं तथाऽत्रापि जानीमो यत्तुकारामस्य ब्राह्मणेभ्यो भोजन-दानस्य स्वाभाविकी प्रवृत्तिरासीत् । स तेषां सेवां विशेषेण पुण्यं मन्यते स्म ।

## वृद्धा ब्राह्मणी सेविता

एकदा जनैः साकं विपणिं गच्छन् स वृद्धामेकां ब्राह्मणीं ददर्श तस्याः सेवापरो बभूव सः । तां पृष्ठ आरोप्य चचाल । सोचे मामत्रैव स्थापय गत्वा च तैलमाहर मह्यं यदर्थं गन्तुमना आसमिति । स तथैव चकार

निरीक्ष्य वृद्धां पथिकेषु दुर्बलां द्विजां दयालुर्निजगाद पुत्रवत् ।
मदीयपृष्ठेऽम्ब निषीद रक्षिता सुदुर्गमोऽध्वा विपणिश्च दूरतः ॥

अथैवमेषा स्थविरा प्रबोधिताब्रवीच्छ्रमं मा कुरु भद्र मत्कृते ।
मदर्थमत्रैव तु तैलमाहरेभवामि तेनैव कृतार्थिता त्वया ॥
भवत्विति द्रागुपगम्य वाटिकां प्रतिश्रुतं तैलमुपाहरत्स्वयम् ॥
५-४०-४२

एवं तुकारामो ब्राह्मणभक्तिपरायण आसीदिति स्थितम् । परं ते तस्यापमानं कुर्वन्ति स्म । तैरपमानितोऽपि स न ब्राह्मणेभ्यो विमुखो जातः, न तेषां व्यवस्थामेव चास्वीचकार ।

चिंचवडा—नगर्याम्

चिंचवडाख्ये पुरे चिन्तामणिर्नामको ब्राह्मणः प्रतिवसति स्म स तुकारामं भोजनेन निमन्त्रितवान् । तुकारामस्तस्य गृहं प्राप्तः, तत्र तस्य पादयोः पपातातिविनीतिवशाद् । परं स ब्राह्मणो दूरतोऽपासरच्छूद्रस्पर्शं परिहरन् -

विलोक्य न चिरान्मुनिर्बहिरुपागतं भूसुरं पपात पदयोः
क्षणादतिविनीतिमादर्शयन् ।
स दृप्तपृथिवीसुरः स्वमतिपावनं भावयन्नपासरद् दूरतः सपदि
चैनमाभाषयद् ॥ ६-१६

स एव ब्राह्मणस्तुकारामचरणयोः पपात यदा तेन दृष्टं यत्तस्य मन्त्रैः कापि देवता नायाति, परं तुकारामेणाहूतौ गणपति हरी अविलम्बमागच्छतः । तथा सत्यपि तुकारामः श्रुतिस्मृत्युक्तवर्णव्यवस्थाया एव प्रतिपादनं करोति, स्वात्मानञ्च शूद्रं कथयित्वा तस्य ब्राह्मणस्यैव श्रैष्ठ्यं समर्थयति । कथयति कवयित्री

निर तदरहङ्कृतिर्नतशिरा विवर्णाननो निपीड्य स महात्मनः पदयुगं
ययाचे क्षमाम् ।
यतिस्तु चकितोऽब्रवीद् विनयतस्तमुत्थापयन् सखे वृषलजं कथं
स्पृशसि नैष धर्मः स्मृतः ॥
मयैव हि भवान् सदा भवति पूजनीयः परं जघन्यकुलजोऽस्म्यहं मम
गतिर्बहिर्नित्यशः ।
न नाम महिमास्ति भो न च यशस्विता गौरवं सदास्मि निजधर्मभाङ्
न हि विषादलेशोपि मे ॥
तुरीयकुलसम्भवः परिचरेत्तदुच्चत्रिकं सदेति हि सनातनः प्रववृते
विधिर्वैदिकः ।

न पीडयति मां मनागपि विभोरिदं शासनं द्विजाः किल नरोत्तमाः
प्रकृतिसिद्धसौगुण्यतः ॥
(६-२०-२६)

### भक्तिमार्गत प्रातिस्विकता

इदमत्रावधेयम् । भक्तिमार्गपथिकाः कवयो भक्ताश्च वर्णव्यवस्थाया अपवादं कृतवन्तः । तेभ्यः प्राक् महा भारते वज्रसूच्युपनिषदि च पुराणेषु च यत्र तत्र पठामो यद् यो हि भक्तिमान्, यो हि गुणवान्, स शूद्रः सन्नपि ब्राह्मणतामेति, ब्राह्मणश्च हरिविमुखो गुणहीनश्च शूद्रतामेतीति । परं तुकारामचरिते भक्तिमार्गस्येयं प्रवृत्तिर्न दृग्पथपथिका भवति । इयमस्य प्रातिस्विकता ।

### ब्राह्मणः शिष्यकृत

देशपाण्डेसमाह्वय एको ब्राह्मणो हरिणाऽऽदिष्टोऽनिच्छया तुकाराम गच्छति शास्त्रज्ञानलब्धये । स न पडितमन्यः अतः स हरिमेव साह्यार्थं प्रार्थयते । यदा स (तुकाराम) जनभाषया गुम्फितानि पद्यानि तस्मै ददाति, तदा स ब्राह्मणस्तान् धिक्करोति तदाऽऽकाशवाण्यायाति मध्ये । सैव तुकारामस्य वचसां माहात्म्यं प्रतिपादयति, न तु स स्वयं विकत्थते । ७-१-१२

तुकारामस्य ज्ञानायेर्ष्याऽपि जाता ब्राह्मणेषु । ते स्वात्मन एव विद्यासागरान् मन्वते स्म । तेष्वेको रामेश्वराख्यो द्वेषाग्नितप्त, सन् राजकुले न्यवेदयत्

"यथैष शूद्रः पठति श्रुतीश्च धर्मध्वजी वञ्चयते च विप्रान्" (७-१४)
राजा "निष्कास्यतामेष निगृह्य जाल्मः पुरादिति ग्रामपमादिदेश" (७-१५)

ज्ञात्वेदं तुकारामो रामेश्वरं याति तस्याराधनाय परं "आक्रोशादुच्चैः स तु भूमिदेवो व्यपेहि धिक्कीर्तनदाम्भिकं त्वाम्" (७-१६) इति । तदापि तुकारामो 'द्विजो हि साक्षाद् भुवि विष्णुमूर्तिः' (७-१७) इत्येवोवाच । रामेश्वरस्तस्य पद्यानि लोकस्य प्रियाणीति दुःखमनुभवति स्म । अतस्तेन कथितं—'त्वं स्वरचितानि पद्यानि नद्यां क्षिपेति१ ।' ब्राह्मणादेशपालनतत्परेण तेन पथैवाचरितम् । तदा जना हसन्ति स्म । ईर्ष्यालवः प्रसन्ना जाताः । ते कथयन्ति स्म "शूद्रः पक्षीव जातः प्रविलूनपक्षः" (७-२१) ।

१ अमुं व्यतिकर तुकारामः श्री रामदाससमक्षं क्षमारावकृते श्रीरामदासचरिते वर्णयत्येवं ततश्च मे शूद्रकुलोद्भवत्वाद् द्विजाग्रयषंषन् हरिकीर्तनानि तेषां निदेशेन नदीजलेषु क्षिप्तं निरास्यं कृतिसंग्रहं स्वम् '। (०१-३४)

स रामेश्वरो यदा दैवप्रकोपस्य शरण्यतां गतस्तदा तुकाराममेव शरणं जगाम। तस्य पदयोः पपात परं तदापि तुकाराम "नमः शूद्रोऽस्मि जा या त्वमसि द्विजेन्द्रः। अजस्रमिच्छामि तव प्रसादम्" (७-४०) इत्येवोवाच। रामेश्वरो जात्या ब्राह्मणोऽपि सन् तस्य सेवायां इतो बभूव, तत्रैव च स्वं देहं तत्याज।

अत्र शूद्रेण निजैः गुणैः भक्तेः प्रभावाच्च जात्या ब्राह्मणोऽपि स्वीयः शिष्यः कृतः। स कदाचित् प्रथमो ब्राह्मण आसीत्।

## जात्यभिमानः साधुता च

एकोऽन्यो ब्राह्मणो मुम्बाजिनामा चिंचवडमध्युवास। सोऽपि दिद्वेष तुकारामं तस्य हीनकुलत्वहेतो। एकदा तुकारामस्य महिषी तस्य ब्राह्मणस्य शाकवाटीं गत्वा शाकं भक्षयांचकार ब्राह्मणश्चुक्रोध। 'रुषा ज्वलन् भूरि स विप्रबन्धुर्मुनिं निगृह्य प्रजहार दुष्टः हस्तेन पादेन च ताडयन् स श्रान्तो नितान्तं विरराम पापात्" (८-३)

तस्यैव ब्राह्मणस्य 'उपेत्य शय्यां स मुनिः कृपालुर्विस्मृत्य विप्राचरितापचारम् सुखोपचारैर्लघयंस्तदार्तिं सर्वांगसंवाहनमाचचार" (८-१०)। अनेन व्यवहारेण स भूमौ निपत्य तस्मै ननाम। अत्र तुकारामस्य साधुतैव जात्यभिमानं दूरीचकार, न तु दैवीशक्तिः काचित् सहायिका बभूव।

## श्रुतिस्मृत्युक्तो धर्मः

तुकारामस्य श्रुतिस्मृतिप्रतिपादितवर्णव्यवस्थायां श्रद्धा दृढाऽऽसीत्। स शिवाजिमहोदयं ब्राह्मणधर्मानेवं शास्ति—

आदौ द्विजन्मा श्रुतिशास्त्रविद्यामधीत्य षट्कर्मरतो गृही स्यात्।
उपेत्य वार्धक्यमसौ विरक्त संसाधयेन्निर्जयमिन्द्रियाणाम्॥
(८-३४)

अत ऊर्ध्वं स वर्णक्रमे सर्वोच्चस्थानस्थितेषु ब्राह्मणेषु क्षत्रियः कथं वर्तेतेति निर्दिशति द्विजान् मानयेत्। (८-३५)

एवं तुकारामस्य हृद्गतं सर्वं स्पष्टं भवति

## ब्राह्मणेष्वन्यथाऽऽचरणम्

एकमेवोदाहरणं तुकारामचरिते यत्र तेन ब्राह्मणेष्वन्यथैवाचरितम्। एकदा ब्राह्मण एकस्तुकाराम प्रापोवाच च तं—'वेदान्तग्रन्थं ममोपज्ञं शृण्वन्तु भवन्त' इति तदा तुकारामस्तं प्रत्युवाच—'अहं कम्बलेनावृत-

शरीरः स्थास्यामीति । भवता ग्रन्थस्य पाठः कार्यः । यदा ग्रन्थपाठान्ते ग्रन्थकारस्तस्य शरीरात् कम्बलमपसारयति तदा स तं हस्ताभ्यामावृतश्रोत्रं पश्यति । पृष्ट प्रत्युवाच-'नाहं जीवेश्वरयोरैक्यप्रतिपादकं ग्रन्थं श्रोतुं क्षम इति मया कर्णौ पिहितौ इति ।

अत्रापि स ब्राह्मणानामादरवशादेवाभिनयं चकार, यद्यपि घटनेयं ब्राह्मणमपि हास्यास्पदं करोति । पूर्ववृत्तान्तपठनादूध्वमिदं सिद्धं भवति यन्न तस्याभिमतमासीत् ब्राह्मणस्य हास्यास्पदत्वनाम तत्त्वानुषंगिकमेव ।

तुकारामो वर्णव्यवस्थायां सर्वोच्चस्थानास्थितेषु ब्राह्मणेषु सदैव बद्धादर आसीद्, यद्यपि तैः सोऽनेकधा धिक्कृत, ताडितश्च नाशितः तस्य च कदापि महत्वं न स्वीकृतं ऋते दैवीशक्तेः, ऋते तस्यापूर्वधैर्याच्चेति ।

## कवयित्री ब्राह्मणाश्च

क्षमारावमहोदया स्वयमपि भूसुरानाद्रियते, यतः साऽपि यत्र तत्र तथाविधान् शब्दान् प्रयुनक्ति यैस्तस्या अभिमतं किं, किञ्चानभिमतमिति स्पष्टं भवति ध्रुवम् ।

तुकारामो भिन्दिपालं गृहीत्वा कस्यचित् क्षेत्रपतेः सस्यरक्षार्थं तिष्ठति । तत्रापतति पत्त्रिनिवहः । भुक्त्वा धान्यं नीडं गच्छन्ति ते । स तान् दृष्ट्वा चिन्तयति 'द्विजाः (पक्षिणः) द्विजाः (ब्राह्मणाः) इवोदरपूर्त्यर्थमेव गृह्णन्ति, न च परिगृह्णन्ति --

वीक्ष्य तान् स चलतः पतत्त्रिणो विस्मयान्वितमना व्यचिन्तयत् ।
भक्षयन्ति किमपि द्विजा इमे न द्विजा इव नयन्ति तद् गृहम् । (४-२६)

अत्र यमकालंकारप्रयोगेनोक्तिवैचित्र्यमानन्दावहं परमम् । कवयित्री द्विजान् उपमानत्वेन स्थापयित्वा, तेषां परिग्रहवृत्तिविशेषेण प्रस्तौति अनेन ब्राह्मणा न परिगृह्णन्तीति प्रतिपादितं तया भंग्यन्तरेण ।

ते पक्षिणः प्रतिदिनं धान्यं भक्षयन्ति । तान् दृष्ट्वा तुकाराम स्तथा तोषं प्राप्नोति यथा तस्य मनो भोजनेन तृप्तान् ब्राह्मणान् दृष्ट्वा प्रसन्नं भवति । कवयित्री लिखति

आयतीत्थमनुवासरं मुनौ भुंजते स्म किल धान्यमण्डजाः ।
तेनिरेऽस्य च मुदं यथा द्विजा भोजनेन परितृप्तमानसाः ॥
(४-३०)

एकस्मिन् दिने यदा क्षेत्रपतिस्तत्रागच्छति, तदा पक्षिणः उड्डयन्ते तेषामुड्डयन यपमानं पश्यत । कवयित्री कथयति यथाऽन्त्यजं वीक्ष्य ब्राह्मणा जुगुप्सयेतस्ततो गच्छन्ति तथा क्षेत्रपतिं निशाम्य पक्षिण उड्डिड्यिरे-

**सर्वदिक्षु विचरन्तमण्डजास्तं विलोक्य सहसा विनिर्ययु ।**
**अन्त्यजं निगमतःगतं यथा वाक्ष्य भूसुरगणो जुगुप्सया ॥**

अत्र कवयित्री ब्राह्मणानामन्त्यजेभ्यो दूरे धावनं स्वीकृत्यात्मकशब्दैर्वर्णयतीत्याश्चर्यंकरम् गान्धिमतानुसारिणी कवयित्री निन्दनीयमाचारमप्यसाम्यतात्मकं कथ समर्थयतीति ज्ञानस्यागोचरः गान्धिमहोदयस्त्वमुं भृशं निनिन्द. वर्णाश्रमव्यवस्थानुचरोऽपि सन्

अविसंवादीदंवचो यत्तुकारामो ब्राह्मणसेवापरोऽपि जात्यभिमानग्रहगृही तैरपमानितो बभूव । स तेषां प्रतिकारं साधुतयैव करोति न तु शारीरिकशक्त्या बौद्धत्वेन । अन्यच्च स केषांचिद् दुर्व्यवहारं प्रतिकुर्वन् न सम्पूर्णां व्यवस्थां परिवर्तितां चिकीर्षति नैतदेव, स तां व्यवस्थां स्तौति, तस्या दीर्घायुषे च जनानुपदिशति । कवयित्री स्वयमपि स्मृत्युक्तव्यवस्थाया समर्थनं करोति ।

सा न केवलं शूद्रैस्सह सद्व्यवहाराय निर्दिशति, अपि त्वस्पृश्यताविषयेऽपि पुरातनमेव मतं समथयति

यदि तयाऽस्पृश्यताविषये स्वीयः पक्षपातो न प्रदर्शितोऽभवत्तदा तुकारामचरितादियमाशोत्पन्ना भवेद् यत्सा तुकारामस्य महिमानं प्रति ब्राह्मणानन्धान् प्रस्तूय तेभ्यो जनान् विमुखान् करोति, अनेन च पथा ब्राह्मणशूद्रसम्बन्धान् मानवोचितान् जात्यभिमानरहितांश्च विदधाति परमस्पृश्यताया समर्थनं कृत्वा तया साऽऽशाऽपि विशसितेति दूयते मनः ।

इति

३-५७, अज्ञातवासः
वंगा - १४४५०५
(१४४५०५)

★★
★

## निवेदनम्

**कृपया वा० शुल्कं शीघ्रतया प्रेषयित्वा अस्माकं साहाय्यं विधेयम् ।** **सम्पादकः**

गताङ्कादग्रे

लघूपन्यासः–

# शिखा

—— केशवचन्द्रः

शम्पा उभयस्य आलापे निजाऽभिजात्यम् सगैषयति । निशान्तः तथैव जल्पति ।

बन्धो...! उपार्जनस्य मार्गास्ते नाना । तद्द्वारा पुष्कल विशेष्य स्थलानि च वितीर्य उपकारनाम्ना स्वादृशा वशग्याः स्युः । किन्तु यदि वयमुपकरिष्यामः तर्हि अस्मत् कृते भोजनं न मिलिष्यति । अतो यावदपकारः तावदुपार्जनम् । यावत् पुस्तिकायाः वक्रगतिः तावान् लाभः ।

इद केन प्रकारेण........ ?

यदि कार्ये विघ्नसृष्टिः तर्हि कश्चित् समीपमागमिष्यति । धनं दास्यति । सम्मानमपि दास्यति । ततः कार्यसिद्धिः ।

बुद्धिमान् त्वम् ।

बुद्धिस्तु केवलमसौविध्यसृजने ...... ।

अरे...! येन केन प्रकारेण धनं करगतं भवतु । ततो नूनं सुखम् । तदपि सम्मानस्य मूलम् । जनास्तु असौविध्ये निपतन्ति । नेयं नवीना कथा ।

स्यनैतत् । एषा हि दैनिकी कथा । प्रतिदिनं केचन आगच्छन्ति । बाबो... ! बाबो ... ! सम्बोधयन्ति । अनुनयन्ति विनीता भवन्ति । धनं ददति । ततः किंचित् कार्यं भवति । भवतु...... । का ते योजना इदानीम्...?

संप्रति कुत्रचित् महिलामङ्गलसमितेः स्थापनार्थं चिन्तयामि । मन्ये, सर्वंकारस्य इयं नवीना योजना ।

सहसा कथमस्यां दिशि दृष्टिस्ते निपतिता ?

किंचित् मङ्गलं विधातव्य खलु ? अन्यथा नाम्नः प्रसारो न स्यात् ।

हं...बन्धो ! भवन्तो महान्तः । धनस्तूपस्य अधिकारिणः । यदा कदाचित् यत् किमपि कर्तुं प्रभवः । सर्वाणि च मङ्गलानि महतामेव । अनेन मम को वालाभः ?

नून लाभो भवेत् । त्वं सचिवालयस्य विधाता। यत् किंचित् भवतु नाम सर्वं तव पथि आगमिष्यति । लाभो वा न भवेत् कथम् ?

आत्म प्रौढ़या निशान्तः प्रहसत ।

तर्हि शीघ्रं व्यवस्थापय ।

व्यवस्थापने सहाय आवश्यकः खलु ?

तर्हि किमिच्छसि ... ?

प्रथमतः शम्पादेवी समितेः कार्यनिर्वाहिका भवतु ।

निशान्तः प्रसन्नः संजातः ।

तर्हि, कियद् वेतनम् ... ?

आश्चर्यो नास्ति... । वेतन चिन्ता ... ? भवतु, तर्हि ... । सर्वंकारनियमं तु त्वं जानासि । तदनुसारं भविष्यति ।

शम्पा पुलकिता ।

प्रभुत्वपरिकल्पनायां सा व्यग्रा अभूत् । आधिपत्यस्य आहुतिषु तस्या कामनाशिखा मूलाधारत उत्थातुं चञ्चला अभवत् । अधिकारस्य लिप्सा अभियानमुखी संजाता । विलासस्य कौशले सा पुत्तलिका भवितुं प्रवृत्ता ।

निशान्तस्य पुस्तिकानेपथ्ये सैव बिघ्नस्य जननी । तस्य च संग्रहप्रवृत्ति-मूले सुन्दरी शम्पा आभिजात्यस्य प्रथमसामग्री । सा सुन्दरी । पार्श्ववासिनां नयनाकर्षिणी । उपरितन - पदाधिकारिणां पुलककारिणी । तस्याश्च तारुण्यं निशान्तस्य सौभाग्ये कारणम् । यदा कदाचित् उच्चपदाधिकारिणां पुत्रजन्मो-त्सवो भवति अथवा गृहप्रतिष्ठा भवति तदा निशान्तः सोपहारः सपत्नीकश्च गच्छति । शम्पया सह तदा निशान्त आत्मानं बहु मन्यते । पदाधिकारिभिश्च सह तस्याः परिचयं कारयति शम्पा तथैव आत्मानं प्रदर्शयति यथा ते आकृष्टाः स्युः । पुनरपि तैः सह सा समाना इति व्यवहारं सा नवीकृत्य प्रकटयति प्रगल्भतया बहु जानन्तीव अभिनयति । ते मुग्धा भवन्ति । शम्पा संतुष्यति । निशान्तोऽपि आत्मना पुष्कलीभवति ।

यदा प्रभृति विलासः शम्पां कार्यनिर्वाहिकात्वेन दायित्वं समर्पयत् तदा प्रभृति आत्मानं तथा वर्णयितुं शम्पा प्रतिवेशिद्वारं गच्छति । अद्य यदि एकस्य तर्हि अपरदिने अन्यस्य गृहमुपसर्पति । महिलामङ्गलसमितिविषये प्रचोदयति । सा सर्वत्र विवृणोति ।

महिलाः अबलत्वे निर्यातिताः । पाकशालां विहाय अन्यत्र तासां स्थानं नास्ति । बहिर्गमने विपद् । गृहे च निर्यातना । कर्मक्षेत्रे शातनम् । सर्वत्र

भयम् सर्वदा च जनाः शोषणाय भ्रष्टवृत्तिकाः । एष महती समस्या । प्रतिक्षेत्रं नारीणां स्थानं सुरक्षितमपि अरक्षितमिव । एतस्य कारणं स्पष्टम् । नार्यो हि न जागरूकाः । शिक्षिता अपि न चिन्ताशीलाः । सर्वासां ज्ञातसारे घटना अरुचिकरी । किन्तु न कोऽपि प्रतिवदति । नार्यः पण्या भवन्ति पर न काऽपि स्वरमुत्थापयति, सम्मुखे एव ता दासीभवन्ति । तथापि न काचित् अभियुङ्क्ते । एतस्य कारणं नारीणामसाहित्यम् ...... संकीर्णस्वार्थचिन्ता... ईर्ष्या परायणता... ।

अत्र समय आगतः । विषयेऽस्मिन् चिन्ता कर्तव्या ।

शम्पा एवं प्रवर्त्तते ।

निशान्तश्च निजमार्गे पूर्ववत् ।

यदा शम्पा जनसेवार्थं गृहात् निर्गच्छति तदैव जनानाम् अशुभकामनया निशान्तः कार्यालयं गच्छति । पथि जना मिलन्ति तं नमस्कुर्वन्ति असौविदयं ज्ञापयन्ति । निशान्तस्तु उपेक्षया तद् अपरेण सह जल्पति । तस्य यदि किमपि कर्म शृणोति तर्हि नमुपेक्ष्य अन्येन सह आलपति । एवं स बहुकार्य-व्यापृत इदं प्रभिनयति । आत्मप्रौढ़िं दर्शं न् अनुज्ञा व्याहरति । उच्चपदाधिकारीन् इतस्ततो निर्दिशति । मुखे तस्य अपेक्षावाणी । भंगीमध्ये पदाधिकारिणो मर्यादा । प्राश्वासनायां सतर्ककथा अभिलाष उत्कोचप्रथा ।

विनायनिकटे समयाभावः ।

जनमनने न सः केवलो वणिक् अपितु नाना हितैषिसंस्थानां सदस्यः । कतिपयलघुशिल्पानां संस्थापकः । कतियुवककल्याणसमितीनां संयोजकः । पुनश्च कियत्स्वायत्तशिक्षानुष्ठानानां सोजन्यसंपादकः । किन्तु निजायत्त-परपरायां सः स्वयं विभक्तव्यक्तित्वम् ।

।

अट्टशलेतः अट्टशुलिन्तरम्...एकविपणीतः अपरविपणीमिति विहरणे विलासी दूरचरः । संपर्के जनाः अनेके स्नेहे मधुशाला साक्षात् गुहाभ्भरी । निर्बन्धे केवलं धनम् निजस्वमिति देहस्य परिच्छदः । गृहमिति अनेकिको शय्या । जीवने सत्यमनेकान्तम्

गृहपरित्यागात् परं न तथा प्रभावो गृहस्य तदुपरि । गृहे के सन्ति ? किमर्थं सन्ति ? किं कुर्वन्ति...? सर्वमेतच्चिन्तयितुं तस्य अवसरो नास्ति । यदा गृहकथा मानसमायाति तदा स क्रुध्यति तथापि भगिनी रजनी तस्य भावनापथम् अवरुणद्धि गृहपरित्यागसमये सा कियती कातरा नासीत् ?

तस्य मनसि एवमासीत् यत् सः रजनीं कस्मै प्रदास्यति । किमद्यत्वे विधवायाः तारतम्यम् ? जनो जनुर्लभते । म्रियते च संसारार्थं संपर्कः । आनन्दाय च उपभोगः । यदि कश्चित् अकस्मात् म्रियते तर्हि तस्य उपभोगस्य समाप्तिः । तस्यैव संपर्कं स्मृतिरूपेण प्रपूज्य का वा किमर्थं दुःखमनुभवेत् ? कथं च तदर्थमात्मानं समर्पयेत् ? जनस्तु मृतः । संस्क्रियानन्तरं किं वा अवशिष्यते...? एतदर्थं स्त्रीजनो नितरां पीड्यते ? पुरुषस्तु यत्र कुत्रचित् नवीन संपर्कं स्थापयति । स वा पत्नीकृते किम् उत्सृजति ? किं च स्मृतिरूपेण संचिनोति ? यदि पुरुषः एवमाचरति तर्हि स्त्री किमर्थं सीदेत् ?

किन्तु रजन्याः पुनर्विवाहविषये पितुः सम्मतिर्नासीत् । स विलासस्य प्रस्तावं प्रत्याख्यातवान् । तस्य चक्षुषा समाजः संकीर्णः । तथाकथितसमाज-पण्डिताः वाक्यवीराः । जनश्च स्वार्थी अद्यत्वे यदि कश्चित् किंचित् अननु-मतम् अङ्गीकरोति तद् धनलोभेनैव । न कश्चित् जीवनस्य गुरुत्वमनुभवति

एषु विषयेषु चिन्तयित्वा कालक्षेपं न सहते विलासः । विचारोऽपमधुना न तदुपरि । रजनी जानाति सा किमुपास्ते ? पिता च जानाति रजनी भाग्ये किमस्ति । कस्यचिद् वस्तुनः संज्ञान्वेषणं वा विशदविवरणं वा तन्निकटे वृथा । अद्यतने प्रवाहे यदायाति तत् सर्वस्वम् तस्य व्यसने घटनार्थं प्रतिक्रिया मूढता तस्य च दर्शने स्वयं सः सम्राट् । अन्यत् सर्वं प्रकीर्णम्...असंगतम्... असंहतम्...अस्तव्यस्तम्... समूहलक्ष्ये न तस्य विश्वासः । परं यत् स विश्वसिति तदेव तस्य लक्ष्यम् ।

शम्पा विलासमनुसरति ।

विलासस्य वचने शम्पा एव सरस्वती । अतः साऽपि तस्य प्रशंसायी निजवीणां नदति तमन्वेषयति साक्षात्कारे च आत्मानं प्रीणाति । एकान्ते उपविश्य रहस्यं सम्भवयति । बन्धुतावर्णनाय सा एवं प्रवर्तते येन घनिष्ठ-तमा भवेत् ।

विलासमन्वेषयन्ती एकदा सा विलासस्य ग्रामे उपस्थिता । ग्राम्यपरिवेशे सा अभिनवा नागरी । ग्रामपथे तदुपरि अनेकदृष्टिः । ललनानां कटाक्षे तस्य वेशशैली चर्चाविषयस्य उद्दीपिका । अल्पशिक्षितानां कर्णजपेषु सा सम्पा । शिक्षितानाम् उपेक्षावचने सा नागरी । रक्षणशीलानां वेशकुण्ठये सा दुष्कुलीना । दिनजीविनां साधारणचिन्तायां सा परकीया परदेशिनी ।

कुलमणिः शङ्किताः ।

शम्पा अपृच्छत् ।

इदं विलासबाबोः गृहम् ?

कमन्वेषयसि भवती ?

अत्र विलासबाबुः अस्ति ?

स तु नास्ति । किं कर्म तन्निकटे ?

कार्यमासीत् । किन्तु...

उपविशतु भवती ।

कुलमणिः मुखं विवर्त्य सम्बोधितवान् ।

रजनि — ! रजनि — !

मुर्मुः उपस्थितः ।

अरे — ! मुर्मो — ! जलं देहि । देवी । देवी पादं प्रक्षालयतु ।

रजनी उपेक्षया न्यवारयत् ।

नहि... नहि — । माऽस्तु । मम समयो नास्ति । अहं सद्यः प्रत्यावर्त्तिष्ये ।

समयेऽस्मिन् रजनी उपगता । प्रसरसमुखे तस्याः शान्तिरतिः । वसने सात्त्विक द्युतिः । वचने विलासो निरुपाख्यः । दृष्ट्यग्रे व्यसनम् अवस्तु । तथापि मनसि स्पर्धिनी आसक्तेः काचित् लिप्तरेखा । विनीतभावेन सा उक्तवती ।

आगच्छतु भगिनी । अन्तरागच्छतु ।

किञ्चित् अन्तरागम्य शम्पा दाम्भिकतया अवदत ।

मम तु बहुकर्म....। अवसरो नास्ति ।

मनाग् उपविशतु ।

शम्पा आसने उपविश्य अपृच्छत् ।

विलास बाबुः महिलामङ्गलसमितिविषये किंचित् उक्तवान् वा ?

विलासबाबुः ...? महिलासमितिः... ? स तु बहुदिनात् गृहमिदं परित्यक्तवान् ।

कदा नागच्छति ?

अत्र तस्य किं वा कर्म ... ?

तर्हि भवती —

अहं तस्य भगिनी ।

भवत्या अपि समितौ नान्तर्भावः ?

न जाने कासौ समितिः ।

भवादृशीनाम् अनाथानां कृते इयं समितिः । अहम् एतस्याः सम्पादिका । विलासबाबुः संस्थापकः । अत्र विधवानां पुनर्विवाहः । अनूढानां विवाह-व्यवस्था । दीनरमणीनां च पुनः संस्थापना — इत्यादयः प्रकल्पाः स्वीकृताः । भवती अपि अत्र योगदानं करोतु ।

क्रमशः

# पश्यन्तु अद्य कलिकौतुकानि

आचार्य श्याम लाल शर्मा
व्याकरणाचार्य (एम. ए. संस्कृत)

★

यदा मुकुन्दो भगवान् क्ष्मां त्यक्त्वा स्वपदं गतः ।
तद्दिनात् कलिरायातः सर्वसाधनबाधकः ।। इति
(श्री मद्भागवत महात्म्ये— २-६६)

तत्र कलिकालस्य कीदृशानि चमत्काराणि कार्याणि वा ? इति ज्ञानाय जायते जिज्ञासा कलि खलु सर्वसाधनबाधक एव । अद्यत्वे उत्तरोत्तरं वर्धते कलिकालस्य प्रभावः । कलिकाले संघर्षस्य लौकिकतायाः, राष्ट्रियतायाः, जातीयस्वार्थस्य प्रभुत्वम् । आचारस्य ह्रासोऽपि नितरां संजायते । आध्यात्मिकभावना शून्योऽद्यतनीयो मानवः ईदृशः स्वार्थपरायणः संजातः, यत् स अनेकेषु पापकर्मसु प्रवृत्तः स्वाधिकारस्य प्राप्त्यर्थं पराधिकारस्य हननमपि करोति । विवेकशून्यो मानवः धर्मादपि ग्लायते, सर्वमनोरमां शान्तिमपि दूरत एव नमस्करोति । उक्तं चापि श्रीमद्भागवतस्य महात्म्ये श्री पद्मपुराणान्तर्गतभक्तिनारदसमागमे

नापश्यं कुत्रचिच्छर्म मनस्संतोषकारकम् ।
कलिनाधर्ममित्रेण धरेयं बाधिताधुना ।।१।
सत्यं नास्ति तपः शौचं दयादानं न विद्यते ।
उदरम्भरिणो जीवा वराकाः कूटभाषिणः । इति ।
(श्री मद० महात्म्ये १-३०-३१)

सत्ययुगे मानवः धर्मपरायणः कलौ तु मानवः अर्थकामयोर्दासः । येन केनाप्युपायेनार्थसञ्चय एवाद्यतनीयस्य मानवस्य लक्ष्यं जातम् । उक्तञ्चापि श्रीरामचरितमानसे तुलसिदासेन—

सोई सयान जो परधान हारी जो कर दम्भ सो बड़ आचारी ।
जो कह झूंठ मसखरी जाना कलिजुग सोई गुणवन्त वखाना ।।

कलिकालप्रभावितजनाः वेसिद्धान्तस्य स्वादेशस्य, वे प्रियजनस्य, हत्ययाऽपि न विरमन्ति। किं बहुना कलिदावानलेनाद्य सर्वसाधनं भस्मतां गतम्। सुललितो तं श्री मद्भागवतस्य माहात्म्ये कविना

न योगी नैव सिद्धो वा न ज्ञानी सत्क्रियो नरः।
कलिदावानलेनाद्य साधनं भस्मतां गतम्॥

(श्रीमद्भागवतमहात्म्ये १:४-३५)

पित्रो प्रति आस्था तु तिरोहिता एव श्रवणकुमारस्य कथा तु पुस्तकेष्वेव, पित्रोश्चापमानं सार्वत्रिकं दृश्यते। समाचारपत्रेषु प्रतिदिनमेतद्विषयिका घटना: प्रकाश्यन्ते। 'मातृ देवो भव। पितृ देवो भव। आचार्य देवो भव। वेद अनुच्य आचार्यो अन्तेवासिनं अनुशास्ति। सत्यं वद धर्मंचर स्वाध्यायान् मा प्रमदः।" परमद्यत्वे तत् विपरीतम्, छात्राणामनुशासनहीनताया धर्मास्तु सर्वत्रानुदिनं समाचारं पत्रेषु प्रकाश्यन्ते। क्वचिद् प्रासादानां ग दी पनम्, क्वचिद् गुरुजनेषु यष्टिकानां प्रहार:। गुरुजनाऽप्येतादृशाः ये शिष्येभ्यो धनमपहरन्ति, ते परशोकं न निवारयन्ति। सुललितमक्षरैरङ्कितं रामचरितमानसे—

गुरुसिष वधिर अंध का लेखा। एक न सुनई एक नहिं देखा।
हरहि सिष्य धन सोकनहरई। सो गुरु घोर नरक महुं परई॥

(उत्तरकाण्ड दोहा ९८ अग्रे)

"श्रद्धया फलमश्नुते" इति कथनं तु प्रवचन मात्र मन्यन्तेऽद्यतनीयाच्छात्राः।

आधुनिकशिक्षया दीक्षिता नार्यस्तु कृत्रिमप्रसाधनैरात्मानं प्रसाध्य इत ततो निर्लज्जमटन्ति। "लज्जा पुरुषस्य भूषणम्" इति घोषणां कुर्वन्ति। तुलसीदासेनोक्तं रामचरितमानसे

अबला कच भूषण भूरि छुआ। धनहीन दुःखी ममता बहुधा।
सुख चाहहिं मूढ़ न धर्म रता। मति थोरि कठोरि न कोमलता॥

(उत्तर काण्ड दोहा १०१ अग्रे)

अबला पतिव्रतस्य नियमान् श्रुत्वा हसन्ति। सीतासावित्र्यानसूयानां कथामाकर्ण्य पतिव्रतापालने अरुचिं प्रकटीकुर्वन्ति। तासां प्रसाधनानि आधुनिकवेषभूषाश्च पुराषानपि लज्जयन्ति। अलमिति परं नटस्य कपिरिव नृत्यन्ति नरा: नारीणामिङ्गिते। उक्तं चापि श्रीरामचरितमानसे —

"नारी विवस नर सकल गोसाईं।
नाचहिं नर मर्कट की नाईं॥"

हतभाग्याः स्त्रियो गुणनिधि सुन्दर पति परित्यज्य परपुरुषान् सेवन्ते। "कोर्ट मैरिज" तथा "टैंपल मैरिज" विधानेन स्व प्रेम विवाहं कृत्वा किञ्चिद् मिष्ठान्नं स्व मित्रेभ्यो वितरन्ति। एवं प्रकारेण कलियुगीयनारीणां विवाहो भवति। मर्य्यादां उल्लंघयन्ति न लज्जन्ते। केशप्रसाधनमेव स्त्रीणां भूषणम्। सन्तोषविवेकस्य सर्वत्राभाव:। श्रीरामचरिते स्पष्टमेव भणितम् –

गुण मन्दिर सुन्दर पतित्यागी<br>
भजहिं नारी पर पुरुष अभागी।<br>
सौभागिनी विभूषण हीना।<br>
विधवन्ह के सिंगार नवीना॥

पापानां मूल अयं कलिकाल: सर्वेऽधर्मपरायणा: वेदनिन्दकाश्च। दम्भिभि: स्वकल्पनया अनेके सम्प्रदाया: परिकल्पिता: उक्तं मानसे –

कलिमल ग्रसे धर्म सब, लुप्त भए सद् ग्रन्थ।<br>
दम्भिन्ह निज मति कल्पिकरि, प्रकट किए बहु पन्थ॥ इति<br>
(उत्तर काण्ड दोहा ९७)

किं वहुना एतादृशानि कलिकौतुकानि। इति

प्रवक्ता<br>
रामानुज संस्कृत महाविद्यालय पञ्जगाई<br>
जिला विलासपुर पिन १७४०१२ (हि. प्र.)

# हिमाचलप्रदेशस्य देवताः

श्री चक्रधारी शास्त्री साहित्याचार्यः

अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः
पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः ।१।

हिमाचल प्रदेशः भारतस्य मुकुट इव शोभते अस्मिन् प्रदेशे कालिदासोक्त्या देवानां प्रत्यक्षत आवासाःसन्ति । अत्रत्या वैदिकाः पौराणिकाः ग्राम्याः जानपदाः क्षेत्रीया उपक्षेत्रीयाः वहवो देवताः प्रसिद्धा सन्ति । कांगड़ा मण्डले देवीनां बहूनि मन्दिराणि जगत् प्रसिद्धानि सन्ति यथा वज्रेश्वरी कांगड़ा ज्वालामुखी । ज्वालामुख्यां चिन्तपूर्णी (छिन्नमस्ता) ऊनायां कांगड़ामण्डले च चामुण्डा नयनादेवी प्रसिद्धे स्थले स्तः ज्वालामुख्यां प्रत्यक्षतः जाज्वल्यमानं दिव्य ज्योतिरहर्निशं दरीदृश्यते एतच्चमत्कृति पूर्णं रहस्यमद्यावधि रहस्यमेवास्ति । सम्राजा अकबरेणात्र स्वर्णछत्रमर्पितमासीत् तदद्युनापि तत्र विराजते । एतानि स्थलानि श्रूयते यत दक्षयज्ञविध्वंसानन्तरं शिवेन ददह्यमान देव्याः वपुः यज्ञ कुन्डात् उत्थाय परिभ्रमता यत्र तत्र भ्रामितं तत्र तत्र तस्या अंगानि यत्र तत्र पतितानि तान्यधिकृत्य देव्याः स्थानानि निर्मितानि चम्बामण्डले लक्ष्मीनारायणस्य प्रसिद्धं मन्दिरं सुशोभते । मनिमहेशे ब्राह्मपुरे च शिवस्य प्राचीनतमानि स्थानानि सन्ति । ब्रह्मपुरे प्राचीनं वृषभस्य वपुः चमत्कार पूर्णम् । साहू ग्रामेऽपि वृहदाकारं मन्दिरम् धर्मशालायां भागसूनाथ नामनि स्थाने शीतलजलस्रोतांसि दर्शकानां मनो मुग्धकारीणि सन्ति अत्रैव महामहिमदलाईलामायाः मन्दिरं निवासस्थानं चास्ति - यत्र बौद्धाः निजपद्धत्यार्ऽचनं कुर्वन्ति

अस्य प्रदेशस्य, सींङ्ग, पहाड़िया, गूगा, प्रभृतय ग्रामदेवताः विशेषरूपेण पूज्यन्ते सींङ्ग पहाड़िया देवते ध्वनिमाध्यमेन निजास्तित्वं प्रत्यक्षतः दर्शयन्ति एतयरुपासना आभ्यां सहवार्तालापं कृत्वा प्रश्नोत्तराणि प्रकटयन्ति-सींङ्ग देवता प्रस्तरप्रक्षेपेण आगमन् सूचनाः ददाति । क्षणेन च देश-विदेशयोः सूचनाः गृहीत्वा साधकाय समर्पयति स च पृछकेभ्यः प्रयच्छति ।

अन्ये नागाः नागिन्यश्च प्रदेशे जनानां कामनाः पूरयन्ति नूरपुर नगरस्य निकट एका सर्पदंष्टाः जनाः नागनीस्थाने विना केनाप्युपचारेण स्वास्थ्यलाभं कुर्वन्ति अत्र मृत्तिकाप्रसाद भक्षयित्वा नीरोगतामाप्नुवन्ति जनाः एतत् स्थानविषये सर्पचिकित्साव्याजेन प्रश्नानुत्तरयन्ती तत् कालीना

स्वास्थ्यमन्त्रिणी राजकुमारी अमृतकौर: लोकसभायां स्थानस्यास्य महत्त्वं स्वीचकार। २० विंशति वर्षपूर्वं मयाऽपि धर्मयुगे, सचित्र लेख: प्रकाशित आसीत्। कुल्लूमण्डले घटोत्कचस्य मातु: हिडिम्वाया: मन्दिरमति प्रभावपूर्णम्

उपरि वशिष्ठमहर्षे मन्दिरस्य समीपमेव शीतोष्णजलस्रोतांसि साकमेवैके स्थाने निर्गच्छन्ति - उष्णं जलं चात्युष्णंशीतल चातिशीतं-हिमाचलसर्वकारेण तस्मात् स्थानात् जलमाकृष्याधस्तात् अर्द्धक्रोशे निम्नस्थले पर्यटकानां सौविद्ध्यार्थं आधुनिकतमानि स्नानागाराणि निर्मितानि येषु वैदेशिका: सोल्लासं साश्चर्यं स्नान्ति जलक्रीडां च कुर्वन्ति मणिकर्णे कुण्डेषु क्षेपिता: तण्डुला: भक्तरूपेण वहिरागच्छन्ति।

तत ? समीपमेव बिजलीमहादेवस्य लिंगे प्रतिवर्षमेकवारं विद्युत् पतनं तेन च लिंगविखण्डनं भवति - पश्चात् नवनीतेन लेपिता लिंगांशा: पुन: तादृशा: भवन्ति आश्चर्य्यमेतत्

हिमाचलेऽद्यापि शिव-शाक्तपीठानि बाहुल्येन सन्ति तथाऽपि वैष्णवपीठान्यपि सन्ति कुल्लूनगरे रघुनाथ: सर्वेषां प्रस्तरदेवानामधिपतिर्मन्यते दशहरापर्वणि शतश: ग्रामदेवा: सेवमाना स्कन्धेष्वारूह्य रघुनाथं नमन्ति-निरमण्डस्थानमपि परशुरामभगवत: पीठम् तत्र परशुरामेण दशसहस्रनरमुण्डानि परशुणा छित्वा एकस्मिन्स्थाने भित्तिरूपेण स्थापितानि तानि नरमुण्डानि सहस्रवाहोराक्रमणे तस्य सैनिकानामासन् तदैव तत् स्थानं नृमुण्ड, इति प्रचलितम् मलाणाग्रामे जमदग्नेराश्रम आसीत् तत्र सहस्रवाहुनाऽऽक्रम्य परशुरामपितु: शिरश्छित्वा तस्य कामधेनुरपहृता।

परशुरामेण पितुर्वधसूचनां लब्ध्वा सहस्रश: सैनिका: व्यापादिता: सहस्रवाहोरपि वाहवश्छिन्ना: स च यमलोकं गत: :

रामपुरवुशहरे वाणासुरराज्यमासीत् यत्र कृष्णवाणासुरयो: तुमुलं युद्धमभवत् - शिवेनापि वाणस्य सहायतां कुर्वता यादवानामग्रे पराजयं स्वीकृत्य वाणासुरकन्या उषा अनिरुद्धाय समर्पिता याऽनिरुद्धं कामयतेस्म वाणासुर: तस्मिन् भूखण्डेऽद्यापि 'वेन सुर' नाम्ना ग्रामदेवता प्रसिद्ध: पूज्यते जनै:

द्रष्टव्यं माघे
वाणाहवव्याहतशंभुशक्तेरासत्ति मासाद्य जनार्दनस्य —
शरीरिणा जैत्रशरेण यत्र नि:शकमूषे मकरध्वजेन ।।
इति हिम देवानां संक्षिप्तं वर्णनमिदम्—

— कल्पद्रुम सम्पादक:
नूरपुरम् हि० प्र०

# वेताल—उपचारः

शुकदेव शर्मा मुनिः

★

गीता—ध्यान-परो नित्यं, गुरु-वाणी-परायणम् ।
सोदरः सोदरं हन्ति, मन्ये; वेताल-चेष्टितम् ।

गुरु-वाणी—व्रती सन्तो, धर्म-दीक्षा—परायणम् ।
निहन्ति भ्रातरं भ्राता, मन्ये; वेताल—चेष्टितम् ॥

अल्ला राम — जपाधारः सत्तनाम—परायणम् ।
हिनस्ति प्राणिनं प्राणी, मन्ये; वेताल चेष्टितम् ।

धर्म-ग्रन्थास्तु सर्वेऽपि, प्रभुमेकं प्रचक्षते ।
विवदन्ते मिथोमूढा, मन्ये; वेताल — चेष्टितम् ।

मातृ-स्वसृ-सुतावन्तो, महाबोधाः सुधार्मिकाः ।
पातयन्ति सतीनारी, मन्ये. वेताल — चेष्टितम् ।

★

भाषा—प्रान्तगताः-स्वार्थी, जाति-धर्म-गता स्तथा ।
गता ममेति भावाश्च, वेतालो न गमिष्यति ?

वर्ण-वर्ग-गता भेदा, श्रम—कर्म—गतास्तथा ।
गताः स्वामि—श्रमि—भावा, वेतालो न गमिष्यति ?

जनोवत्परदारासु, परवित्तेषु नागवत् ।
उदारः सर्व-धर्मेषु, वेतालः किं करिष्यति ?

गीता — जप — कुरानेभ्यः, कृत्वा, शपथमाश्रयेत् ।
गान्धि—शस्त्रं यदि लोकः, वेतालः किं करिष्यति ?

भंगा—गांजा-सुरा-बीडी—जरदा—गोलीनाकृते ।
तिलाञ्जलिर्जनैर्दत्ता, वेतालः किं करिष्यति ?

★

सन्तो महान्तो गुरवो, ग्रन्थिनो वेद—पाठिनः ।
एकं मञ्चं यदा याता, वेतालस्तलमेष्यति ॥

प्राच्या उदीच्याः पाश्चात्या, दाक्षिणात्याश्च भारताः ।
अनेकेऽप्येककर्ता प्राप्ता वेतालस्तलमेष्यति ॥

अकर्मिभ्यो यदा कर्म, वृद्धेभ्यो वृत्तिरुत्तमा ।
नारीभ्योऽपेक्षितं स्थानं, वेतालो बिलमेष्यति ॥

पठकाः पाठकाश्चैव, प्रमुखा राष्ट्र—नायकाः ।
परस्परं न द्रुह्यन्ति, वेतालो बिलमेष्यति ॥

सोदरौ जनको सेव्यौ मिथो प्रेम परायणौ ।
जायापती धनपती, वेतालो बिलमेष्यति ॥

— प्राचार्यः- रा, सं. कालेज नाभा

एक: परिचय:—

# ताराशशाङ्कम्

प्रा. रूपनारायणपाण्डेय:

★

वसुन्धरायां भारतस्यानेके महनीया विद्वांस: कवयश्च समुद्भूता: । तेषु श्री मद्भागवतार्थप्रतिपादनपरमतिरमणीयं विश्रुतं स्तोत्रं नारायणीयं रचितवान् केरलदेशोद्भव: श्रीमान् नारायणभट्टपाद: तस्यैव पण्डितवर्यस्य सुपुत्रोऽभूत्—श्रीकृष्णकवि: । ताराशशाङ्कं तस्यैव कृतिरस्ति, यथा स: स्वयमेव वदति ताराशशाङ्के —

श्रीकृष्णराजकरुणैकनिकेतनेन, कृष्णेन भागवत इत्यभिशब्दितस्य ।
नारायणस्य तनयेन समीरितेयं तारासुधाकरकथा विदुषां मुदेऽस्तु ॥
(ता, २०६)

ग्रन्थोऽयं निर्णयसागरमुद्रणालयात् १९३७ तमे ख्रिष्टाब्दे काव्यमालाया: चतुर्थे गुच्छके, तृतीये संस्करणे, संशोध्य प्रकाश्यं नीतो मया दृष्ट: । अस्य ग्रन्थस्य प्रणयनं कदाभूदिति नियतं वक्तुं न शक्यते । श्रीमतो नारायणभट्टपादस्य पुत्रत्वेनास्य काल: सप्तदशतमे शतकेऽनुमीयते । खण्डकाव्येऽस्मिन् षडधिकं शतद्वयं पद्यानि विद्यन्ते ।

गणपति-वामदेव-भृङ्गदेवादीनां वन्दनानन्तरं ताराशशाङ्कस्येत्थं प्रणयपूर्णा कथा खलु वर्धते—कलात्मा राकेशो राजसूयं विधातुमुपचक्रमे । तदुत्सववीक्षणोत्सुकहृद: सकला जना: सपद्यभ्यगमन् । तस्मिन् सौन्दर्यमन्दीकृतमदनमदप्रभावे श्रीसनाभौ (चन्द्रे) सपदि सर्वासाम् अङ्गनानां कामकृष्टा दृष्टय: समपतन् । कापि तं लावण्यनिधिमपाङ्गै: आपिबन्तीव बभौ । अहो लक्ष्मी:, अहो रूपम्—इतिकाचित् समालपत् । काचिद् मृगीव व्यलसत् । काप्यालिङ्गितुं संप्रवृत्तेव रेजे । काचिद् उद्यत्केलिमनोरथोत्सवरसोल्लासा क्षणं बभासे । परपुरुषमुखं न वीक्षणीयम्—इति कापि वक्ति स्म । काचित् कुचोज्जृम्भणात्त्रुट्यन्तीं कञ्चलीं विगलितां च नीवीं नावैक्षत । एवं तासु स्मरेणाकुलितासु तस्योडुनायकस्यापि स्मारो विकारो बभूव । गुरुनितम्बिन्या: सौन्दर्यं संपश्यन् स एवं हृदयेऽकरोत्—को नाम रमणीयकमेतस्या वर्णयेत् । एकैकमपि यदङ्गं प्राप्ता दृशमन्यतो न विमुञ्चति । अस्याश्चलकुन्तललाञ्छितेन मुग्धस्मितेन मुखेन समताम् अधिगन्तुमेव पाथोरुहं मिलिन्दै: परिचयं कुरुते । सकलभुवनमोहनस्याङ्गजस्य यत् केलीसदनमिति ब्रूवते, इदं जघनममृतम्, यतो मनो मे पुनरतो न विनिवर्तते । मम हृदयमस्यामेव, नूनम् अस्या मयि सक्तम् । सुमनसो निन्दन्तु, मां कुलाद् वा बहि: कुर्वन्तु ।

परम् अनया सहृदयया सह क्षणं वापि वस्तव्यम् एवं विचिन्तयन्नेव तत् सवनं समापयत्। तारासंसक्तचेतसः सुधारुचेर्यद् अवभृथस्नानमभूत्, स एव स्मारदीक्षाभिषेकोऽभूत्। अन्योऽन्यवीक्षणपदं मुहुरीक्षमाणौ ताराविधू क्षणम् आत्तलज्जौ व्यलसताम्। मयि दयामयं कटाक्षं प्रसारय' इत्याकुलं वदन् चन्द्रो यदा गुरुनितम्बिनीमुपससार, सा कामिनी शनैः 'अङ्गजप्रिय ! किम् इदम् आचरसि' इति बहुशो वदन्ती अपससार। सत्यमपसरन्तीं ताम् अन्तरीय पदयोर्यत् प्राग्रहीत्, तेन स्मरसुहृद्, 'मामा' इति व्याहरन्तीं तां निजचेतःकामनाकल्पवल्लीम् अमनुत। को नाम इतिसौख्यं तद् वर्णयेत्, यत्र नखदन्तक्षतान्यपि उल्लासाय भवन्ति। स तया सह क्वचिद्रम्ये हर्म्ये, क्वचिद् नदीकूलपुलिने, क्वचित् कुञ्जे, क्वचिदपि लीलाशैलेऽहरहो व्यहरत्। मृगीदृशां बाहुल्येन ऐकान्त्यघातुकः सापत्न्यकलहः प्रादुरासीत्। अनेकरमणीकता कस्य नाम सुखाय ! तं दुष्टं जानन्तः केऽपि तल्पतः। स्वस्वलोकान् निन्युः युवतिजनैः सह।

यासु तासु वनितासु तानि लीलास्थलानि दृष्ट्वा शश्वत्ताराविलास-रसिकः स विललाप—एतद् भवनं तदेव, वनमेतदेव, अयं शैलोऽपि, असौ सौधोऽपि सर्वेऽपि - अहो ! तया प्रियया विरहितं न भान्ति। तच्चिन्तयामि-रहसि हन्तान्तरीये निजपाणिनखाग्रकान्तिसञ्छादिते जघनधाम्नि, पुनः माम् अंशुकापनयनाय चलाग्रहस्तं विलोक्य दरमीलिताक्ष्या हसितम् ' इति बहुविधं स्मारं पुर इव चरन्तीतां मुहुर्ध्यायं ध्यायं सोऽसमोन्मादे व्यलसत्।

तारापि चन्द्रवियोगखिन्ना श्लथस्तनी कथञ्चिद् नाकं प्रययौ। तां वेपमानां मार्गश्रमेणाकुलितां विदित्वा गुरु-दस्रौ (अश्विनीकुमारौ!, पश्यतम्-इत्युवाच। 'नाडीषु धमं विस्फुरति, तनौ च वायुः, शरीरजगदोऽवाच्यरीतिः।' तां व्यालोक्य सुराणां भिषजौ जगदतुः।

'कदा नु सस्मितं तद दयिताननमवलोकये ? कदा च त्रुटितकञ्चुलीस परिरभे ? कदा तदुरसि स्वपिमि ?' इत्युदञ्चितमनोरथा सा न निमेषं विदधे। तां सखी प्राणसमावदत्–'तवेयान् - इति संतापं के निर्णेतुमीशते, यस्य निर्वर्णनेऽपि नः सकलाङ्गानि वलन्ति। सुमतिः सततं सुखाप्तये यतेत, हि क्रियावती साह्यं दैवं कुरुते। तद् अचंप त्वं मनोभवम्। स एव स्वकीयं तापम् अपोहितुं प्रभवति।' इति वचनं सख्याः समाश्य सः शनैः रहः स्मरं पूजयितुं प्रातिष्ठतोद्यानम्। सख्या सह कथञ्चिदुपवनं यान्ति, पदे पदे विमुह्यन्ती सा विविधं विललाप स्मरार्तौ विवशश्चन्द्रोऽपि शनकैः पुरमैन्द्रं प्रातिष्ठत। स दैवयोगतः तया प्रियया स्थितं वनं तदागात्। तत्र प्रविशन् तारायाः करुणां गिरं शुश्राव, मदनाग्नितापविशोषिताङ्गीं स्वरमात्रबोध्यां प्राणप्रियाम् ऐक्षत।

रा० इ० का० सितारगञ्जः,
नैनीतालम्, उ. प्र.

# आतङ्कवादः पुनरुग्रवादः द्वावेव संसार-विनाशकौ तौ

रामेश्वरदत्त शर्मा

अयि भारत-वर्ष-वासिन ! यवना हि दू षिखा खिलाजना ★

क्रियते निज-बन्धु-हिंसनम् कथमद्यास्तमिता विवेकिता

परतन्त्रतया स्ववृत्तयो, गतगर्वाः पर-संस्कृतौ रताः

निजबन्धु-विशेष-दूषका, शतशो वर्षमिता वय यत ॥

सुचिरात् समयात् पृथक्चरा रिपु - छद्मेन विभिन्नतां गताः ।

अरिणा त्वरया विमर्दिता, न वयं जागृमहेऽधुनाऽप्यहो ! ।

अलभन्त यदा स्वतन्त्रताम् सहभागे मिलिता न नायकाः ।

रुधिराश्रित-भेदभावतां, वयमालेभमहे द्विराष्ट्रकम् ।

स्मरत प्रथमं दशाननम, अनुजेनैव स घातितः पुरा ।

बल-बुद्धि - कला - विशारदो, बहु - सेना- परिवार - संयुतः ।

कुरु-पाण्डव - वीर - सैनिका, गृह - युद्धेन मिथ क्षय गताः ।

न तदा बलिनोऽभवन् पुनः, सकलं वैभवमस्ततां गतम् ॥

यदवो बहु संख्यकाः श्रुताः गृहयुद्धेन विनाशमाप्नुवन्

बहु-धान्य-धनादिकेन ते, परिपूर्णा अभवन् बलादिभिः ॥

जयचन्द नृपो व्यघातयत्, निजकं बन्धु गतीर्ष्यया यदा ।

शततो हि सदा वय गता, मुगलानां परतन्त्रतां तदा ।

पुनरद्य त एव शत्रवो, भवतां राष्ट्र - विखण्डनं पुनः ।

जनता - विकृतिं विकुर्वते निज षड्यन्त्र - बलैः सुयोजितैः ।

अबला विधवा निराश्रिताः पितृ - हीनाः शिशवो रुदन्ति ये

करुण रुदनं विलोक्य हा ? शतधा किन्नु हृदा न भिद्यते ॥

महती कटुता विवर्धिता, ग्रसते सौहृदयं परस्परम्

गमना - गमने विशङ्किते, भवनान्निसरणं सुदुष्करम् ॥

बलवानबलं हि रक्षति, विपरीतं बहु चात्र वर्तते ।

असुरस्य वधे हि शूरता, जनसामान्यवधे क्व वीरता ॥

न कदापि जना धरातले, सफलोऽभूत् प्रतिहिंसया सखे

समता-सहभागिता-दया— क्षमता - शान्ति - सुखैः सुजीवनम् ॥

जगती - जन - जीवनं नरम्, सकला एकपथेन यान्ति ते ।

इह भेद-विखण्ड-नैकता, विविधा भिन्नपथा हि देहिनः ॥

समये ननु जाग्रतु जना, उत नो चेत् परतन्त्रता पुनः ।

पशुवद् भविता हि जीवनम्, न तदा हिन्दुसिखौ न मुस्लिमः ॥

— ३ विकास नगर भिवानी

# पण्डितचारुदेवशास्त्रिप्रणीतः
# श्रीमद्भागवतभाषापरिच्छेदः

श्री कृष्णलालः आचार्यः

साध्वसाधुप्रयोगान् यो निश्चितवान् पदोदधौ ।
नवपाणिनये तस्मै प्रणामाञ्जलिरर्प्यते ॥

"विदुषां भागवते परीक्षा" इति यदुच्यते तदनुसृत्यैव वक्तुं शक्यते पं० चारुदेवसदृश एव कश्चिद् विपश्चिद् व्याकरणशास्त्रमर्मज्ञः पदप्रयोगविचक्षणः श्रीमद्भागवतस्य महापुराणस्य भाषां परीक्षितुं क्षमः कृताधिकारश्च अस्यां परीक्षायां तत् पुराणं प्रति कथमप्यवमानना नास्ति हेतुः । वस्तुतः पुराणान्तरेषु यद् भाषासारल्यं यच्च प्रसादमाधुर्यं तदत्र नैव दृश्यते, इति किमस्य कारणं स्यादित्यन्वेष्टुमेव पण्डितप्रवरस्येयं प्रवृत्तिः । अनया परीक्षया स्पष्टमेतत् सिध्यति यदस्य पुराणस्य कर्ता न तु भगवान् व्यासोऽपित्वन्य एव कश्चिद्भगवद्भक्तो येन कुटिला, व्यामोहजननी क्लेशकरी दोषपूर्णा भाषा प्रयुक्ता सर्वं च स्वकार्यं भगवते व्यासाय समर्पितम् ।

अस्य ग्रन्थस्य बीजमेतन्नामके विश्वेश्वरानन्द - इण्डोलोजिकल - जर्नल-शोधपत्रिकायां द्वाविंशतिवर्षपूर्वं प्रकाशिते प्रणेतुर्निबन्धे दृश्यते । सुहृदामाग्रहेण पुनः सकलभागवतपरीक्षारूपोऽयं ग्रन्थरूपेण परिणतः ।

श्रीमद्भागवतस्य द्वादशस्कन्धात्मकं रूपमनुसृत्यैव तद्भाषापरिच्छेदात्मकेऽस्मिन् ग्रन्थेऽपि द्वादशाध्यायाः सन्निवेशिताः । परमेष्वध्यायेषु विषयविवेचनं भागवतस्कन्धानुसारि नैवास्ति. अत्र तु भाषादृशा क्रमशः अप्रसिद्धाः शब्दा अप्रसिद्धाश्चार्थाः व्यवहारदूषणम्, रूढि प्रत्ययनादरः, अध्याहारबाहुल्यम्, अधिकपदत्वम्, क्लिष्टान्वयः, अपाणिनीयाः प्रयोगाः, अस्थान – उपसर्गयोग, दुर्घटनाः समासाः, छन्दोभङ्गभयाच्छन्दोवैरूप्यम्, छन्दोमात्रगोचरा शब्दाः अनौचित्यम् इत्येते दोषज्ञापका विषया विवेचिताः । सर्वत्रैव प्रणेत्रा पुराणवाक्यान्युद्धृत्य सम्यक् सप्रमाणं स्ववचः परिपुष्टम् । एतच्च कर्त्रा ग्रन्थादौ स्पष्टमुच्यतेऽवतरणिकायाम्– 'सतो दोषान्नोपेक्षामहे, असतश्च नोत्प्रेक्षामहे" इति । अस्यायमभिप्रायो यत् मिथ्यादोषारोपणं न ग्रन्थकर्तुः लक्ष्यम् । साध्वी सात्त्विका च तस्य प्रवृत्तिः शास्त्रानुसारिणी ।

प्रथमाऽध्याये प्रदर्शितं कथमप्रसिद्धाः शब्दा अप्रसिद्धेऽर्थेषु च प्रयुक्ता दोषजटिलतां चोपजनयन्ति । "मुहुरहो रसिका भुवि भावुकाः" इत्यत्र भागवतवाक्ये भावुकशब्दो भावनायुक्तसहृदयार्थे प्रयुक्तः, परन्त्वन्यत्र संस्कृत-साहित्ये कल्याणे ऽर्थेऽस्य प्रसिद्धिः । स्पष्टं ह्यत्र परवर्तिभाषाप्रभावो दृश्यते यथा हिन्द्यां सहृदयार्थेऽस्य प्रयोगः 'तदिदमर्वाक्कालतामस्य पिशुनयति ।" अन्यत्र भागवते व्यपतद् विषोदे इत्यत्र 'विषोदे' इत्यस्यार्थः विषयुक्ते उदकेऽस्ति उदशब्दः पुनः स्वतन्त्रा प्रकृतिर्नास्ति । शताधिकपृष्ठात्मकोऽयं प्रथमोऽध्यायोऽस्य ग्रन्थस्य बृहत्तमोऽध्यायः ।

द्वितीयाध्याये व्यवहारदूषणोदाहरणानि विवेचितानि । यत्तदोर्नित्यः सम्बन्धो दृश्यते, परन्तु भागवतकार इमं सम्बन्धं नाद्रियते । प्रथमपद्य एव जन्माद्यस्य यतः... यत्र त्रिसर्गो मृषा । ...... सत्यं परं धीमहि इत्यत्र यतः इत्यस्य यत्र इत्यस्य च शब्दस्य पूर्तौ तच्छब्दप्रयोगो न क्रियते अन्यच्च पुराणकर्ताऽयं बहुत्र लोकप्रसिद्धं लिङ्गमपि न प्रयुङ्क्ते । तद्यथा (महापुरुषगुणभाजनो महाभागवतः इत्यत्र अदपुरु-षान्तो भाजनशब्दः पुंसि प्रयुज्यते, नपुंसकेऽस्य सामान्यव्यवहारः जगाद सोऽस्मद् गुरवेऽन्विताय पराशराय बृहस्पतेश्च इत्यस्मिन् वाक्ये 'पराशराय' इत्यत्र चतुर्थी बृहस्पतेः इत्यत्र षष्ठी इत्येवं उभयोः शब्दयोः विभक्तिभेदस्य किमुद्देश्यमिति नावगन्तुं शक्यते ।

तृतीयेऽध्याये रूढार्थान् प्रति भागवतकारस्यानादरः प्रदर्श्यते । (सारङ्गाणां पदाम्बुजम् ) इत्यत्र सारङ्गाः कृष्णभक्ता 'सारं कृष्ण गायन्ति' इति व्याख्याता । कोषेषु पुनः रूढ्यां सारङ्गशब्दः हरिणादिनामसु पठितः ।

चतुर्थोऽध्यायो वाक्यपूर्तये बहूनां परित्यक्तपदानामध्याहारस्य आवश्यकतां तथा चो पद्मां दुरूहतां वर्णयति । यथा देव्यो ह्रिया परिदधुर्न सुतस्य चित्रम् इत्येतद् वाक्यं वस्त्राणि, दर्शने, इदम् इत्येतेषां शब्दानामध्याहारेणैव सुस्पष्टमेवं ज्ञातुं शक्यते देव्यो ह्रिया वस्त्राणि परिदधुर्न तस्य दर्शने इदं चित्रम् । अध्याहारेण विना अस्पष्टोऽर्थोऽस्य ।

पञ्चमेऽध्याये प्रदर्श्यते यत् कथमर्थं वक्ते सत्यप्यतिरिक्ताः शब्दाः साहित्याचार्य-दृशा दोषाय कल्पन्ते । उदाहरणार्थं (शिवाय लोकस्य भवाय भूतये) इत्यत्र अन्तिमौ द्वौ शब्दौ समानार्थाविव, तयोरेकेनापि प्रयुक्तेन स एवार्थः सिध्यति ।

षष्ठाध्यायो भागवते क्लिष्टान्वयोदाहरणरूपः । अयं हि क्लिष्टान्वयो दुर्बोधता-मुपजनयति । तद्यथा (भिक्षवे सर्वमों कुर्वन्नालं कारेव चात्मने) (भा. ८-१९-४१) इत्यत्र किमभीष्टं वक्तुरिति नाववोद्धुं शक्यते ।

सप्तमाध्यायेऽपाणिनीयाः प्रयोगाः दृष्टिपथमानीता ग्रन्थकर्त्रा । पुराणान्तरेष्वप्य-पाणिनीयाः प्रयोगा लभ्यन्ते, परन्तु तत्र ते प्रवाहपतिता अकामतः कृताः, भागवते

पुनस्ते कामतः प्रकल्पिता इति जनयन्ति दोषम् । यथा (धात्वन्तर द्वादशम त्रयोदशम मेव च मा. १ ३-१७) इत्यत्र द्वादशत्रयोदशस्थाने द्वादशमशमत्रयोदशमेति प्रयोगः पाणिनिविरुद्ध केवलमत्रैव दृष्टो नान्यत्र अयोगोऽयं स्पष्टमेव ' नान्तादसंख्यादेर्मट्'' (पा० ५-२ ४९) इति शास्त्रातिक्रमः इत्येवमन्यान्यपि बहूनि उदाहरणानि सन्ति ।

अष्टमेऽध्यायेऽस्थान – उपसर्गयोग विवेचित सर्व उपसर्गा । सर्वमर्थं च द्योतयन्त्यपितु विशिष्टा उपसर्गा एव विशिष्टमर्थं द्योतयन्ति । (पदत्रयं याचमानः प्रत्यादित्सुर्हित्रविष्टपम मा० १-३-१९) इत्यस्मिन् वाक्ये प्रत्यादित्सुपदे प्रति-प्रयोगोऽस्थाने यत अन्न अर्थो भविष्यति येन कदाचित् स्वर्गं प्रदत्त, स वामन पुनः तमादातुमिच्छति इति । परन्तु नायमर्थोऽभिप्रेतः

नवमाध्यायस्य विषयोऽस्ति दुर्घटा समासा इति बहुव्रीहिसमासः समाना नाधिकरणानां भवति न तु व्यधिकरणानां क्वचिदेव शास्त्रे व्यधिकरणो बहुव्रीहिर-भ्यनुज्ञायते परन्तु भागवते यथेष्ट बहुव्रीहय प्रयुज्यन्ते अनपेक्ष्य शास्त्र च प्रयोगं च तद्यथा तद्व ग्विसर्गो जनताघविप्लवः इत्यत्र जनताघानां विप्लवो यस्मादिति विग्रह इष्यते । तथैव (परार्थैकान्तजीवितान् (भा. १०-२२-३२) इत्यस्य विग्रहः परार्थम् एकान्तेन नियमेन जीवित येषां ते ' नायं केवलं समानाधिकरणो बहुव्रीहिनं केवलं व्यधिकरणे नूतनो नृसिंहवत्समासावतार. "

दशमाध्याये भागवते कथं बहुषु स्थलेषु वृत्तभङ्गभवाच्छब्दवैरूप्यं दृश्यत इति वर्ण्यते । छन्दोनुरोधाद् भागवतकार गुर्वक्षरं लघयति लघु वा गुरूकरोति छन्दोभङ्गक्षण-धिया क्वचिदसौ किमप्यक्षरं समावेशयति वा लोपयति वा दृश्यतां तावदेतद् वाक्यम्-(एकोनविंशे विंशतिमे वृष्णिषु जन्मनो) (भा० १-३-२५) अत्र विंशतितम इति वक्तव्ये छन्दोऽनुरोधात् तशब्दं लुम्पति जानन्नपि तेन जायमानं वाग्भ्रंशम् " तथैव वर्तमानो वयस्याद्ये तत एतदकारषम्) (भा० १-६-५) इत्यत्र ' अकार्षम् इत्याबालं प्रसिद्धमववातं रूपमकारावापेन विरूपयति वृत्तभङ्गो मे मा भूदिति "
(पृ० ३११)

एकादशेऽध्याये विदुषा प्रणेत्रा ते शब्दा सङ्केतिता ये छ दोमात्रगोचरा सन्तो ऽपि भागवतकारेण लौकिका इव प्रयुक्ता केषाञ्चिच्छब्दानां वेदेऽन्योऽर्थो दृश्यते लौकिकभाषायामन्यः परन्तु भागवते वेदप्रसिद्धेष्वेवार्थेषु ते प्रयुक्ताः यथा दुग्धेमामो-षधीर्विप्राः (भा. १-३-१४) इत्यत्र । अत्र 'अदुग्ध' इत्यस्य स्थाने अडहितां दुग्ध' इति प्रयुक्तो यथा वेदे "छन्दस्यमाङ्योगेऽपि" इति सूत्रानुसारं सर्वत्राड्रहितस्य लुङः प्रयोगो दृश्यते अन्यत्र गोपीथशब्दो भागवते रक्षार्थे प्रयुक्तो यद्यपि वेदे ऽस्वार्थ पानमिति प्रसिद्धः । (किं मे कामाः सुरस्पार्हा मुकुन्दमनसो द्विजा (भा १ १२-६) इत्यत्र यः स्पार्हशब्दो दृश्यते स वेदादस्मात् पुराणाच्चान्यत्र लौकिके साहित्ये न दृश्यते ।

द्वादशोऽध्यायो भागवते प्रयोगानौचित्यं प्रकाशयति । उदार करणैवंशस्थेरकां कूटकृद्यथा (भा. १ ३-१८) इत्यत्र उपमेये वक्षसि सप्तमी, उपमाने एकामिति द्वितीया "इदमुपमानोपमेययोविभक्तिवैषम्यं विदग्धा न सहन्ते "

इत्थं द्वादशस्वध्यायेषु पण्डितप्रवरेण श्रीमता चारुदेवशास्त्रिणा सूक्ष्मेक्षिकया प्रतिशब्दं विवेचनं सर्वदृष्ट्या प्रवर्तितम् ग्रन्थोऽयं न केवल भागवतपुराणस्य भाषां विशदयति, अपितु भाषां सुष्ठुव्यवहारं च जिज्ञासमानानपि नियमान् सम्यग्बोधयति अहो, महानुपकारस्तस्य विद्वत्प्रमुखस्य . अद्भुत तस्य वैचक्षण्यमपूर्वश्च परिश्रमः । महति शब्दसागरं निमज्ज्य तेनास्मदर्थे सुष्ठुवाग्व्यवहाररत्नानि प्रकाशितानि । भागवतम् अवगाहमानैः शब्दमर्मजिज्ञासुभिश्च ग्रन्थोऽयमवश्यमनुशीलनीय ।

— विश्वविद्यालयीय संस्कृत विभागे, दिल्ली

# जघन्यापराधः

रचयिता —

चक्रधारी शास्त्री सा० आ० सम्पादक कल्पद्रुम

नेमितृश्च समारब्धा शिमलायां द्वन्द्व—घोषणा ।
शासकोर्वेश्च सूर्वेश्च चिन्ता प्रकटिता पुनः ।।

दिल्ल्यामपि प्रतीकारः दल - मध्ये सुनिश्चितः ।
महद्भिःसह महती जायते नीति - संगरः ।।

शोच्या दशा तु देशस्य कस्मिन्नुगस्तें पतिष्यति ।
सर्वासुदिक्षु विक्षोभः वर्तते जनमानसे ।।

पाकेन चीन - देशेन भारतस्य चतुर्दिशम् ।
सेनानां स्थापनं कृत्वा पंचशील - विनाशनम् ।।

पंजाबे हिंसकानां च बीभत्सं दृश्यमुल्बणम् ।
दृश्यतेऽहर्निशं - रौद्रं - प्रकाण्डं - रक्त संप्लुतम् ।।

बालाः पितृविहीनाश्च कन्याश्च मातृवंचिता। ।
गृहिण्यः पतिमुक्ताश्च विलपन्ति महीतले ।।

बैंकानां लुण्ठनं कृत्वा लक्षश: कोटिशस्तथा ।
रूप्याणामस्त्रघातेन शतश: मारिता जना: ।।

यत्र मानवता नष्टा विनष्टा सभ्यसंस्कृति ।
यत्र भूतं भारतभुवि तत् सर्वमनुभूयते ।।

बालानां रक्तपातेन नारीणामश्रुमोचनात् ।
कम्पितं वज्रमन कंसरावणयोरपि ।।

बाला: न घातितास्तत्र नार्यश्च नैव पीड़िता: ।
यवनानामांगले राज्ये नैतादृक् जनप्रपीड़नम ।।

वसयानेषु संसुप्ता विश्रान्ता: सुखमास्थिता: ।
निहता: राक्षसैर्दुष्टै सिक्खधर्मानुयायिभि ।।

कम्पितं न मन. दिल्ल्या राजसिंहासनास्थितम् ।
कम्पिता विश्वसंचारव्यवस्था प्राच्यपश्चिमा ।

धिक् दुष्टान् धिक् च धर्मान्धान् धिक्कार: रक्तबीजकान् ।
चण्डान् मुण्डान् कृतघ्नांश्च पाके शिक्षापरायणान् ।

नूरपुर कांगड़ा हि. प्र.

★

# पुरस्कृतिः

सम्पर्क –

श्री वसन्त त्र्यम्बक शेवडे
द्वारा श्री आर्, एम् सप्तर्षि
बी ४-१७ हनुमान घाट वाराणसी,

★

अशीतिवर्षदेशीय: श्री शेवडेमहोदयो मुम्बय्यां लब्धजनि: नागपुरेऽधिगतवर्णो वाराणसीं स्वनिवासयोग्यामवृणुत, मनीषी सोऽयं बाल्यादेव शाश्वतजीवातौ काव्यसंगुम्फनकर्मणि संलग्न: प्रथमतो माहाराष्ट्रीं पश्चात् सुरभारतीमशिश्रियत्, नेत्रवसु ग्रह बुधाकर (१९८२) मिते खिृश्चीन-वत्सरे उत्तरप्रदेश-संस्कृताकादेमीप्रतिष्ठानत: कालिदास - पुरस्कारेण तदग्रिमे वर्षे च विशेष-पुरस्कारेणायं सम्मानित:, पुनश्च वर्षद्वयानन्तरं राष्ट्रियया साहित्याकादेम्या सप्रशस्ति पुरस्कृत: ।

अमुना विन्ध्यवासिनी-विजयं शुम्भवधञ्चेति द्वे संस्कृतमहाकाव्ये रघुनाथतार्किकशिरोमणिचरितं श्रीकृष्णचरित मोतीबाबाजामदारचरितञ्च खण्डकाव्यानि अभिनवमेघदूतमिति दूतकाव्यमपि च व्यरचिषत, अमुष्य वह्निवसुग्रहराकापति (१९८५) खिश्चीनाब्द - प्रकाशितं "स्तवमञ्जूषा" संज्ञकं स्तोत्रकाव्यं परम्परापरिवृढमपि नवकाव्य-महिम्ना समञ्जसं बिलसति, तत्कृते मध्यप्रदेश संस्कृताकादेमी - प्रतिष्ठानं नवरचनोत्कर्षं संरक्षत् श्री वसन्तत्र्यम्बकशेवडेमहोदयं राष्ट्रमञ्चतो घोषितचरेण विंशतिसहस्र-रौप्यमुद्रात्मना कालिदास - पुरस्कारेण सादरं विभूषयते

श्री वसन्त त्र्यम्बक शेवडे का जन्म २ अक्टूबर, १९१७ को बम्बई में हुआ, आपने प्रारंभिक शिक्षा अमरावती तथा उच्चस्तरीय शिक्षा नागपुर में प्राप्त की, मातृकुल एवं पितृकुल के संस्कृत-भाषानुरागी होने के कारण प्रारम्भ से ही संस्कृत भाषा के प्रति आपकी उत्कट अभिरुचि रही, श्री शेवडे विद्यार्थी वय से ही मराठी कविताएँ लिखने लगे थे, बाद में केवल संस्कृत में काव्य-रचना करने लगे, संस्कृत साहित्य के अतिरिक्त व्याकरण और न्याय-शास्त्र में भी आपका सहज अभिनिवेश है -

आपको १९८२ में उत्तरप्रदेश संस्कृत अकादेमी, लखनऊ से कालिदास पुरस्कार और उसके अगले वर्ष विशेष पुरस्कार तथा १९८५ में साहित्य अकादमी, दिल्ली द्वारा मौलिक संस्कृत रचनाओं के लिए पुरस्कृत किया गया है।

श्री शेवडे की प्रमुख रचनाओं में विन्ध्यवासिनी-विजयम् एवं शुम्भवधम् महाकाव्य, श्री रघुनाथतार्किक शिरोमणिचरितम्, श्रीकृष्ण-चरितम् एवं श्री मोतीबाबा-जामदारचरितम् खण्डकाव्य तथा अभिनवमेघदूतम् दूतकाव्य उल्लेखनीय हैं।

श्री वसन्त त्र्यम्बक शेवडे को १९८५ में प्रकाशित पारम्परिक विषय पर नवीन काव्य शैली की रचना "स्तवमंजूषा" के लिए, अभिनव रचना-धर्मिता तथा भाषा-प्रौढ़ि को संरक्षण प्रदान करते हुए मध्यप्रदेश संस्कृत अकादेमी द्वारा अखिलभारतीय कालिदास पुरस्कार (रुपये २०,०००) से सादर सम्मानित किया जाता है।

—

सम्पर्क —
पं० बाबूलाल शुक्ल शास्त्री
शोध अधिकारी
कालिदास अकादेमी, वि. वि. मार्ग उज्जैन

षष्टिवर्षीयः श्रीशुक्ल उज्जयिनीजनुः संस्कृत मनीषी, असौ त्रयस्त्रिंशत् समाः प्रादेशिकीं शिक्षणसेवां विधाय लब्धक्षणः कालिदासाकादेमी-प्रतिष्ठान आचार्यकुल परिबर्हं कलयति, सुरभारती-नाट्य-सन्दर्भग्रनां चिरसारस्वत-

साधनं विदधताऽमुना नाट्य - सम्बन्धिनः प्रायस्त्रिंशद् ग्रन्था यथाशास्त्रं सम्पाद्य प्रकाशमनायिषत-उत्तरप्रदेश-शासनेन विदुषोऽस्य विद्धशालभञ्जिका प्रकाशनं पुरस्कृतम्, मध्यप्रदेश-साहित्यपरिषदा चैव नेत्रवसुग्रहचन्द्र (१९८२) ख्रिश्चीनवत्सरे निरन्तर शोधनिबन्धनं कृतमभिनन्दनं मनीषिण ।

अमुष्य प चाशीत्यधिकैकोनविंश (१९८५) ख्रिश्चीनाब्द-प्रकाशितः संस्कृतसाहित्य-समीक्षणप्रवणो "हि दीनाट्यशास्त्रचतुर्थभाग" संज्ञो ग्रन्थः प्रकृष्ट-सारस्वतव्यतिकरस्य चरमांशभूतो बिलसति, तत्कृते मध्यप्रदेश संस्कृताकादेमीप्रतिष्ठानं नव्य - मनीषोत्कर्षसंरक्षन् श्रीबाबूलालशुक्ल-शास्त्रिमहोदयं प्रदेशमञ्चतो घोषितचरेण समद्विभक्त-दशसहस्र-रौप्यमुद्रात्मना भोजपुरस्कारेण सादरं विभूषयते ।

पं० बाबूलाल शुक्ल शास्त्री का जन्म १६ मार्च, १९२७ को उज्जैन में हुआ, आप ३३ वर्ष तक म प्र. शासकीय शिक्षण-सेवा के अनन्तर संप्रति कालिदास अकादेमी, उज्जैन के आचार्य-कुल में कार्यरत है ।

श्री शुक्ल सुदीर्घकाल से नाट्यशास्त्र एवं संस्कृत नाटकों का गहन अध्ययन करते रहे है आपने भरत के समूचे नाट्यशास्त्र का समीक्षात्मक हिन्दी रूपान्तरण तथा नाट्य-सम्बन्धी लगभग ३० ग्रन्थों का सम्पादन एवं प्रकाशन किया है, उत्तरप्रदेश शासन द्वारा विद्धशालभंजिका के प्रकाशन पर आपको पुरस्कृत किया गया है, १९८२ में मध्यप्रदेश साहित्य परिषद् ने निरन्तर शोध एवं लेखन-कार्य के लिये मान्य संस्कृत - मनीषी के रूप में श्रीशुक्ल का अभिनन्दन किया है

संस्कृत साहित्य - समीक्षा के क्षेत्र में इनका "हिन्दी नाट्यशास्त्र चतुर्थ भाग" १९८५ में प्रकाशित हुआ है, यह नाट्यशास्त्र का अन्तिम भाग है, पं० बाबूलाल शुक्ल शास्त्री की अजस्र नाट्यसमीक्षा को संरक्षण प्रदान करते हुए उन्हें इस मौलिक प्रस्तुति के लिए, मध्यप्रदेश संस्कृत अकादेमी द्वारा दो पुरस्कार ग्रहीताओं में विभक्त प्रादेशिक भोज पुरस्कार रुपये १०,००० (प्रत्येक को रुपये पांच हजार) से सादर सम्मानित किया जाता है ।

सम्पर्क ··
डा० जयकुमार जलज
३० इन्दिरा नगर रतलाम

त्रिपञ्चाशद्-बर्षदेशीयः श्रीजलजो ललितपुरे जन्म लेभे, उच्चशिक्षाः प्रयागोज्जयिन्योरमुष्य समजनिषत, सुदीर्घ - शिक्षणव्रतिना विश्रुत-राष्ट्रभाषा-वैशारदीयेन श्रीजलजेन सम्प्रति रतलामवर्ति शासकीयस्नातकोत्तरमहा-विद्यालये प्राचार्यपदमलङ्क्रियते, नेत्रदर्शननिधिविधौ (१९९२) ख्रिश्चीनवत्सरे प्रकाशितोऽस्य "ध्वनि और ध्वनिग्रामशास्त्र" ग्रन्थः कामताप्रसादगुरुपुर-

# सम्पादकीयम्

## शिमलायाम्

## अ० भा० लेखिकासम्मेलनम्

पूर्वनिर्धारितं संस्कृतलेखिकासम्मेलनम् सितम्बरमासस्य ५, ६ दिवसयोः शिमलायां जायते इति सुनिश्चितम् । सितम्बरमासस्य ४ थं-दिवसादेवास्य महोत्सवस्य शुभारम्भः कार्यालये मांगलिकहवनपूजादिभिः साकं स्यात् । पञ्चमे दिवसे सितम्बरस्य मध्याह्नोत्तर कार्यक्रमाः प्रारप्स्यन्ते । इदानीं तिथिपरिवर्तनं न स्यादिति सुनिश्चितम् ।

अत आगमनेच्छुभिः निम्नसंकेते पत्रव्यवहारो विधेयः । आगन्तुकातिथीनां भोजननिवासव्यवस्था संस्थानेन करिष्यते, ५, ६ तिथिकृते । अतः-प्रार्थ्यतेऽस्माभिरियं -- अधिकाधिकसंख्यायां संस्कृतज्ञैः स्वोपस्थित्या: स्वीयमेवेदं सम्मेलनं द्विदिवसीयं सर्वथा सम्पन्नतां नेयम् ।

सम्पर्कः

आदर्श सचिव संस्कृतशोधसंस्थान

भारती विहार, मशोबरा शिमला-१

★

## नवराष्ट्रपतिस्वागतम्

श्री रामस्वामि वेंकटरमणः— भारतस्याष्टमो राष्ट्रपतिः प्रबलबहुमतेन देशस्य सर्वोच्चासनमारूढः-इति माङ्गलिकेऽस्मिन्नवसरे दिव्यज्योतिः परिवारः प्रसन्नतां प्रकटयति शुभकामनाश्च करोति नवराष्ट्रपति-सफलतायै, नैरुज्याय दीर्घजीवनाय च । वेंकटमहाभागानां पूर्वजाः संस्कृतज्ञाः आसन् । स्वयमपि-एते संस्कृतस्य ज्ञानं धारयन्ति संस्कृत प्रति च निष्ठावन्तः । संस्कृतोत्थानाय भवद्भिरपि नूतनराष्ट्रपतित्वेन कश्चन सहयोगो विधेय इति प्रार्थ्यते ।

★

## वीरभद्र मिश्रस्य संस्कृतपदयात्रा सफला भवतु

नवशिक्षापाठ्यक्रमे संस्कृतस्य समुचितं स्थानं स्यादेतस्य कृते जनजागरणाय सर्वगंधायाः सम्पादकेन डा. श्री वीरभद्रमिश्रेण लखनऊतः सपरिवारं दिल्ली नगराय पदयात्रा समारब्धा ।

प्रथमशिविरे बरुणी का तालाब ग्रामे सार्वदेशिकसंस्कृतसमन्वय समितिद्वारा एका विचार गोष्ठी-संस्कृतकविगोष्ठी च समायोजिता । भारतराष्ट्रस्य एकतायै-संस्कृतप्रसार एवामोघमस्त्रम् इति डा. वीरभद्रमिश्रेण प्रतिपादितम् । संस्कृतं सरलातिसरलं इति रमेशचन्द्रशास्त्रिणा सोदाहरणं संसाधितम् । श्रीमती अनितामिश्रा लोरीगीतं संस्कृते गीतवती । पदमाना संस्कृतदिवसे ९-८-८७ दिनांके दिल्ली नगरं प्राप्स्यति । वयं सर्वात्मना यात्रायाः साफल्याय शुभकामनाः प्रेषयामः स्वसमर्थनं च यच्छामः ।

— सम्पादकः

R. N.6384/57 Registered No. 10

# उत्तर प्रदेश संस्कृत अकादमी

संस्कृत-भवनम्, न्यू हैदराबाद, लखनऊ-२२६००७

## विशिष्ट पुरस्कार

उत्तर प्रदेश संस्कृत अकादमी, पच्चीस हजार (२५,०००) रुपये के तीन विशिष्ट पुरस्कारों हेतु संस्कृत विद्वानों से आवेदन पत्र आमंत्रित करती है।

संस्कृत जगत में प्रचार—प्रसार एवं विकास कार्य में निरन्तर विशिष्ट सेवा के लिए। इस विशिष्ट सेवा की अवधि कम से कम ३५ वर्ष हो तथा संस्कृत साहित्य में ग्रन्थों के प्रणयन द्वारा भी महत्वपूर्ण योगदान किया गया हो। विद्वान की आयु ६० वर्ष या उससे अधिक होनी चाहिए। विशेष परिस्थितियों में आयु प्रतिबंध को शिथिल किया जा सकता है। ऐसे अर्ह संस्कृत विद्वान यदि चाहें तो अपने व्यक्तित्व का विवरण स्वयं अथवा किसी अन्य परिचित विद्वान से अपने हाल के पासपोर्ट आकार के एक छायाचित्र (फोटो) सहित ३५ अगस्त ८७ तक भेज सकते हैं।

## नामित पुरस्कार:

उत्तर प्रदेश संस्कृत अकादमी की पुरस्कार योजना के अन्तर्गत निम्नलिखित नामित पुरस्कारों हेतु कलेण्डर वर्ष १९८६ में प्रकाशित मौलिक तथा उत्कृष्ट संस्कृत रचनायें लेखकों एवं प्रकाशकों से ३० अगस्त ८७ तक आमंत्रित की जाती हैं।

प्रत्येक पुरस्कार १०,००० (दस हजार रु.) का होगा।

(क) कालिदास पुरस्कार (एक)—१९८६ की सर्वोत्कृष्ट काव्य रचना के लिए।

(ख) बाणभट्ट पुरस्कार (एक)—१९८६ की सर्वोत्कृष्ट गद्य रचना के लिए।

(ग) शंकर पुरस्कार (एक)—१९८६ की सर्वोत्कृष्ट दर्शन रचना के लिए।

लेखक—प्रकाशक को पुस्तक की आठ प्रतियां अकादमी को भेजनी होगी, जो वापस नहीं की जायेगी। विशेष विवरण हेतु उक्त पुरस्कारों से संबन्धित मुद्रित सामग्री (फार्म) अकादमी कार्यालय से निःशुल्क प्राप्त किये जा सकते हैं।

पी. डी. चतुर्वेदी
निदेशक

उत्तरे भारते येन संस्कृतं सेवितं सदा ।
सोऽयं गिरिधरः शर्मा यशस्कायेन जीवति ॥
दिव्यज्योतिः
र्षम् ३१
संस्कृतसचित्रमासिकम्
अङ्कः १२
अयं वे.राघव. श्रीमान् दाक्षिणात्यः सुधिर्महान् ।
संस्कृताध्यापको योऽभूत् संस्मरामोऽद्य तं हृदा ॥
मला, सितंबर, १९८७,

# विषयानुक्रमः



## दिव्यज्योतिः

हिमाचल प्रदेश पंजाब-हरियाणा-जम्मूकश्मीर - मध्य प्रदेश—राजस्थान—महाराष्ट्र उत्तरप्रदेश शासन-स्वीकृत केन्द्रशासनपुरस्कृतं सचित्र संस्कृतमासिकम्।

पत्रस्य उद्दश्यानि तथा नियमाः

सरल सरस-सुबोध-साधनैः सर्वस्मिन् संसारे संस्कृतस्य प्रसारः, साहित्यान्तर्गतानां सकलकलानां समन्वेषणं, संसारस्य हितसम्पादनम्, एवं लौकिक - अलौकिकस्वातन्त्र्यस्य प्राप्तिः।

"दिव्यज्योतिः" प्रतिमासं पञ्चदशतारिकायाम् (आङ्गलमानेन) प्रकाशितं भवति
पत्रस्य वार्षिक मूल्य २० रु० अर्धवार्षिकं १५ रु० एकस्याङ्कस्य च रु० १-७५ भवति।
वर्षारम्भः आश्विन—मासतः भवति ग्राहकः कस्मादपि मासाद् भवितुं शक्नोति।
ग्राहकैः, "सम्पादक, दिव्यज्योतिः, भारती विहार, मशोबरा, शिमला-१७१००७ हि० प्र०"
इति संकेते धनादेशेन वा. शु, प्रेषणीयम्।

## परिचयः


संस्थापकाः तथा आद्यसम्पादकाः आचार्यश्रीदिवाकरदत्त शर्माणः, — दूरभाषः 3859
प्रधानसम्पादकः— डा० केशव शर्मा एम ए., एम, फिल, साहित्यरत्नम् — ,, 8-200
दिव्यज्योतिः कार्यालयः भारती विहारः, मशोबरा, शिमला-७ (हि. प्र.)
मुद्रकः प्रकाशकः—

भारतीमुद्रणालय भारती विहार, मशोबरा-१७१००८ शिमला (हि. प्र,)
स्वामी.- श्रीमती आचार्य रत्नकुमारी शर्मा

❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋

सितम्बर १९८७ आश्विनः २०४४ – वर्षम्–३१ अङ्कः १२

वार्षिक मूल्यम् २० रु०

गताङ्कादग्रे

लघूपन्यासः–

# शिखा

—— केशवचन्द्रः

यथाभिरुचि कर्म ।

अत्राऽपि तथा करोमि   किं पार्थक्यम्... ?

गृहेऽस्मिन् स्वतन्त्रता कुतः ?

तर्हि भवती गृहं परित्यक्तवती ?

वचनेऽस्मिन् शम्पा किंचित् शङ्किता किन्तु आभिजात्यव्याजेन वसनाञ्चलं प्रसार्य सहसा उपनेत्र नयने निहितवती द्वारमुखमागम्य सा अवदत् ।

मद्विषये चिन्ता भवेदेव परं यः संस्थायाः संस्थापकः यो वा परिचालकः तस्य किंचित् महल लक्ष्यं वर्त्तते । तेन तस्य व्यक्तिगतजीवनं प्रभावितं भवति । साधारण-जनेन सह तस्य तुलना अनावश्यकी । मा अन्यथा चिन्तयतु । प्रथमतः अस्माकं समितौ सदस्या भवतु । अनन्तरं सर्वं ज्ञास्यति । भवतु... । अन्यद् अनदा । नमस्ते __ ।

शम्पा त्वरया प्रस्थिता । गतिताले तस्या अभिमानं स्फुटम् । उपनेत्रमार्गे आधुनिकता सुन्दरी । करचालने आत्मदर्शनलिप्सा वासस्विनी । अञ्चलरङ्गे तरङ्गः प्रासङ्गिकः उद्धताऽङ्गे रङ्गः तथापि निसङ्गः ।

अपरपार्श्वतो निःगम्य कुलमणि. अपृच्छत्

रजनि... ! केयं महिला... ?

एषा भ्रातरमन्विष्यति ।

किं कर्म __ ?

स्पष्टं न वदति ।

विमुखतया कुलमणिः अस्फुटमाह ।

जाने... । तस्य इयमेव गतिर्भवेत् अन्ततो नितरामनुतपेत । तदा न कोऽपि आत्मीयः स्यात् किमपि श्रोतुम् । गच्छतु... __ । कुपथस्तु तस्य जीवनम् । तस्य को वाऽन्यः पन्थाः स्यात्... ?

कुलमणिः कर्मव्यापृतः ।

मुन्नुः रजनीमपृच्छत् ।

भगिनि __ ! किमद्य कर्म __ ?

अरे ! तैलं नास्ति । इन्धनं नास्ति । गृहे बहिश्च प्रक्षालनाय जलं नास्ति

सद्यो गच्छामि हां ... ... शाकक्षेत्रे जलं न पतितम् ।

ग्रीष्मकालः वृष्टिस्तु न भवति बीजानि दिवत्रयत उप्तानि तथापि अङ्कुरो न दृश्यते तदर्थमपि जलम् आवश्यकम् ।

भवतु शीघ्रं समापय तैलादिकमानय । नोचेत् रात्रौ दीपोऽपि न ज्वलेत्

मुमुः यथापूर्वं व्यापृत :

उदात्तो दिनाँश अवसानसमयः । विरामे तपनो निस्तरुणः । अरुणो बरुणप्रियः । पादपशिखरे वारुणो करुणाश्रिता । धवलजलदे बलका बालायते बलाहको वायुवाहकः अवसन्न ग्रीष्मलीलायां छदियुगलमध्ये भास्कर आभाससर्वस्वः

रजनी सांध्यस्नानं समापितवती

इदानीं सरलवेशः । साधुपरिपाटी । अङ्गरागो निसर्गः । कर्मप्रवाहे निश्चपलः ससर्गः । पूजाप्रारूपे आवेगः अपवर्गः ।

घण्टिनिनादे रजनी दोप सज्जीकृतवती । शिथिलपूजनप्रकारे नेतिवादो विपरिणतः । अनुरणननिवहे सा तल्लीना अभूत । निमीलने आकृतिमान् अभूत् वैष्णवः कश्चित् राजकुमार निर्झरपुलिने स घोटकाद् अवातरत् । तत्रैव स मणिमाणिक्यादीन् प्लावयितुमारब्धः । तदा रजनी निर्झरधारे अवगाहते स्म माणिक्यादयः तस्याः चतुर्पार्श्वे कुण्डलीं विधाय समतरन् । रजनी तदा नितरां पुलकिता । साश्चर्यं च इतस्ततोऽपश्यत् । सहसा राजकुमार उपगत आर्द्रवसना रजनी अकम्पत । किन्तु राजकुमार निर्निमेष ताम् अपश्यत । ततः ताम् आलिङ्ग्य अचुम्बत् । ततश्च अश्वोपरि उपविश्य तां च अङ्के निधाय अधावत् ।

रजनी अतिशयेन भीता ।

झटिति सा अपश्यत् दीपशिखा वर्तिमूल ग्रसितवती । इष्टप्रकोष्टे तमसा राजेश्वरी सांध्यकुसुमेषु दवो राजसः । धूपधूमे द्वारदेश अन्धः अलिन्दकोणे नक्षत्र ज्योतिः संध्याशेषं सूचयति विहगविरुति रात्रिरसिका ।

रजनी दीपमदीपयत् ।

आलोके निलयो दीप्तः । रजनीनेत्रं व्यघूर्णयत् पुनः प्रकाशः ? किं निमित्तम् ... ? गृहार्थम् ... ? गृहम् ? गृहं संसारस्य प्रथमकल्पनम् ...... शरीरस्य नामान्तरम् ...... लयस्य निश्वसनम् ...... विलयस्य आश्वासनम् ... ... अङ्कुरस्य रहस्यवृत्तिः । ... पादपीभवनस्य मनोभूमिः । ...... महावृक्षस्य हृदयतलम् ... छायाया अन्तरालम् । ... प्रणवस्य अलक्ष्यकल्लोलम् ... ।

अन्वेषणे इदमेव प्रथमस्थलम् ... उपभोगे आनन्दकुसुमस्य प्रथमदलम् संचये दृश्यफलम्। निश्चये आत्मबलम् संशये इदमेव छलम् कर्मनिमित्तम् आलयः। श्रमार्थम् आश्रयः अपकर्मार्थं नरकः सुकर्मणि स्वर्गं निःसहाये अपवर्गः।

किन्तु निशान्तकृते गृहमिदम् असौविध्यस्य मण्डलम् अत्र स असौविध्य सृजति असौविध्ये पातनोपायं च चिन्तयति जना आगच्छन्ति विघ्नजाले निपतन्ति. धनानि निष्कारण हारयन्ति। वृथा विलपन्ति गृहं प्रत्यागच्छन्ति प्रतिश्रुतिः पापाय कल्पते अतस्ते स्वयम् अभिशप्ता इति चिन्तयन्ति। निशान्तमपि अभिशपन्ति निशान्तस्य हारये तु भिन्ननगरीषु प्रासादाः धवला दृश्यन्ते। कतिस्थलेषु सौधानाँ भित्तिस्थापनं भवति। आधारशिला च देवी सजायते।

संचयेषु यथेच्छ स्वीकृत्य व्ययीकृत्य च शम्पा आधुनिकी भवति नववसनेषु सा अभिनवायते। अलंकाराणाँ नवीनाकृतिषु शरीरं भूषयति। महाजनानां समक्षे समाजसेविका भवति विलासस्य व्यसनेषु सा प्रेयसी भवति। तस्या प्रतिकृतिः विलासस्य मद्यकूपीषु स्रोतस्विनी संजायते।

तद्दिने निशान्तः क्लान्तः।

रात्रौ द्वादशवादने शम्पा गृहं प्रत्यागता। यथापूर्वं वसनं परिवर्त्य शयितुमारभत। निशान्तः शय्यामधिरूढा। किन्तु नेत्रे निद्रा न भवति। सः कुप्यन् अवदत्।

कुत्र गताऽसीः ?

सम्मेलनमासीत्।

कि प्रतिदिनं सम्मेलनं भवति ?

किं त्वमद्य न गतवान् ?

मम तु सदा सम्मेलनं न भवति। कार्यालये कदा कदाचित् कार्याधिकं भवति। अतो विलम्बो भवति तव तु न कार्यालयः न वा कुत्र किमपि कार्यमस्ति।

किं मम बान्धवा न सन्ति ? सख्यो न सन्ति ?

ममाऽपि बन्धवः सन्ति। प्रतिदिनं नाऽहं तु तेषां गृहं गच्छामि।

तेषां निकटे न ते कर्माऽस्ति।

किं ते कर्म प्रतिनक्तम् ?

मम कर्मविषये किमर्थम् अद्य ते चिन्ता__ ?

त्वद्गतिरीतिषु मम सन्देहः।

निशान्त __! वचनं संयम्य वार्तालापं कुरु।

किमर्थम् ...... ?

विवाहतो वर्षद्वयं गतम्। कस्मिन् दिनेऽपि तव अभियोगो नासीत्। मम किमर्थम् __ ?

